स्मै । रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम ॥ ७५ ॥

पालाश्या उरा भवन्ति अहरहः । त्रिष्टुभौ । अस्मिन्मन्त्रे द्वितीयचतुर्थपादयोर्विरोधः । अश्वायेव तिष्ठते घासमस्मै । अत्र तिष्ठते अस्मै द्वे पदे परोक्षमग्निं ब्रूतः । तथाग्ने मा ते प्रति वेशारिषामेति । अग्ने ते इति प्रत्यक्षमग्निं ब्रूतः । नच वाक्यभेदेनार्थः सम्भवति । अतो द्वयोः पादयोर्लाक्षणिकया वृत्त्या व्याख्यायते । अहरहः सततम् अप्रयावमप्रमत्तम् भरन्तः आहरन्तः अशनानि । कथमिव । तदुपमेयो दर्शयति । अश्वायेति । अश्वस्येव स्थापयन्तो वयं घासं यवसम् अस्मै तव । किञ्च । रायस्पोषेण । दक्षिणा लक्षणेन धनस्य पोषेण । समदन्तः उत्साहयन्तः इषा अन्नेन समदन्तः त्वां हे अग्ने । मारिषाम । मा विनश्येम । ते तव प्रतिवेशाः प्रातिवेशिकाः । त्वदाश्रया इत्यर्थः ॥ अध्याहारेण वा व्याख्यायते । अहरहः अप्रमत्ता आहरन्तो ऽशनानि । पञ्च अश्वायेव दत्तं घासं भक्षितम् आदितं च अवतिष्ठते भस्म अस्मै अग्नये तदुद्वपन्तः । भस्मोद्वपनमपि पठितम् अत एवमपि व्याख्यायते । रायस्पोषेण समिषा मदन्त इत्यपि समानम् ॥ ७५ ॥

का० ( १६, ४, ४० ) पालाशीः प्रत्यृचमहरहरिति । अष्टाभिः प्रत्यृचमष्टौ पालाशीः प्रादेशमिताः समिध उख्येऽग्नावादधातीति सूत्रार्थः ॥ द्वे त्रिष्टुभौ नाभानेदिष्ठदृष्टे । हे अग्ने ! तव प्रतिवेशाः प्रातिवेशिकाः प्रत्यासन्नाः त्वदाश्रयाः सन्तो वयं मा रिषाम मा हिंसनं प्राप्नुमः मा विनश्येमेत्यर्थः । किं कुर्वन्तः अहरहः प्रत्यहं सन्ततमप्रयावमप्रमत्तं यथा तथा अस्मै अग्नये घासं समिद्रूपं भक्ष्यं भरन्तः सम्पादयन्तः प्रयवणं प्रयावः यु मिश्रणे घञ्प्रत्ययः नास्ति प्रयावः प्रमादो यस्यां क्रियायाम् । तत्र दृष्टान्तः अश्वायेव

तिष्ठते वाजिशालायामवस्थितायाश्वाय यथा प्रत्यहमप्रमादेन घासं यच्छन्ति तद्वत् । पुनः किं कुर्वन्तः रायः पोषेण धनस्य पुष्ट्या दक्षिणालक्षणेन इषा अन्नेन च सम्मदन्तः हर्षं कुर्वन्तः त्वामुत्साहयन्त इत्यर्थः ॥ ७५ ॥

**नाभा॑ पृथि॒व्याः स॑मिधा॒ने अ॒ग्नौ रा॒यस्पोषा॑य बृ॒हते ह॑वामहे । इ॒र॒म्म॒दं बृ॒हदु॑क्थं॒ यज॑त्रं॒ जेता॑रम॒ग्निं पृत॑नासु सास॒हिम् ॥ ७६ ॥**

नाभा पृथिव्या इति । नाभौ पृथिव्याः । एषाह नाभिः पृथिव्यै यत्रैतत्समिध्यन्ते । समिधाने संदीप्यमाने आहवनीयाख्ये अग्नौ । रायस्पोषाय धनस्य पोषाय । बृहते महते । हवामहे आह्वयामः । आग्नेयी अधिष्ठात्री देवता तदभिप्रायमेतत् । कथंभूतमग्निमित्यत आह । इरम्मदम् । इरयान्नेन माद्यति तृप्यति । बृहदुक्थं महच्छस्त्रम् । यजत्रं यजनीयम् जेतारं पृतनासु संग्रामेषु । सासहिम् सोढारम् अभिभवितारम् । स । धामिने अग्नाविति आहवनीयविषयोऽग्निशब्दः । जेतारमग्निमधिष्ठात्र्याग्निविषयः ७६ ॥

एषा ह नाभिः पृथिव्यै यत्रैष एतत्समिध्यत इति ( ६, ६, ३, ९, ) श्रुतेः पृथिव्या नाभा नाभौ विभक्तेराकारः पृथिवीरूपाया उखाया मध्ये समिधाने दीप्यमाने अग्नौ आहवनीयाख्ये अग्निं तदभिमानिनं देवं वयं हवामहे आह्वयामः किमर्थं बृहते रायः पोषाय प्रौढाय धनपोषणाय । कीदृशमग्निम् इरम्मदम् इरया अन्नेन माद्यति तृप्यति तुष्यतीति इरम्मदस्तम् उग्रम्पश्येत्यादिना खशि निपातः । बृहदुक्थं बृहन्ति महान्ति उक्थानि शस्त्राणि यस्य तम् । यजत्रं यजनीयम् । पृतनासु संग्रामेषु जेतारं जयशीलम् । सासहिं सहतेऽभिभवतीति सासहिस्तं सोढारमस्मच्छत्रूणमभिभवितारम् । अग्नावित्याहवनीयविषयोऽग्निशब्दः जेतारमग्निमित्यधिष्ठात्र्यग्निविषयः ॥ ७६ ॥

याः सेनाँ अभीत्वरीराव्याधिनीरुगणा उत। ये स्तेना ये च तस्करास्ताँस्ते अग्नेऽपिदधाम्यास्ये ॥ ७७ ॥

याः सेनाः अनुष्टुभः प्रागन्नपतीयायाः । सा तूपरिष्टा द्बृहती । याः सेनाः अभित्वरीः । इण् गतावित्यस्माद्धातोः इण्नशजिसर्तिभ्यः इति क्वरप्प्रत्ययः । ह्रस्वस्य पिति कृतीति तुगागमे कृते टिड्ढाणञिति ङीपि कृते इत्वरी इति सिद्धम् भवति इणः । अभियायिन्यः । आव्याधिनीः । आविध्यन्ति याः उगणा उत । उत शब्दोप्यर्थे । अपि च । उद्गूर्णगणाः । पृषोदरादिपाठान् मध्यमपदलोपः । येच स्तेना श्चौरा येच तस्कराः । तस्करस्तत्करोति यत्पापकमिति निरुक्ताः । तान्सर्वान् ते तव हे अग्ने आपिदधामि प्रक्षिपामि आस्ये मुखे भक्षणाय ॥ ७७ ॥

षडनुष्टुभः । याः काश्चित् परकीयाः सेनाः अभीत्वरीरभीत्यर्थः अभियायिन्यः अस्मदाभिमुख्येनागमनशीलाः अभियन्ति ता अभीत्वर्यः इण्नशजिसर्तिभ्यः क्वरबिति क्वरप् ह्रस्वस्य पितीति तुक् टिड्ढाणञ्द्वयसजित्यादिना ङीप् । उतशब्दोऽप्यर्थ उतापि च याः सेनाः आव्याधिनीः आ समन्ताद्विध्यन्ति ताः सर्वतोऽस्मांस्ताडयन्त्यः । उगणाः उद्गूर्णगणाः पृषोदरादिपाठान्मध्यमपदलोपः उद्यतायुधगणोपेतो बहुस्तोमा इत्यर्थः । ये च स्तेनाः गुप्तचराः ये च तस्कराः प्रकटचोराः तस्करस्तत्करोति यत् पापकमिति नैरुक्ताः ( निरु० ३, १४ ) । हे अग्ने ! तान् पूर्वोक्तान् सेनादीन् ते तव आस्ये मुखे अपिदधामि प्रक्षिपामि भक्षणाय दुष्टान् सर्वान् भक्षयेत्यर्थः ॥ ७७ ॥

दꣳष्ट्राभ्यां मलिम्लूञ्जम्भ्यैस्तस्कराँ २॥ उत । हनुभ्याꣳ स्तेनान् भगवस्ताँस्त्वं खाद सुखादितान् ॥ ७८॥

दंष्ट्राभ्याम् । दशनशीलाभ्यां दढाभ्याम् राक्षसिके इति ये

उच्येते ताभ्याम् मलिम्लून् मलिम्लूचः उक्ताः गूढा स्तेनतया म्लोचयन्ति अदृश्या भवन्ति जनेकक्षेचये जम्भ्यै स्तस्करान् जम्भावृतिसमाश्रिता जभ्याः ताभिः तस्करान् उत अपि । हनुभ्यां च हननशीलाभ्यां स्तेनान् हे भगवः हे भवन् महदैश्वर्ययुक्त । तान् त्वं खादा यथा सुखादिता भवति ॥ ७८ ॥

गुप्ताः प्रकटाश्चेति द्विविधाश्चोराः प्रकटा अपि पुनर्द्विविधाः अरण्ये मार्गे च प्रहृत्य प्रत्यहमेव पलायमानाः प्रकटाः ततोऽप्यतिप्रकटा निर्भया ग्रामेष्वेवागत्य वन्दीकाराः ते अत्र मलिम्लुच उच्यन्ते मलं पापाधिक्यमेषामस्तीति मलिनः तथाविधा भूत्वा म्लोचन्ति जने वने वा अदृश्या भवन्तीति मलिम्लुचः । दन्तपङ्क्तिमध्ये याभ्यां तीक्ष्णदन्ताभ्यां क्रमुकादिकं भक्ष्यते ते द्रंष्ट्रे राक्षसीसंज्ञे । ततः पुरोवर्तिनो बहिर्दृश्यमाना दन्ता जम्भ्याः जम्भावर्तिसाश्रिता जम्भ्याः । दन्तलीने तु हनू । दंष्ट्राभ्यां मलिम्लून् पीडयित्वा हे भगवः भगवन्महदैश्वर्ययुक्त पूजनीय ! तान् सर्वान् पूर्वोक्तान् सुखादितान् सुष्ठु खादितान् भक्षितान् पुनर्जीवनरहिता यथा भवन्ति तथा खाद भक्षय । सुखादितानपेतान् कृत्वेति वा ॥ ७८ ॥

ये जनेषु मलिम्लंव स्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्ताँस्ते दधामि जम्भयोः ॥ ७९ ॥

जनेषु मलिम्लुचः जनेषु स्तेनासः आज्जसेरसुक् तस्कराः । वने वनाश्रिताः । ये च कक्षेषु । नदीपर्वतकक्षेषु अघायवः । छन्दसि परेच्छायामिति वक्तव्यम् इत्यघशब्दात्क्यच् क्याच्छन्दसीति उप्रत्ययः अघं परस्मै इच्छन्तीत्यघायवः तान् तव दधामि स्थापयामि जम्भयोः भक्षणाय ॥ ७९ ॥

जनेषु ग्रामवर्तिषु ये मलिम्लुचः पूर्वोक्ता वन्दीकारा ये च वने स्तेनासः स्तेनाः आज्जसेरसुरक् गुप्तचोराः तस्कराः प्रकटचोराः ये च कक्षेषु नदीपर्वतगहनेषु अघायवः परेषां पापाभिलाषुका। हे

अग्ने ! तान् चतुर्विधान् ते तव जम्भयोः दंष्ट्रयोर्दधामि स्थापयामि भक्षणायेत्यर्थः । अघं परस्येच्छन्ति ते अघायवः छन्दसि परेच्छायामिति वक्तव्यमिति अघशब्दात् क्यच् क्याच्छन्दसीति उप्रत्ययः ॥ ७९ ॥

यो अ॒स्मभ्य॑मराती॒याद्यश्च॑ नो॒ द्वेष॑ते॒ जनः॑ । निन्दा॒द्यो अ॒स्मान् धिप्सा॑च्च॒ सर्वं॒ तं भ॑स्म॒सा कु॑रु ॥ ८० ॥

यो अस्मभ्यम् यो मनुष्य अस्मभ्यम् अस्मदर्थम् अरातीयात् । अरातिरिवाचरेत् । अरातिः शत्रुः । यश्च नः अस्मान् द्वेषते द्वेष्टिजनः । निन्दयाति योऽस्मान् धिप्साच्च दम्नोतेः सन्यभ्यासलोपः । दम्भितुमिच्छाति यः । तान् तव दधामि । सर्वमेतच्छत्रुजातं भस्मसा कुरु । भस्मसेति शब्दोऽनुकरणे डाजन्तः । यथा भक्षमाणा भस्मसाशब्दं कुर्वन्ति तथा कुर्वित्यर्थः ॥ ८० ॥

पूर्वं चोरभेदा दर्शिताः इदानीं शत्रुभेदा उच्यन्ते । ते चतुर्विधाः अरातयो द्वेषिणो निन्दका जिघांसवश्चेति तत्र दातव्यत्वेन प्राप्तं धनं यो न ददाति सोऽरातिः कार्यविघातं यः करोति स द्वेषी वाग्दौर्जन्यमात्रं यः करोति स निन्दकः हन्तुकामश्चतुर्थः तान् अग्नये समर्पयति । यो नरः अस्मभ्यमस्मदर्थं अरातीयात् अरातीयति अरातिरिवाचरति अरातित्वमिच्छति आचार इच्छायां वा क्यच्प्रत्ययः । यश्च जनो नोऽस्मान् द्वेषते कार्यनाशेनाप्रीतिमुत्पादयति द्विष अप्रीतौ बहुलं छन्दसीति ( पा० २, ४, ७३ ) शपो लुगभावः । योऽप्यन्योऽस्मान्निन्दात् निन्दति वाचा दुःखं ददाति । यश्चापरोऽस्मान् धिप्सात् धिप्सति दम्भितुमिच्छति जिघांसति दम्भेः सनन्तस्य दम्भ इच्चेति अभ्यासलोप इकारश्च । इतश्च लोपः परस्मैपदेष्विति इकारलोपः लेटोऽडाटाविति आडागमोऽरातीयादित्यादिषु त्रिष्वपि । हे अग्ने ! तं सर्वं जनं चतुर्विधं भस्मसा कुरु चूर्णीकुरु चर्वित्वा भक्षयेत्यर्थः भस्मसाशब्दो डाजन्तो निपातः चर्वणजन्यशब्दानुकरणवाची ॥ ८० ॥

सᳪं॑शितं मे॒ ब्रह्म॒ सᳪं॑शितं वी॒र्य॑ᳪं॒ बल॑म् । सᳪं॑शितं क्ष॒त्रं जि॒ष्णु यस्या॒हमस्मि॑ पु॒रोहि॑तः ॥ ८१ ॥

पुरोहितस्यादधाति । संशितं मे ब्रह्म । शो तनूकरणे उपसर्गव्यत्ययः । निशितं तीक्ष्णीकृतं मे मम ब्रह्म । निशितं च वीर्यम् वीरकर्म बलम् निशितं च क्षत्रं जिष्णुर्जयनशीलम् यस्य अहम् अस्मि भवामि पुरोहितः ॥ ८१ ॥

का० [ १६, ४, ४१—४२ ] उपोत्तमां क्षत्रियस्येच्छन्नुत्तमां पुरोहितस्य । क्षत्रिययजमानस्य द्वादशीं संशितामित्येतामिच्छया दधाति पुरोहितयजमानस्यान्त्यामुदेषामित्येतामिच्छया दधाति एकादश नित्याः सर्वासामृत्रामन्ते स्वाहाकारश्चेति सूत्रार्थः ॥ मे मदीयं ब्रह्म ब्राह्मण्यं शंसितं सम्यक् तीक्ष्णीकृतं शास्त्रोयमार्गवर्ति कृतमित्यर्थः शो तनूकरणे क्तान्तः । वीर्यमिन्द्रियशक्तिः बलं शरीरशक्तिः तदुभयं संशितं स्वकार्यक्षमं कृतम् । तथा यस्य क्षत्रस्याहं पुरोहितोऽस्मि भवामि तन्मदीयं क्षत्रं क्षत्रजातं जिष्णु जयनशीलं यथा भवति तथा संशितं तीव्रं कृतम् ॥ ८१ ॥

उदे॑षां बा॒हू अ॑तिर॒मुद्वर्चो॒ अथो॒ बल॑म् । क्षि॒णोमि॒ ब्रह्म॑णा॒ऽमित्रा॒नुन्न॑यामि॒ स्वाँ२॥ अ॒हम् ॥ ८२ ॥

उदेषाम् क्षत्रियस्य उदातिरम् उद्धारितवान् अस्मि एषां योद्धॄणां बाहू उद्वर्चः उद्धारितवान् वर्चः । अथो अपि च बलम् । क्षिणोमि च विनाशयामि ब्रह्मणा पुरोहितसंज्ञेन अमित्रान् । उन्नयामि उद्गमयामि च स्वान् पुत्रपौत्रान् अहम् ॥८२॥

एषां स्वकीयानां राजब्राह्मणादीनां मध्ये एकैकस्य बाहू भुजौ उदातिरमुत्कर्षेण वर्धितवानस्मि तिरतिर्वृद्ध्यर्थः लौकिकोक्तिरियं लोके हि योऽन्यस्मादुत्कृष्टो भवति जना एवं वदन्ति अयं स्वहस्तमुपरि कृतवानिति । वर्चः कान्तिः तामप्युदतिरम् अथो अपि च बलं शरीरशक्तिमुदतिरम् । ब्रह्मणा मन्त्रसामर्थ्येन अमित्रान् शत्रून् क्षिणोमि क्षीणान् करोमि । स्वान् स्वकीयान् पुरुषान् पुत्र-

पौत्रादीनहमुन्नयामि उत्कर्षं प्रापयामि । एवं त्रयोदश समिन्मन्त्रा उक्ताः ॥ ८२ ॥

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र-प्रं दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ ८३ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
एकादशोऽध्यायः ॥ ११ ॥

---

समिधमादधाति । अन्नपते । अग्ने अन्नस्य स्वमंशं नः अस्मभ्यं देहि अनमीवस्य । अमीवा व्याधिः तद्रहितस्य । शुष्मिणः । शुष्ममिति बल नाम । बलवतः । किञ्च । प्रप्रदातारन्तारिषः । अतिशयार्थ उपसर्गाभ्यासः । महता प्रकर्षेणान्नस्य दातारम् प्रदातारं प्र तारिषः प्रवर्द्धय । किञ्च । ऊर्ज्जमन्नं नः अस्मभ्यं धेहि देहि । द्विपदे चतुष्पदे । द्विपाद्भ्यश्च तुष्पाद्भ्यश्च ॥ ८३ ॥

इति उव्वटकृतौ मन्त्रभाष्ये एकादशोऽध्यायः ॥ ११ ॥

---

का० ( १६, ६, ८, ) न्यज्य समिधं व्रते प्रत्ते प्रत्तेऽन्नपत इत्याधानम् । अध्वर्युणा व्रतपयसि दत्ते तत्र समिधमभ्यज्य दीक्षित उख्येऽग्नावादध्यात् प्रत्ते इति वीप्सा प्रतिव्रतं समिदाधानप्राप्त्यर्था इति सूत्रार्थः ॥ आग्नेयी उपरिष्टाद् बृहती अष्टार्णात्रिपादा चतुर्थो द्वादशार्णः हे अन्नपते !* अन्नस्य पालक अग्ने ! नोऽस्मभ्यमन्नस्य देहि कर्मणि षष्ठी अन्नं प्रयच्छ यद्वान्नस्य स्वमंशं देहि । कीदृशस्यान्नस्य अनमीयस्य नास्ति अमीवा व्याधिर्येन तदनमीवम् तस्य । शुष्मिणः शुष्ममिति बलनाम ( निघ० २, ९, ११ ) शुष्मं बलं विद्यते यस्मात्तत् शुष्मि तस्य । रोगनाशकं बलहेत्वन्नं प्रयच्छेत्य-

र्थः । किञ्च दातारं प्रतारिषः अन्नस्य दातारं प्रकर्षेण वर्धय प्रसमुपोदः पादपूरण इति पादपूर्त्यै प्रोपसर्गस्य द्वित्वम् अतिशयार्थे वोपसर्गाभ्यासः अभ्यासे भूयांसमर्थं मन्यन्त इति यास्कोक्तेः (निरु० १०, ४२) । तॄ प्लवनतरणयोः लेटो मध्यमैकवचनं सिब्बहुलं लेटीति सिप्प्रत्ययः आर्धधातुकस्येतीट् छान्दसी धातोर्वृद्धिः लेटोऽडाटाविति अडागमः इतश्च लोप इति लेट इकारलोपे रुत्वविसर्गौ तारिष इति रूपम् । किञ्च नोऽस्माकं द्विपदे मनुष्ये पुत्रादौ चतुष्पदे गवादौ च ऊर्जमन्नं धेहि धारय यद्वा द्वौ पादौ यस्य स द्विपात्तस्मै द्विपदे चत्वारः पादौ यस्य स चतुष्पात् तस्मै पादः पत् पादस्य लोपोऽहस्त्यादिभ्य इति अन्तलोपे पदादेशः द्विपदे मनुष्याय चतुष्पदे गवादये अन्नं धेहि देहि जातावेकवचनम् सर्वेभ्यो नरपशुभ्योऽन्नं देहीत्यर्थः ॥ ८३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
उखादिसमिदाध्यन्तोऽध्याय एकादशोऽगमत् ॥ ११ ॥

त्या दीप्त्या व्यद्यौत् विद्योतते द्युत द्योतने व्यत्ययेन शपि लुप्ते वृद्धौ लङि रूपम् । कीदृशो रुक्मः दृशानो दृश्यमानः शानचि शपो लुक् प्रत्यक्षमुपलभ्यमानः । श्रिये जनेभ्यः श्रियं दातुम् । दुर्मर्षं दुर्मर्षमनवखण्डितं केनाप्यतिरस्कार्यं वा आयुः जीवनं रुचानः रोचत इति रुचानो वाच्छन् रोचतेः शानचि बहुलं छन्दसीति ( पा० २, ४, ७३ ) शपोलुक् । सोऽयमग्निर्वयोभिरन्नैः पशुपुरोडाशप्रभृतिभिरमृतोऽमरणधर्मा अभवत् । यद्यस्मात् कारणात् द्यौर्द्युलोकवासी देवगण एनमग्निमजनयत् जनितवती । कीदृशी द्यौः सुरेताः शोभनं रेतोऽग्निरूपं यस्याः सा तस्मादमृतत्वं युक्तम् ॥ १ ॥

**नक्तोषासा समनसा विरूपे धापयेते शिशुमेकं॑ समीची । द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः ॥ २ ॥**

द्वाभ्याम् परि गृह्णाति । नक्तोषासा । आग्नेयो त्रिष्टु प् । नक्ता रात्रिः । उषा शब्देनाहरुच्यते । रात्र्यहनी । समनसा एकमनस्के विरूपे । नानारूपे कृष्णा रात्रिः शुक्लमहः । धापयेते पाययेते । सायं प्रातरग्निहोत्रादिभिः कर्मभिः । शिशुं बालमिव मातापितरौ एकम् अग्निलक्षणम् । समीची सम्यगञ्चते संश्लिष्टे वा । ये इत्थं भूते ताभ्यां गृह्णामीति शेषः हरन् । जपति । द्यावाक्षामा । द्यावापृथिव्यौ यो रुक्मः रोचनः अन्त र्विभाति अन्तरा दीप्यते तं हरामीति शेषः । निदधाति । देवा अग्नि न्धारयन्द्रविणोदाः । यमाग्निं देवा द्रविणोदाः धनदातारो धारितवन्तः तमहं धारयामीति शेषः ॥२॥

का० ( १६, ५, ३ ) परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिमृह्णाति नक्तोषासेति वर्तुलाभ्यामुखाधारणसाधनरूपाभ्यामिण्ड्वाभ्यामुखां गृह्णातीति सूत्रार्थः । अग्निदेवत्या त्रिष्टुप् कुत्सदृष्टा अर्धमुखाग्रहणे विनियुक्तम् । नक्तोषासा नक्तं च उषाश्च नक्तोषसौ विभक्तेराकारः संहितायां दीर्घः नक्तं रात्रिः उषा अहः नक्तोषसौ रा-

त्रिदिवसौ एकमग्निं धापयेते पाययेते सायम्प्रातरग्निहोत्रादिकर्मभिः तर्पयेते इत्यर्थः। तत्र लुप्तोपमानम् शिशुं बालं मातापितराविव॥ धेट् पाने हेतुमति चेति णिच् आदेच उपदेशेऽशितीति आकारे अर्तिह्रीत्यादिना ( पा० ७, ३, ३६ ] पुक्। कीदृश्यौ नक्तोषसौ समनसा समनसौ समानं मनो ययोस्ते एकमनस्के परमैकमत्ययुक्ते इत्यर्थः। विरूपे विलक्षणं रूपं ययोस्ते विरूपे कृष्णा रात्रिः शुक्लमहः। समीची सम्यगञ्चतस्ते समीच्यौ सम्यगञ्चने समन्विते संश्लिष्टे वा पूर्वसवर्णो विभक्तेः। ये इत्थम्भूते रात्र्यहनी ताभ्यामिण्ड्वारूपाभ्यामुखां गृह्णामीति शेषः॥ का० ( १६, ५, ४ ) हरति द्यावाक्षामेति। आहवनीयोपरिस्थामुखामिव मिण्ड्वाभ्यामादाय द्यावेति पादेनासन्दीं प्रति तां हरतीति सूत्रार्थः॥ द्यावाक्षामा द्यौश्च क्षामा पृथिवी च द्यावाक्षामा दिवो द्यावादेशः विभक्तेर्लोपः द्यावापृथिव्योरन्तर्मध्ये अन्तरिक्षे च यो रुक्मः रोचमानोऽग्निर्विभाति प्रकाशते तं हरामीति शेषः॥ का० ( १६, ५, ५ ) आहवनीयस्य पुरस्ताद्वात्रासन्दीवदासन्द्यां चतुरस्राङ्ग्यां शिक्यवत्यामादधाति देवा अग्निमिति। आहवनीयात् पूर्वदिशि भूमौ स्थापितायामासन्द्यामुखां निदधाति देवा इति पादेन उद्वात्रासन्दीवादिति प्रादेशमात्रपाद्यामौदुम्बर्यामरत्निमात्राङ्गयां मुञ्जरज्वा व्युतायामिति लभ्यते तथा चतुरस्राङ्ग्यां चतुरस्राणि चतुष्कोणानि अङ्गानीषोपलपादरूपाणि यस्यास्तस्यां सशिक्यायां चेति सूत्रार्थः॥ देवाः दीव्यन्ति व्यवहरन्तीति देवाः प्राणा यजमानस्य एतमग्निं धारयन् अडभाव आर्षः। कीदृशा देवाः द्रविणोदाः यागद्वारेण द्रविणं धनरूपं बलं ददति प्रयच्छन्ति ते। तमहं धारयामीति शेषः। अग्निं धारयन् द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा इति तैत्तिरीयश्रुतेर्देवशब्देन प्राणा उच्यन्ते॥ २॥

**विश्वा॑ रू॒पाणि॒ प्रति॑मुञ्चते क॒विः प्रासा॑वीद्भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे। वि नाक॑मख्यत् सवि॒ता वरे॑ण्यो॒ऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति॥ ३॥**

शिक्यपाशं प्रतिमुञ्चतो विश्वा रूपाणि जगती सावित्री।

यः विश्वानि सर्वाणि प्रतिमुञ्चते प्रतिबध्नाति द्रव्येष्वपहत्य शार्वरन्तमः प्रकाशयतीत्यर्थः । कविः क्रान्तदर्शनः । यश्च प्रासावीत् प्रसौति । भद्रं भन्दनीयम् द्विपदे चतुष्पदे । द्विपाद्भ्यश्चतुष्पाद्भ्यश्च । विनाकमख्यत्सविता वरेण्यः । यश्च व्यख्यत् विख्यापयति । नाकं द्युलोकम् सविता सर्वस्य प्रसविता वरेण्यः वरणीयः अनुप्रयाणमुषसो विराजति । स सविता उषसः प्रयाणं प्रगमनम् अनुपश्चात् विराजति दीप्यते । उषाः सवितुः पुरोगामिनीति सवितुः स्तुतिः । य इत्थम्भूतः सविता सशिक्यं प्रतिमुञ्चत्वित्यर्थः ॥ ३ ॥

का० ( १६, ५, ६ ) शिक्यपाशं प्रतिमुञ्चते षड्द्यामं विश्वा रूपाणीति । ऊत् ऊर्ध्वं यम्यते नियम्यते यैस्ते उद्यामा रज्जवः षड्द्यामा रज्जव ऊर्ध्वाकर्षणहेतवो यस्येदृशमासन्दीस्थं शिक्यपाशं यजमानः कण्ठे बध्नातीति सूत्रार्थः ॥ सवितृदेवत्या जगती श्यावाश्वदृष्टा । कविः विद्वान् क्रान्तदर्शनः । वरेण्यः श्रेष्ठः सविता सर्वस्य प्रसविता सूर्यः विश्वा विश्वानि सर्वाणि रूपाणि प्रतिमुञ्चते द्रव्येषु प्रतिबध्नाति रात्रितमोऽपहत्य रूपाणि प्रकाशयतीत्यर्थः । यश्च द्विपदे चतुष्पदे द्विपाद्भ्यश्चतुष्पाद्भ्यो मनुष्यपश्वादिभ्यो भद्रं कल्याणं स्वस्वव्यवहारप्रकाशनरूपं श्रेयः प्रसावीत् प्रसौति प्रेरयति । यश्च नाकं स्वर्गं व्यख्यत् विख्याति प्रकाशयति अस्यतिवक्तिख्यातिभ्योऽङ् इति च्लेरङ् यश्च उषसः उषःकालस्य प्रयाणं गमनमनु पश्चात् उषःकाले व्यतीते सति विराजति विशेषेण दीप्यते । उषाः सवितुः पुरोगामिनीति सवितुः स्तुतिः । ईदृशः सविता शिक्यं प्रतिमुञ्चत्विति शेषः ॥ ३ ॥

सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ । स्तोम आत्मा छन्दाᳯंस्यङ्गानि यजूᳯंषि नाम । साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः । सुपर्णोऽसि गरुत्मान् दिवं गच्छ

स्वः पत ॥ ४ ॥

विकृत्याभिमन्त्रयते विकृतिश्चतुरवसाना । गारुत्मती त्रिषघ्नी । सुपर्णोऽसि । सुपतनस्त्वमसि । गरुत्मान् गणवान् अशनवान् । त्रिवृत् स्तोमः ते तव शिरः गायत्रं चक्षुः । बृहद्रथन्तरे सामनी पक्षौ पञ्च विंशः स्तोमः । आत्मा छन्दांस्येकविंशतिरगानि । यजूंषि नाम । साम ते तनूः वामदेव्यम् । यज्ञायज्ञियं पुच्छम् । धिष्ण्याः अग्नयः शफाः खुराः । यतश्च त्वं सुपर्णोऽसि गरुत्मान् अतो ब्रवीमि त्वाम् दिवं गच्छ स्वः स्वर्लोकं पत ॥ ४ ॥

का० (१६, ५, ७) सशिक्यं प्राचं प्रगृह्णाति सुपर्णोऽसीति पिण्डवत् । शिक्यसहितमुख्याग्निं प्राच्यामूर्ध्वं धारयति पिण्डवदित्यूर्ध्वबाहुः अनेनोख्याग्नेरभिमन्त्रणमप्युक्तं कैश्चिदिति सूत्रार्थः ॥ गरुत्मद्देवत्या विषहन्त्री चतुरवसाना कृतिः हे अग्ने ! त्वं सुपर्णः शोभनं पर्णं पतनं यस्य स पक्षिरूपोऽसि पक्ष्याकारेण चितत्वात् तत्र दृष्टान्तः गरुत्मान् गरुडो यथा पक्षिराजस्तद्वत् । तस्यावयवाः कथ्यन्ते त्रिवृत् ते तव शिरः स्तोमस्तव शिरःस्थानीयः । गायत्रं चक्षुः यद्गायत्राख्यं साम तत्तव चक्षुः नेत्रस्थानीयम् । बृहद्रन्तरे पक्षी बृहद्रथन्तराख्ये सामनी तव पक्षस्थानीये । स्तोम आत्मा पञ्चदश स्तोमस्तवात्मा अन्तःकरणस्थानीय । छन्दांसि अङ्गानि गायत्र्यादीनि एकविंशतिच्छन्दांसि तव हृदयाद्यङ्गस्थानीयानि । यजूंषि नाम इषे त्वेत्यादीनि यजूंषि तव नामस्थानीयानि । वामदेव्यं साम ते तव तनूः शरीरस्थानीयम् । यज्ञायज्ञियाख्यं साम तव पुच्छं पुच्छस्थानीयम् । धिष्ण्याः शफाः होत्रादिधिष्ण्यस्थिता अग्नयस्तव शफाः खुरस्थानीयाः । हे अग्ने ! एवम्भूतस्त्वं यतो गरुत्मान् गरुड इव सर्पणः पक्षिरूपोऽसि अतो दिवमाकाशं प्रति गच्छ तत्रापि स्वः स्वर्गलोकं प्राप्नुहि ॥ ४ ॥

विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्द आरोह

पृथिवीमनु विक्रमस्व । विष्णोः क्रमोऽस्यभिमातिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनु विक्रमस्व । विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनु विक्रमस्व । विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशोऽनु विक्रमस्व ॥ ५ ॥

विष्णुक्रमान् क्रमते । विष्णोः क्रमोऽसि । विष्णोः यज्ञस्याग्ने यतः क्रमोऽसि सपत्नहा च शत्रुघातकश्च अतः गायत्रं छन्द आरोह पृथिवीमनु विक्रमस्व । अभिमातिहा । अभिमातिरपि केनचिद्गुणविशेषेण शत्रुरेवोच्यते । ऋज्वन्यत् । अरातीयतो हन्ता । अरातिरिवाचरति अरातीयति । अरातिः शत्रुः । तस्य अरातीयतः शत्रूयतो हन्ता । अधस्तनेन व्याख्यातम् ॥ ५ ॥

का० ( १६, ५ ११ ) विष्णुक्रमान् । क्रमते विष्णोरिति प्रतिमन्त्रमग्न्युद्ग्रहणं च तस्मिंस्तस्मिन् । विष्णुक्रमसंज्ञान् पादन्यासान् करोति तस्मिंस्तस्मिन् क्रमणे उख्यस्याग्नेरूर्ध्वं ग्रहणं कार्यमिति सूत्रार्थः ॥ चत्वारि यजूंष्युख्याग्निदेवत्यानि ऋग्बृहतीच्छन्दस्कानि त्रीणि चतुर्थं प्राजापत्या बृहती । विष्णुशब्देनाग्निरुच्यते स यः स विष्णुर्यज्ञः सः स यः स यज्ञोऽयमेव स योऽयमग्निरुखायामिति श्रुतेः ( ६, ७, २, ११ ) । हे प्रथमपादविन्यास ! त्वं विष्णोः यज्ञस्याग्नेः क्रमोऽसि सपत्नहा सपत्नान् शत्रून् हन्तीति शत्रुघातकश्च अतो गायत्रं छन्दः आरोह अनुग्राहकत्वेन स्वीकुरु ततः पृथिवीमनु विक्रमस्व भूदेवतारूपमिमं प्रदेशं विशेषेण प्राप्नुहि । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् । हे द्वितीयपादन्यास ! त्वं विष्णोः क्रमोऽसि अभिमातिहा अभिमातिर्घातकः पाप्मा वा तं हन्तीति त्रैष्टुभं छन्दः स्वीकुरु अन्तरिक्षं प्रदेशं व्याप्नुहि । हे तृतीय पादन्यास ! विष्णोः क्रमोऽसि अरातीयतो हन्ता रातिर्दानं न रातिररातिर्दानाभावस्तमात्मन इच्छतीत्यरातीयन् तस्या हन्ता विनाशकः जागतं छन्दः आरोह दिवं द्युलोकमनु विक्रमस्व

द्युलोकं व्याप्नुहि । हे चतुर्थपादन्यास ! त्वं विष्णोः क्रमोऽसि शत्रूयतो हन्ता शत्रुत्वहन्तृत्वमिच्छति शत्रूयति शत्रूयतीति शत्रूयन् क्यजन्ताच्छतृप्रत्यय उभयत्र तस्य हन्ता आनुष्टुभं छन्द आरोह । अत्र चतुर्ष्वपि पादन्यासेषु यजमान आत्मानं विष्णुत्वेन भावयेत् चतुर्णां प्रक्रमाणां प्रदेशान् पृथिव्यादिलोकरूपत्वेन भावयेत् ॥ का० ( १६, ५, १३ ) दिशो वीक्षते दिशोऽनु विक्रमस्वेति । सर्वा दिशः पश्यतीत्यर्थः ॥ यजुरुष्णिक् । हे अग्ने ! त्वं दिशोऽनु विक्रमस्व प्राच्यादिदिशो व्याप्नुहि ॥ ५ ॥

**अक्र॑न्ददग्नि स्तनय॑न्निव द्यौः क्षामा रेरि॑हद्वीरुधः॑ सम॒ञ्जन् । स॒द्यो ज॑ज्ञा॒नो वि हीमि॒द्धो अख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः ॥ ६ ॥**

ऊर्ध्वबाहुः प्रदक्षिणं गृह्णात्यग्निम् अक्रन्ददग्निः त्रिष्टुप् । अस्यामृच्यग्निपर्जन्यौ कथ्येते । अक्रन्दत् क्रन्दते विस्फूर्जति अग्निः । स्तनयन्निवद्यौः । द्यौः शब्देनात्र पर्जन्य उक्तः यथा स्तनयन्पर्जन्यः शब्दं करोति एवमग्निः पर्जन्यवत् शब्दं करोति अथान्यान्यपि पार्जन्यानि रूपाण्यग्नेः प्रदर्श्यन्ते । क्षामा रेरिहद्वीरुधः समञ्जन् क्षामाशब्देन पृथिव्युच्यते । द्वितीयार्थे च प्रथमा । लिह आस्वादने यथा पर्जन्य उदक भावमुपगच्छन्नत्यर्थं पृथिवीं लेढि आस्वादयति वीरुधः समञ्जन् व्याप्नुवन् एवमयमग्निः पृथिवीमत्यर्थमास्वादयति स्वकीयज्वालासमूहेनौषधीः समञ्जन् । व्याप्नुवन् । अन्यदप्युच्यते । सद्यो जज्ञानो विहीमिद्धो अख्यत् । यथा पर्जन्यः सद्य एवाभ्ररूपेण जायमानो व्यख्यत् विरुपसर्गः ख्यातिना संबध्यते तेन विख्यापयति हि ई इद्धो धारा शतसहस्रैः । हि ई इमौ निपातौ पादपूरणौ । एवमयमग्निः सद्य एव जायमानः इद्धः सन् इदं सर्वं विख्यापयति । अन्यच्च ।

आरोदसी भानुना भात्यन्तः । यथा पर्जन्य आभाति भानुना विद्युद्रूपेण । रोदसी द्यावापृथिव्योरन्तर्व्यवस्थितः । एवमयमग्निराभाति भानुना दीप्त्या द्यावापृथिव्योरन्तर्व्यवस्थितः । एवमग्निः पर्ज्जन्यवत् स्तूयते ऋषिणा ॥ ६ ॥

का० ( १६, ५, १४ ) पिण्डवत् प्रागुदञ्चं प्रगृह्यात्यक्रान्ददग्निरिति । ऊर्ध्वबाहुः प्रागूर्ध्वमग्निं गृह्णातीति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुप् वत्सप्रीदृष्टा । अग्निरक्रन्दत् छन्दसि लुङ्लुङ्लिटः ( पा० ३, ४, ६ ) क्रन्दति विस्फूर्जति कीदृशः द्यौरिव स्तनयन् द्योशब्देनात्र पर्जन्य उक्तः द्यौर्मेघ इव स्तनयन् गर्जयन् शब्दं कुर्वाणः स्तन गद देवशब्दे चुरादिरदन्तः । मेघसाधर्म्यमाह क्षामा रेरिहत् सुपां सुलुगिति विभक्तिलोपः क्षामेति पृथिवीनामसु ( निघ० १, १, ३ ) पठितं क्षामां पृथिवीं रेरिहत् लिह आस्वादने यङ्लुगन्ताच्छतृप्रत्ययः रेफश्छान्दसः अत्यन्तं लेढीति लेलिहत् नाभ्यस्ताच्छतुरिति नुमभावः भूमिमति आस्वादयन् व्याप्नुवन् यथा मेघो जलभावं गच्छन्नत्यर्थं भूमिं लेढि । वीरुधः समञ्जन् स्वकीयज्वालासमूहेन ओषधीर्व्याप्नुवन् । अन्यदप्युच्यते हि यस्मात् जज्ञानः उत्पद्यमानः सन् सद्यः तदानीमेव इद्धः दीप्तश्च सन् व्यख्यत् विख्याति अन्तर्भूतणिजन्तो ज्ञेयः श्रुत्या तथा व्याख्याततत्वात् विख्यापयति इदं सर्वं विविधं प्रकाशयति । अन्यच्च योऽग्निः रोदसी द्यावापृथिव्योः अन्तर्मध्ये भानुना रश्मिना स्वयमाभाति समन्तात्प्रकाशते यथा पर्जन्यो भानुना विद्युद्रूपेण द्यावापृथिव्योरन्तर्भाति एवमग्निः पर्जन्यवत् स्तूयते । ईम् निपातः पादपूरणे ॥ ६ ॥

अग्नेऽभ्यावर्त्तिन्नभि मा निवर्त्तस्वायुषा वर्चसा प्रजया धनेन । सन्या मेधया रय्या पोषेण ॥ ७ ॥

अवहरति । अग्ने अभ्यावर्तिन्निति इतः प्रभृति पञ्चाग्नेय्यः । अग्ने अभ्यावर्ति उर्ध्वबृहती । हे अग्ने अभ्यावर्तन शील । अभिनिवर्तस्व मां प्रति । आयुषा वर्चसा । अन्नेन ।

प्रजया धनेन । सन्या । लाभेन । मेधया । रय्या । सुवर्णो त्कर्षेण । पोषेण धनपुष्ट्या ॥ ७ ॥

का० ( १६, ५, १५ ) अवहरत्यग्नेऽभ्यावर्त्तिन्निति । ऋक्चतुष्टयेन चतुर्वारमुख्याग्निमात्मसमीपमानयतीति सूत्रार्थः ॥ अग्निदेवत्योर्ध्वबृहती द्वादशार्णत्रिपादा । अभि आभिमुख्येनावर्त्तितुं शीलमस्यास्तीत्यभ्यावर्ती तत्सम्बोधनम् अस्मदभिमुखागमनशील ! आयुरादिभिः सह मा मामभि मां प्रति निवर्तस्व शीघ्रमागच्छ आयुषा जीवनेन वर्चसा ब्रह्मवर्चसेन प्रजया पुत्रादिकाया धनेन वसुना सन्या इष्टलाभेन मेधया धारणावत्या बुद्ध्या रय्या सुवर्णालङ्कारैः पोषेण आयुरादीनां पुष्ट्या ॥ ७ ॥

अग्ने॑ अङ्गिरः श॒तं ते॑ सन्त्वा॒वृत॑ः स॒हस्रं॑ त उपा॒वृत॑ः । अधा॒ पोष॑स्य पोषे॑ण॒ पुन॑र्नो न॒ष्टमाकृ॑धि॒ पुन॑र्नो र॒यिमाकृ॑धि ॥ ८ ॥

अग्ने आङ्गिरः । महाबृहती । हे अग्ने अङ्गिरः । अङ्गानां रसभूत । शतं तव सन्तु आवृतः आवर्तनानि । शतशब्दोऽसंख्यातविषयः । सहस्रं बहूनि च उपावर्तनानि सन्तु । अथ अध समानार्थौ अथैवं भूयो भूयः करणेनावर्तमानः । पोषस्य पोषेण अनवच्छिन्नधनागमेन सह पुनः नोऽस्माकं नष्टम् न आकृधि आगमय । रयिं धनं पुनरागमय । करोति गतिकर्मा ॥ ८ ॥

आग्नेयी महाबृहती एकः पादो द्वादशार्णश्चत्वारोऽष्टार्णाः । हे अङ्गिरः ! अङ्गिनां रसभूत ! अङ्गसौष्ठवयुक्त ! हे अग्ने ! ते तव शतमावृतः सन्तु शतसंख्याका आवृत्तिशक्तयः सन्तु । तथा ते तव सहस्रमुपावृतः सन्तु सहस्रसंख्याका उपावृत्तिशक्तयः सन्तु स्वस्यैवावर्त्तनमावृत् त्वत्समीपवर्त्तिनां पुरुषाणां द्रव्यविशेषाणां चावर्त्तनमुपावृत्तिः अस्मासु स्नेहातिशयेन त्वमपि पुनःपुनरावर्तस्व त्वदीयाः पुरुषास्त्वदीयानि च द्रव्याणि पुनःपुनरावर्तन्तामित्यर्थः ।

अथेत्यव्ययमथार्थम् निपातस्य चेति संहितायां दीर्घः । अथापि शतसहस्रसंख्यानामावृत्त्युपावृत्तिशक्तीनां यः पोषः समृद्धिस्तस्यापि पोषस्यान्यः पोषोऽयुतलक्षादिसंख्याकाभिवृद्धिस्तादृशेन पोषेण नोऽस्मादीयं नष्टं धनं पुनर्भूयोऽपि आकृधि आवृत्तं कुरु आगमय पुनः भूयोऽपि नोऽस्मदीयं पूर्वमसम्पादितं धनमाकृधि सर्वतः सम्पादितं कुरु करोतिर्गतिकर्मा श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिः व्यत्यये शपो लुक् ॥ ८ ॥

पुन॑रू॒र्जा नि व॑र्त्तस्व॒ पुन॑रग्न इ॒षायु॑षा । पुन॑र्नः पाह्य॒ꣳह॑सः ॥ ९ ॥

पुन रूर्जा । गायत्र्यौ । पुनः पुनरभ्यासो ऽनवच्छेदार्थः । पुनरपि ऊर्ज्जा दध्याद्युपसेचनेन निवर्त्तस्व पुनश्च हे अग्ने इषा अन्नेन सह आयुषा च सह । किञ्च पुनरेव नोऽस्मान् पाहि अंहसः पापात्सकाशात् यथा पूर्वं रक्षिताः ॥ ९ ॥

आग्नेय्यौ द्वे गायत्र्यौ ! हे अग्ने ! त्वमूर्जा क्षीरादिरसेन सह निवर्त्तस्व पुनरत्रागच्छ इषा अन्नेन आयुषा जीवेन च सह पुनरागच्छ आगतस्त्वं नोऽस्मान् पुनः कृतादंहसः पापात् पाहि रक्ष ॥ ९ ॥

स॒ह र॒य्या नि व॑र्त्तस्वाग्ने॒ पिन्व॑स्व॒ धार॑या । वि॒श्वप्स्न्या॑ वि॒श्वत॒स्परि॑ ॥ १० ॥

सह रय्या । सह धनेन निवर्त्तस्व । किञ्च । हे अग्ने पिन्वस्व पिन्वतिः सेचनार्थः । तां च रयिं सिञ्च । वसोर्धारया अनवच्छिन्नधनदानेन निवर्त्तस्व । पुनः पुनराप्यायस्वेत्याभिप्रायः । कथं भूतया रय्या । विश्वप्स्न्या विश्वतस्परि । प्सा भक्षणे सर्वजनोपभोग्यया । विश्वतस्परि । सर्वतोऽधिगतैरर्थैः पूर्यमाणया रय्या । १० ॥

हे अग्ने ! रय्या धनेन सह निवर्त्तस्व किञ्च धारया जलधारया जलधारया वृष्टिरूपया विश्वतः परि सर्वेषां तृणधान्यलतापादपा-

नामुपरि पिन्वस्व सिञ्च बिन्वतिः सेचनार्थः । कीदृश्या धारया विस्वप्स्न्या प्सा भक्षणे विश्वैः प्सायते भक्ष्यते पीयत इति विश्वप्स्नी तया । यद्वा विश्वप्स्न्या सर्वजनोपभोग्यया धारया धनधारया सर्वतः परि सर्वतोऽधिगतैरर्थैः पूर्यमाणया पिन्वस्व सिञ्च अनवच्छिन्नधनदानेन पुनःपुनराप्याययस्वेत्यर्थः ॥ १० ॥

आ त्वा॑हार्षम॒न्तर॑भूर्ध्रु॒वस्ति॒ष्ठावि॑चाचलिः । वि॒शस्त्वा॒ सर्वा॑ वाञ्छन्तु॒ मा त्वद्रा॒ष्ट्रमधि॑भ्रशत् ॥ ११ ॥

उपरिततना निधारयन्नभिमन्त्रयते । आत्वाहार्षम् । अनुष्टुब् आहार्षं त्वा यतः द्युलोकात् । हृञ् हरणे । हृतवान् । त्वं च । अन्तरभूः । अन्तः नाभ्या उपरि शरीरमध्ये अभूः । अतो ब्रवीमि । ध्रुवः स्थिरः तिष्ठ । अविचाचलिः । अविचलनशीलः । किञ्च विशः त्वां सर्वाः वाञ्छन्तु । अन्नं तवोपतिष्ठतु सर्वम् अन्नं विविडिति श्रुतिः । मा त्वत् त्वत्तो राष्ट्रं जनपदसमूहः अधिभ्रश्यतु ॥ ११ ॥

का० ( १६, ५, १६ ) उपरिनाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयत इति सूत्रार्थः ॥ आग्नेय्यनुष्टुब् ध्रुवदृष्टा । हे अग्ने ! अहं त्वामाहार्षमाहृतवानस्मि आङ्पूर्वस्य हरतेर्लुङि उत्तमैकवचनम् । त्वं च अन्तरभूः उखामध्ये ऽवस्थितोऽसि । अविचाचलिरत्यन्तचलनरहितो ध्रुवः स्थिरः सन् तिष्ठ विचलतीति विचाचलिः यङ्लुन्तादिन् । किञ्च सर्वा विशः प्रजाः त्वा त्वां वाञ्छन्तु । यद्वा सर्वा विशः सर्वाण्यन्नानि त्वां वाञ्छन्तु अन्नानि तवोपतिष्ठन्तु अन्नं वै विश इति श्रुतेः ( १६, ७, ३, ७ ) इदं राष्ट्रं त्वत् त्वत्तः सकाशान्मा अधि भ्रशत् अयं जनपदस्त्वत्तो नापभ्रश्यतु शून्यो मा भूत् अस्मिन् राज्ये स्थित्वा सर्वाः प्रजाः पाहीत्यर्थः । यद्वा श्रीर्वै राष्ट्रं मा त्वच्छ्रीराधिभ्रशादिति श्रुतेः (६, ७, ३, ७ ) श्रीः त्वत्तो मा भ्रश्यतु भ्रंशु अधः पतने पुषादित्वाच्च्लेरङ् न माङ्योग इति अडभावः ॥ ११ ॥

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑था-

य । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ १२ ॥

पाशान्विमुञ्चति । उदुत्तमम् । वारुणी त्रिष्टुप् । उदित्ययमुपसर्गः श्रथायेत्यनेन संबध्यते । हे वरुण उत्तमं पाशम् उच्छ्रथय । श्रथ शैथिल्ये । श्लथी कृत्योर्ध्वं नय अस्मत् अस्मत्तः अवाधममम् अधमं च पाशम् अवाचीनं श्लथय । वि मध्यमम् स्थानस्थितमेव विश्लथय मध्यमम् । अथैवं कृते सति वयं हे आदित्य अदितेः पुत्र व्रते तव कर्माणि वर्तमानाः अनागसः अनपराधाः अदितये अदीनतायै स्याम भवेम ॥ १२ ॥

का० ( १६, ५, १७ ) पाश उन्मुच्योदुत्तममिति । रुक्मपाशाशिक्यपाशौ गलादूर्ध्वमार्गेण निष्काशयतीति सूत्रार्थः ॥ वरुणदेवत्या त्रिष्टुप् शुनःशेपदृष्टा । उदित्युपसर्गोऽव वि एतावपि श्रथयेत्यनेन सम्बध्यन्ते । हे वरुण ! उत्तममुत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशमस्मत् अस्मत्तः सकाशात् उत् श्रथय उत्कृष्य विनाशय अधममधमाङ्गे पादप्रदेशे स्थापितं त्वत्पाशमवश्रथय अवकृष्यास्मत्तो विनाशय मध्यमं मध्यमप्रदेशे स्थितं पाशं विश्रथय विच्छेदय श्रथ बधे मित्त्वाण्णिचि ह्रस्वः लोटि मध्यमैकवचने रूपम् श्रथायेति संहितायां दीर्घश्छान्दसः । यद्वा श्रथ क्र्यादिः लोटि मध्यमैकवचने छन्दसि शायजपीति श्नाप्रत्ययस्य शायजादेशे श्रथायेति रूपम् । अथ पाशत्रयविनाशानन्तरं हे आदित्य अदितिपुत्र ! वरुण अनागसः अनपराधा निष्पापास्तव व्रते कर्मणि वर्त्तमानाः सन्तो वयमदितये अदीनतायै स्याम अखण्डितत्वाय योग्या भवेम । निपातस्य चेति ( पा० ६, ३, १३६ ) दीर्घः अथा इत्यत्र ॥ १२ ॥

अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्योतिषागात् । अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥ १३ ॥

प्रदक्षिणान् गृह्णाति । अग्ने । बृहन् । त्रिष्टुप् । आदित्यात्मनोऽग्नेः स्तुतिः । य अग्रे उषसां बृहन् महान् प्रभावतः ऊर्ध्वं अस्थात् स्थितः । यश्च निजर्गन्वान् तमसः निर्गतो रात्रिलक्षणात्तमसः अहर्लक्षणेन ज्योतिषा सह अगात् आगतः सोऽग्निः भानुना रुशता रोचिष्णुना । स्वङ्गः शोभनाङ्गः । आ जातो विश्वा सद्मान्यप्राः । प्रा पूरणे । आ अप्राः आपूरितवान् जातः संजातः रश्मिः विश्वा सद्मानि । इमे वै लोका विश्वासद्मानीति श्रुतिः सर्वाणि सदनानी प्रत्यक्षवृत्तिता ॥ १३ ॥

का० ( १६, ५, १७ ) पिण्डवत्प्राग्दक्षिणा प्रगृह्णात्यग्ने बृहन्निति । पूर्वमन्त्रेण पाशावुन्मुच्योर्ध्वबाहुराग्नेयीं दिशं प्रत्युख्याग्निमूर्ध्वं धारयतीति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुप् त्रितदृष्टा । आदित्यात्मनाग्नेः स्तुतिः क्रियते । बृहन् प्रभावान्महानयमग्निरुषसामग्रे प्रातःकालानां मुखे ऊर्ध्वो अस्थात् ऊर्ध्वः स्थितः यद्वाग्निहोत्रादौ बोध्यमान उत्तिष्ठति ऊर्ध्वो अस्थादित्यत्र प्रकृत्यान्तःपादमव्यपर इति एङः पदान्तादतीति सूत्रप्राप्तसन्ध्यभावः । यश्च तमसो रात्रिलक्षणान्निर्जगन्वान्निर्गतः सन् ज्योतिषाहर्लक्षणेन सह आ अगात् इहागतः सोऽग्निर्जात उत्पन्नमात्र एव विश्वा विश्वानि सर्वाणि सद्मानि स्थानानि सर्वान् लोकान् आ अप्राः स्वतेजसा सर्वत्र पूरितवान् प्रा पूरणे लङ् पुरुषव्यत्ययः इमे वै लोका विश्वा सद्मानीति श्रुतिः ( ६, ७, ३, १७ ) । कीदृशः रुशता रुश हिंसायाम् रुशतीति रुशन् तेन रुशता तमो हिंसता भानुना रश्मिना स्वङ्गः शोभनान्यङ्गानि यस्य शोभनशरीरः ॥ १३ ॥

ह॒ꣳसः शु॑चि॒षद्वसु॑रन्तरिक्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒सत् । नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तम् । बृ॒हत् ॥ १४ ॥

अवहरति । हꣳसः शुचिषदिति । जगती यजुरन्ता । बृहदिति यजुः । जगत्या गजगती हे माल्लोकानिति श्रुतिः ।

तथा बृहदिति निदधातीति राजसूये अतिच्छन्दसमित्युक्तम् । व्याख्यातो मन्त्रार्थः ॥ १४ ॥

का० ( १६, ५, १८ ) अवहरति हꣳसः शुचिषदिति । उख्याग्नि-मवतारयति ॥ जगती अग्निप्रोक्षणे इयमुक्ता यजुरन्ता । राजसूय-प्रकरणे इयमतिजगत्युक्ता इह तु जगती अन्ते बृहदिति यजुः तद्वि-नियोगमाह का० [ १६, ५, १९ ) आसन्द्यां करोति बृहदिति यजुषा उख्याग्निमासन्द्यां स्थापयतीति सूत्रार्थः ॥ हंस इति मन्त्रस्तु व्या-ख्यातः ( १०, २४ ) ॥ १४ ॥

**सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनां तपसा मार्चिषाभिशोचीरन्तरस्याꣳ शुक्रज्योतिर्विभाहि ॥ १५ ॥**

उपतिष्ठते सीद त्वमिति तिसृभिराग्नेयीभिः । एका त्रि-ष्टुप् द्वे अनुष्टुभौ । सीद त्वम् । अवस्थानं कुरु त्वम् अस्या उखाया मातुः उपस्थे उत्सङ्गे । विश्वानि सर्वाणि हे अग्ने व-युनानि प्रज्ञानानि विद्वान् प्रजानन् सर्वपदार्थतत्त्ववेदी सन् । किञ्च । उखायामवस्थानं कुर्वन् । मैनां तपसा मार्चिषाभि-शोचीः । मा अभिशोचीः मा अभितापय एनामुखां तपसा तापेन मार्चिषा ज्वालया । किञ्च । अन्तः अस्यां मध्ये अ-स्यामुखायामवस्थितं सुक्रज्योतिः शुक्रकर्मसाधनं ज्योतिः वि-भाहि विविधं दीप्यस्व ॥ १५ ॥

का० ( १६, ५, २० ) उपतिष्ठते सीद त्वमिति । आसन्दीनिधा-नानन्तरमुख्याग्निमुपतिष्ठते ऋचां त्र्येणेति सूत्रार्थः ॥ अग्निदेवत्या त्रिष्टुप् । हे अग्ने ! त्वं मातुः मातृसमाया अस्या उखाया उपस्थे उत्सङ्गे सीद उपविश । कीदृशस्त्वं विश्वानि वयुनानि सर्वान् ज्ञा-नोपायान् विद्वान् जानन् सर्वपदार्थतत्त्ववेदी सन्नित्यर्थः । किञ्च एनामुखां तपसा सन्तापेन माभिशोचीः मा सन्तापय आर्चिषा ज्वा-लया च माभिशोचीर्मा दीपय तपः कार्यमर्चिः कारणं कार्येण भूयां-

स्तापो भवति कारणेन त्वीषत् तदुभयं मा कुर्वित्यर्थः अस्यामुखायामन्तर्मध्ये शुक्रज्योतिः निर्मलप्रकाशः सन् विभाहि विशेषेण दीप्यस्व ॥ १५ ॥

**अन्तरग्ने रुचा त्वमुखायाः सदने स्वे । तस्यास्त्वꣳ हरसा तपन् जातवेदः शिवो भव ॥ १६ ॥**

अन्तरग्ने । व्यवहितपदसबन्धप्रायोऽयं मन्त्रः । हे अग्ने यस्या उखायास्त्वमन्तर्मध्यतः रुचा दीप्त्या सहितः सदने स्वे । स्वकीये स्थाने वर्तसे । तस्या एव उखायाः त्वं हरसा ज्योतिषा तपन् । तापे । हे अग्ने जातवेदाः जातं वेत्तीति जातवेदास्तत्संबोधने हे जातवेदः जातप्रज्ञान । शिवो । भव शान्तो भव ॥ १६ ॥

अग्निदेवत्ये द्वे अनुष्टुभौ । हे अग्ने ! त्वमुखाया अन्तर्मध्ये स्वे सदने स्वकीये स्थाने रुचा दीप्त्या युक्तः सन् सीदेति शेषः । किञ्च जातं जातं विन्दतीति जातवेदा तस्य सम्बोधनम् । हे जातवेदः ! सर्वज्ञ ! जातं वेदो ज्ञानं यस्येति वा जातविज्ञान ! तस्या उखायाः शिवः कल्पाणकारी शान्तो भव किं कुर्वन् हरसा ज्योतिषा तपन् प्रतपन् सन् ॥ १६ ॥

**शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः ॥ १७ ॥**

शिवो भूत्वा । शान्तो भूत्वा मह्यं हे अग्ने । अथो अपि च । सीद उपविश उखायाम् । शिवस्त्वम् शिवाः कृत्वा दिशः सर्वा स्वं योनिं स्थानम् इहासद इह आअसदः आसीद ॥ १७ ॥

हे अग्ने ! मह्यं मदर्थं शिवः शान्तो भूत्वा अथो अनन्तरं शिवः सीद सर्वात्मना शान्तः सन्नुपविश । सर्वा दिशः शिवाः शान्ताः कृत्वा इहास्यामुखायां स्वं योनिं स्वकीयं स्थानमासदः आसीद आगत्योपाविश छन्दसि लुङ्लङ्लिट इति ( पा० ३, ४, ६, ) लाडर्थे लुङ् ॥ १७ ॥

**दि॒वस्परि॑ प्रथ॒मं ज॑ज्ञे अ॒ग्निर॒स्मद्॑ द्वि॒तीयं॒ परि॒- जा॒तवे॑दाः । तृ॒तीय॑म॒प्सु नृ॒मणा॒ अज॑स्र॒मिन्धा॑न एनं जरते स्वा॒धीः ॥ १८ ॥**

वात्सप्रेणोपतिष्ठते । दिवस्परि । द्वादशाग्नेय्यः त्रिष्टुभः । दिवः परिदिवः सकाशात् प्रथमं यज्ञे जातः । अग्निः । प्राणो वै दिवः प्राणादु वा एष प्रथममजायतेति श्रुतिः । तं जातमभि प्राणिति प्राणो वा अग्निर्जातमेवैनमेतत्सन्तं जनयतीत्येतदभिप्रायम् । अस्मद् द्वितीयं परिजातवेदाः । अस्मत् अस्मत्तः पुरुषविधात् द्वितीयं जातवेदः जातः यदेनमदो द्वितीयं पुरुषविधो जनयदिति श्रुतिः । समुखाच्च योनेर्हस्ताभ्यां वाग्निमसृजतेत्ययं । पुरुषविधिः । तृतीयमप्सु । तृतीयं तम् अप्सु व्यवस्थितं जनयति । यदेनमदस्तृतीयमद्भ्योऽधि जनयादिति श्रुतिः । अथ यो गर्भोऽन्तरासीत्सोऽग्निरसृज्यतेत्येतच्छ्रुत्याभिप्रायम् । नृमणा अजस्रम् । नृषु मनो यस्येति नृमणाः प्रजापतिः अजस्रमनुपक्षीणम् । प्रजापति वैं नृमणा अग्निरजस्र इति श्रुतिः । तृतीयमप्स्वन्तर्व्यवस्थितं जनयति नृमणा अजस्रमग्निमिति वाक्यार्थः । य एवं बहुजन्माग्निः तम् इन्धानः आदीपयन् यजमानः एनमग्निं जरते जनयतीति धातोरर्थान्तरे वृत्तिः । स्वाधीः शोभता आहिता धीर्बुद्धि र्यस्य स स्वाधीः ॥ १८ ॥

का० ( १६, ५, ३१—३२ ) वात्सप्रेण च दिवस्परीत्येकादशभिरनुवाकेनैके । दिवस्परीत्येकादशर्चेन वात्सप्रेणोख्यमग्निमुपष्ठिते एके आचार्या अनुवाकेन द्वाशर्चेन वदन्तीति सूत्रार्थः ॥ अग्निदेवत्या द्वादश त्रिष्टुभो भलन्दनपुत्रवत्सप्रीदृष्टाः । अग्निः प्रथमं दिवः परि दिवः सकाशात् जज्ञे जातः प्राणो वै दिवः प्राणादु वा एष प्रथममजायतेति श्रुतिः ( ६, ७, ४, ३, ) ।

जातवेदाः अग्निः द्वितीयं द्वितीयवारमस्मत्परि अस्मत्तः सकाशात् ब्राह्मणो जज्ञे जातः यदेनमदो द्वितीयं पुरुषविधोऽजनयदिति श्रुतेः (६, ७, ४, ३,) स मुखाच्च योने र्हस्ताभ्यां चाग्निमसृजतेति च श्रुतेः स पुरुषविध इत्यर्थः । नृषु मनो यस्य स नृमणा पूर्वपदाच्चेति णत्वम् । नृमणाः प्रजापतिः अजस्रमनुपक्षीणमग्निमप्सु जलेष्वन्तर्व्यवस्थितं तृतीयं तृतीयवारमजनयन् यदेनमदस्तृतीयमद्भ्योऽजनयत् । अथ यो गर्भोऽन्तरासीत्सोऽग्निरसृज्यत । प्रजापतिर्वै नृमणा अजस्रोऽग्निरित्यादि श्रुतयः (६, ७, ४, ३) । एवं बहुजन्माग्निः स्वाधीः शोभना आहिता धीर्बुद्धिर्यस्य स यजमान एनं बहुजन्मानमग्निमिन्धानो दीपयन् जरते जनयति धातोरर्थान्तरे वृत्तिः ॥ यद्वायमर्थः अग्निः प्रथमं दिवः परि द्युलोकस्योपरि जज्ञे सूर्यरूपेणोत्पन्नः । अस्मत् परि अस्मदीयमनुष्यलोकस्योपरि जातवेदाः द्वितीयं जज्ञे प्रसिद्धवन्हिरूपेण द्वितीयं जन्म प्राप्तवान् । अप्सु समुद्रे तृतीय जज्ञे वडवानलरूपेण तृतीयवारमुत्पन्नः । अजस्रं त्रिष्वपि जन्मसु नृमणा नृषु मनो यस्य यजमानेष्वनुग्रहबुद्धियुक्तः एनमीदृशमग्निमिन्धानः पुरोडाशादिना दीपयन् स्वाधीः स्वायत्तचित्तो यजमाना जरते जीर्यते जरापर्यन्तं परिचरतीत्यर्थः ॥ १८ ॥

**वि॒द्मा ते॑ अग्ने त्रे॒धा त्र॒याणि॑ वि॒द्मा ते॒ धाम॒ विभृ॑ता पुरु॒त्रा । वि॒द्मा ते॒ नाम॑ पर॒मं गुहा॒ यद्वि॒द्मा तमुत्सं॒ यत॑ आज॒गन्थ॑ ॥ १९ ॥**

विद्माते । विद्मः जानीमः विद्मा द्व्यचोऽतस्तिङः इति दीर्घत्वम् । ते तव हे अग्ने । त्रेधा त्रयाणि । त्रिधा प्रविभक्तानि त्रीणि रूपाणि अग्निवायुसूर्याख्याणि । विद्माते धाम । धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति च जन्मान्यत्राभिप्रेतानि । धामानि जन्मानि आहवनीयगार्हपत्यदक्षिणाग्न्यातिप्रणीतधिष्ण्यप्रभृतीनि । विभृता विहृता पुरुत्रा बहुरूपाणि । विजानीमश्च तव नाम परममुत्कृष्टम् गु-

हायामिव यद्व्यवस्थितम् । यविष्ठ्य इति वा । अस्य तन्नाम विद्मातमुत्सम् । विजानीमश्च तमुत्सन्दनमब्रूपं प्रथममवस्थानं यतस्त्वम् आजगन्थ आगतवानासि हे अग्ने ॥ १९ ॥

हे अग्ने ! यानि पूर्वस्मिन् मन्त्रे दिवस्परीत्यादिना त्रेधा स्वरूपाण्युक्तानि आदित्याग्निवडवानलरूपाणि तानि त्रयाणि त्रि-संख्याकानि ते तव सम्बन्धानि रूपाणि वयं विद्म जानामः द्व्य-चोऽतस्तिङ इति संहितायां दीर्घः विदो लटो वेति मसो मादेशः । यद्वा त्रेधा विभक्तानि त्रयाणि त्रीणि ते तव रूपाणि अग्निवायुसूर्याख्यानि वयं विद्म । किञ्च ते तव सम्बन्धीनि पुरुत्रा बहुषु प्रदेशेषु गार्हपत्याहवनीयान्वाहार्यपचनाग्नीध्रीय-रूपेषु विभृता विहृतानि धाम धामानि स्थानानि अपि वयं विद्म विभृतेति विभक्तेराकारः धामेत्यत्र विभक्तिलोपः किञ्च ते तव परममुत्कृष्टं गुहा सप्तमीलोपः गुहायां यद्वावस्थितं गो-प्यं यविष्ठ इत्यादि मन्त्रप्रसिद्धं नाम यदस्ति तदपि विद्म । किञ्च यत उत्सात् अब्रूपात् स्थानात्त्वमाजगन्थ वैद्युत-रूपेणागतोऽसि तमुत्समुत्स्यन्दनजलरूपं स्थानं वयं विद्म । गमेर्लिट् ॥ १९ ॥

समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् । तृतीये त्वा रजसि तस्थिवाꣳसमपामुपस्थे महिषा अवर्धन् ॥ २० ॥

समुद्रे त्वा । हे अग्ने समुद्रे त्वा त्वां पूर्वं वर्तमानं नृमणाः प्रजापतिः ईधे दीपयांचकार । सोऽपोऽसृजतेत्युपक्रम्य तस्मा दग्निर्ह्वै तमग्निरित्याचक्षते इत्येतदभिप्रायम् । अप्स्वन्तर्नृ-चक्षा ईधे । अप्स्वन्तर्वर्तमानं नृचक्षा प्रजापतिरेव ईधे आदी-पितवान् । तमद्य उपो दासृप्तं पुष्करपर्णे विवेदेत्यादि श्रु-ति रुद्घाटिता । दिवो अग्न । ऊधन् । द्युलोकस्य ऊधसि म-होदके प्रदेशे आदित्यात्मना नृचक्षा एव ईधे । तृतीये त्वा

रजासि च त्वां द्युलोके आदित्यात्मना स्थितवन्तम् अपाम् उपस्थे उत्सङ्गे नाव्यानामपां मध्ये व्यवस्थितम् महिषाः महान्तः प्राणाः अवर्धन् वर्द्धयांचक्रुः । प्राणो वै महिषा इत्यादि श्रुतिः ॥ २० ॥

हे अग्ने ! नृषु मनो यस्यासौ नृमणाः प्रजापतिः समुद्रे वडवानलरूपेण तस्थिवांसं वर्त्तमानं त्वा त्वामीधे दीपयाञ्चकार इन्धिभवतिभ्यां चेति किंत्वान्नलोपः । नृचक्षाः नृषु पठत्सु पुरुषेषु चष्टे मन्त्रान् विस्पष्टं वक्तीति नृचक्षाः प्रजापतिः अप्सु वृष्टिरूपासु-अन्तर्मध्ये विद्युद्रूपेण स्थितं त्वामीधे दीपितवान् । तथा दिवः द्युलोकस्य ऊधः स्थानीये तृतीये समुद्रद्वयापेक्षया तृतीयस्थाने रजासि रञ्जनात्मके तेजोमण्डले आदित्यात्मना तस्थिवांसं त्वां नृचक्षा एव ईधे । किञ्च महिषाः महान्तः प्राणा अपामुपस्थे उत्सङ्गे नाव्यानामपां मध्ये स्थितं त्वामवर्धन् छन्दस्युभयथेति ( पा० ३, ४, ११ ७ ) शप आर्धधातुकत्वाण्णिलोपः । प्राणा वै महिषा इति ( ६, ७, ४, ५ ) ॥ श्रुतिः ॥ २० ॥

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ २१ ॥

अक्रन्ददग्निरिति व्याख्यातम् ॥ २१ ॥

व्याख्याता ( ६ क० ) ॥ २१ ॥

श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः । वसुः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥ २२ ॥

श्रीणामुदारः । श्रीणां लक्ष्मीणामुदारोऽत्यर्थं दाता धरुणो रयीणाम् । च धनानाम् । मनीषाणाम् प्रार्पणः कश्चिद्धनवानपि भवति नतु दाता । अयं तु मनसा एषितानां कामानां

प्रापयिता । सोमगोपाः । धिष्णा अग्नयः सोमं गोपायन्ति तदभिप्रायमेतत् । सोमिनो वा गोपायति । वसुः वासयिता । यद्वा वसुः धनमेवाग्निः । यथान्यानि धनान्युपकारं कुर्वन्ति शयनासनगवादीनि एवमयमप्युपकरोति भूतानां तापपाकप्रकाशैः अतो वसुः । सूनुः सहसः । पुत्रो बलस्य । मथ्यमानो जायते तस्मादेवमुच्यते । आप्सु राजा । अप्स्ववस्थितो वरुणात्मना राजा । तथा चोक्तम् । त्वमग्ने वरुणो जायसे यदिति विभात्यग्र उषसाम् । आदित्यात्मना । इन्धानः इन्धी दीप्तौ । दीप्यमानः । यद्वा । उषःकालेऽग्नीनां प्रादुष्करणं क्रियते तदभिप्रायमेतत् ॥ २२ ॥

एवंविधोऽग्निर्विभाति विशेषेण भासते । कीदृशः श्रीणां गवाश्वादिसम्पदामुदारः अत्यर्थं दाता उदारो दातृमहतोरिति कोशः ( मेदिनी० रान्तव० ११८ ) रयीणां धनानां धरुणो धारयिता । मनीषाणां मनसा इषितानामभिलषितानां प्रार्पणः प्रकर्षेणार्पयिता । सोमगोपाः सोमं गोपायतीति यजमानकर्त्तृकसोमयागस्य रक्षिता । वसुः सर्वस्य निवासहेतुः वासयतीति वसुः यद्वा वसुः धनरूपः यथान्यानि शयनासनरथादिधनान्युपकुर्वन्ति तथायमपि तापपाकप्रकाशैर्जनानामुपकर्त्ता अतो वसुः । सहसः सूनुः बलस्य मन्थनवेगरूपस्य पुत्रः यतो मथ्यमानो जायतेऽत एवमुच्यते अप्सु राजा जलेऽवस्थितो वरुणात्मना राजा यद्वा अप्सु वृष्टिरूपासु राजा विद्युद्रूपेण दीप्यमानः । उषसामग्रे प्रातः काले इधानः आदित्यात्मना दीप्यमानः उषः कालेऽग्निहोत्रहोमायाग्नयः प्रादुष्क्रियन्ते तदभिप्रायेणोच्यते प्रातर्दीप्यमान इति ॥ २२ ॥

विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः । वीडुं चिदद्रिमभिनत् परायन् जना यदग्निमयजन्त पञ्च ॥ २३ ॥

विश्वस्य केतुः । चतुर्थः पादोऽत्र प्रथमं व्याख्याते यच्छ-

ब्दयोगात् । जना यदग्निमयजन्त पञ्च । यदित्यविभक्तिको-निर्देशः । यमग्निं पञ्चजनाः । चत्वारो वर्णा निषादप-ञ्चमाः पञ्चजना उच्यन्ते । अयजन्त इष्टवन्तः स विश्वस्य के-तुः सर्वस्य प्राणिजातस्य केतुः प्रजानम् अग्न्यात्मना । भु-वनस्य गर्भः । भूतजातस्य वाय्वात्मना गर्भः सहि प्राणभा-वेन भूतानामन्तः सञ्चरति । आरोदसी अपृणात् जायमा-नः । स एव आपूरयति द्यावापृथिव्यौ जायमान आदि-त्यात्मना । स एव मध्यस्थानमारुह्य इन्द्रात्मना वीडुश्चित् । दृढमप्यद्रिमादारयितव्यं मेघं वा अभिनत् विदारयति । परायन् परापरतो गच्छन् ॥ २३ ॥

सोऽग्निर्जायमानः उत्पद्यमानः सूर्यात्मना प्रकटीभवन् रोदसी द्यावापृथिव्यौ आ अपृणात् सर्वतस्तेजसा पूरयति । कीदृशः वि-श्वस्य केतुः प्राणिजातस्य विज्ञानभूतोऽग्न्यात्मना । भुवनस्य ग-र्भः भूतजातस्य गर्भवदन्तरवस्थितो वाय्वात्मना स हि प्राणभा-वेन भूतानामन्तः सञ्चरति । किञ्च यः परायन् इन्दुरूपेण परा परतो गच्छन् वीडुं चित् विडुशब्दो दृढार्थः चिदप्यर्थः दृढमपि अद्रिमदारयितव्यं मेघमभिनत् भिनत्ति विदारयति । यत् विभ-क्तिलोपः यमग्निं पञ्च जना अयजन्त यजन्ते विप्राद्याश्चत्वारो निषा-दश्चेति पञ्च यद्वा चत्वारो महर्त्विजो यजमानश्च ॥ २३ ॥

उ॒शिक् पा॑व॒को अ॑र॒तिः सु॑मे॒धा मर्त्ये॑ष्व॒ग्निर॒मृतो॒ निधा॑यि । इय॑र्त्ति धू॒मम॑रु॒षं भरि॑भ्र॒दुच्छु॒क्रेण॑ शो॒चि-षा॒ द्यामिन॑क्षन् ॥ २४ ॥

उशिक्पावकः । वश कान्तौ । अस्य कृतसम्प्रसाण-स्यैतद्रूपम् उशिक् । कान्तः मेधावी वा । पावकः पावयिता । अरतिः । अलं मतिः । पर्याप्तमतिः । सुमेधाः कल्याणं प्रज्ञः साधु यज्ञो वा । मर्तेषु मरणधर्मेषु मनुष्येषु । अग्निः । कथं

भूतः । अमृतः अमरणधर्मा । निधानि निहितः देवैः त्वं नो अस्य लोकस्याध्यक्ष एधीति । स इयर्ति उदियर्ति उद्गमयति धूमम् अरुषम् अरोचनम् भरिभ्रत् धारयन्निदं जगत् । इतो वा अयमूर्ध्वरेतः सिञ्चति सामुत्र वृष्टिर्भवतीत्येतच्छ्रुत्यभिप्रायोऽयं मन्त्रः । शुक्रेण शोचिषा । द्यां द्युलोकम् इनक्षन् व्याप्नुवन् । नक्षत्रग्रहचन्द्रतारकसंबन्धिना धूमामियर्तीति संबध्यते । इतः प्रदानाद्धि देवा उपजीवन्तीत्येतच्छ्रुत्यभिप्रायोऽयं मन्त्रः ॥ २४ ॥

योऽग्निर्मर्त्येषु मरणधर्मेषु मनुष्येषु निधायि निहितः देवैरिति शेषः बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः स अरुषमरोषं चक्षुराद्युपद्रवरहितमरोचनं वा धूममुदियर्ति उद्गमयति व्यवहिताश्चेति उपसर्गक्रिययोर्व्यवधानम् इतो वा अयमूर्ध्वं रेतः सिञ्चति धूमं सामुत्रा वृष्टिर्भवतीति श्रुतेः । कीदृशोऽग्निः उशिक् उश्यते काम्यते लोकैरित्युशिक् कान्तः वशेरौणादिक इकप्रत्ययः । पावकः पावयिता पुनातीति अरतिः अलमतिः पर्याप्तमतिः यद्वा दुष्टेष्वरतिः प्रीतिरहितः । सुमेधाः शोभना सेवकाभिप्रायधारणसमर्था । मेधा बुद्धिर्यस्य शोभनो मेधो यज्ञो यस्येति वा । अमृतोऽमरणधर्मा । भरिभ्रत् बिभ्रत् जगद्धारयन् दाधर्तीत्यादिना निपातः । शुक्रेण शोचिषा निर्मलेन तेजसा प्रभारूपेण द्यामाकाशमिनक्षन् व्याप्नुवन् नक्षत्रग्रहतारासम्बन्धितेजसा द्युलोकं व्याप्नुवन्नित्यर्थः इतः प्रदानाद्धि देव उपजीवन्तीति श्रुतेः ॥ २४ ॥

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः ॥ २५ ॥

दृशानो रुक्म इति व्याख्यातम् ॥ २५ ॥

व्याख्याता ( १ क० ) ॥ २५ ॥

यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तम-

ग्ने। प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥ २८ ॥

यस्ते अद्य। यस्तव अद्य प्रतिपदि। कृणवत्। करोति हे भद्रशोचे। भन्दनीयदीप्ते। अपूपम् पुरोडाशम्। हे देव। घृतवन्तम्। हे अग्ने। स आज्यस्योपस्तीर्य द्विर्हविषो वदायाथोपरिष्टादाज्यास्यावघारयतीत्येतच्छ्रुत्याभिप्रायम्। प्रतन्नय। नयसीति प्राप्ते च्छान्दसो लोट्। प्रणयसि तं यजमानम्। प्रतरम् अतितराम् वस्यः अच्छ। अच्छाभे राप्तुमिति शाकपूणिः। वसीयं स्थानमभि। वस्तुतरस्थानमभि। वस निवासे। तृन् तुश्छन्दसीति इयसुन् तुरिष्ठेमेयःस्विति तृचोलोपः वसीय इति सिध्यति। स लोकमागच्छत्य शोकं। अहिमं तास्मि न्वसति शाश्वतीः समाः इति श्रुत्युक्तं तं प्राप्नुयात् अयं वसीयान् लोकः। अभिनयसि च सुम्नन् देवभक्तं देवा सेवितम् हे यविष्ठ युवतम। अथवा मिश्रयितृतम ॥ २८ ॥

भद्रा कल्याणकारिणी शोचिर्दीप्तिर्यस्य तत्सम्बोधने हे भद्रशोचे! हे देव अग्ने! अद्य प्रतिपदि यः पुमान् ते तव अपूपं पुरोडाशं घृतवन्तं घृतयुक्तमुपस्तरणाभिघारणोपेतं कृणवत् कृणोति करोति कृञ् करणे स्वादिः इतश्च लोपः परस्मैपदेष्विति तिप इकारलोपे लेटोऽडाटाविति अडागमे नोर्गुणे कृणवदिति रूपम् स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयतीत्येतच्छ्रुत्यभिप्रायम् ( १, ७, २, १० )। हे यविष्ठ युवतम यद्वा मिश्रयितृतम! तं यजमानं प्रतरमतिशयेन प्रकृष्टं प्रतरम् अमु च छन्दसीति अव्ययात् परात् घादमुप्रत्ययः प्रकृष्टतरम् वस्यः स्थानमुत्तमलोकं प्रनय प्रापय। अच्छाभिमुख्येन सुम्नं सुखं चाभिनय सर्वतः प्रापय। कीदृशं सुम्नम् देवभक्तं देवैः भक्तं सेवितं देवयोग्यं सुखं प्रापयेत्यर्थः। वसति यत्र तद्वस्तृ तृन्प्रत्ययः अतिशयेन वस्तृ व-

स्तीयः तुश्छन्दसीति ईयसुन् तुरिष्ठेमेयःस्विति तृचो लोपः छान्दसे ईलोपे वस्य इति सिध्यति स लोकमागच्छत्यशोकमहिमं तस्मिन् वसति शाश्वतीः समा इति ( बृहदारण्य० मा० ४, १५ ) श्रुतेः । प्रकृत्यान्तः पादमव्यपर इति वस्यो अच्छेत्यत्र सन्ध्यभावः ॥ २६ ॥

आ तंभंज सौश्रवसेष्वंग्नउक्थ उंक्थ आभंज शस्यमाने । प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ २७ ॥

आ तंभज । यदः स्थाने तदो वृत्तिः लटः स्थाने लोटः अर्थसंबन्धात् । हे अग्ने आभजसि यं यजमानम् सौश्रवसेषु साधु श्रवणीयेषु यज्ञक्रतुषु । उक्थ उक्थ आभज । ततस्तेष्वेव यज्ञक्रतुषु । उक्थे उक्थे शस्यमाने आभजसि आसेवसे । यजमानः प्रियः सूर्यस्य भवति प्रियश्चाग्नेर्भवति । किञ्च । उज्जातेन भिनदत् । उद्भिनत्ति धर्मार्थकामान् जातेनौरस पुत्रसंघातेन उद्भिनत्ति च । जनित्वैः जनिष्यमाणैः पौत्रप्रपौत्रसङ्घैः वेदार्थान् । प्रजाप्यस्य स्वर्गयायिनी भवतीत्यभिप्रायः॥२७॥

शोभनं श्रवः कीर्तिः सुश्रवः सुश्रवसः सम्बन्धीनि कीर्त्तिहेतुभूतानि कर्माणि सौश्रवसानि तेषु यज्ञकर्मसु हे अग्ने ! त्वं तं यजमानमाभज सेवस्व निरन्तरं कर्मानुष्ठायिनं कुर्वित्यर्थः । उक्थे उक्थे निष्कैवल्यप्रगाथादिरूपे च शस्यमाने तत्तच्छस्त्रे सति तमाभज सर्वतः सेवस्व कर्मणि शास्त्रे च प्रेरयेत्यर्थः । एवं त्वया सेवितोऽयं यजमानः सूर्ये सूर्यस्य प्रियो भवाति भवतु लिङर्थे लेट् लेटोऽडाटौ अग्ना अग्नेश्च प्रियोऽस्तु ङसो डादेशः । तथा जातेनोत्पन्नेन पुत्रेण उद्भिनत् उद्भेदमुदयं वृद्धिमाप्नोतु इलोपेऽडागमे चोद्भिनददितिरूपम् । तथा जनित्वैः जनिष्यमाणैश्च पौत्रादिभिरुद्भिनदत् जनिष्यन्ते ते जनित्वाः तैः भविष्यदर्थे औणादिक इत्वप्रत्ययः ॥ २७ ॥

त्वामंग्ने यजंमाना अनु द्यून्विश्वा वसुं दधिरे वा-

र्य्याणि। त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः॥ २८॥

त्वामग्ने। हे अग्ने त्वां यजमानाः। अनुद्यून् अन्वहम् अहन्यहनि। विश्वानि वसूनि धनानि। दधिरे धारयन्ति भूमिगोहिरण्यादीनि। वार्याणि वरणीयानि। किञ्च। त्वया च सह द्रविणं यज्ञफलमिच्छमानाः कामयमानाः। व्रजम्। व्रजमित्यनेन सुकृतिन इति व्रजो देवयानमार्गः गोमन्तम्। गावो रश्मय आदित्यसम्बन्धिनः तैः संयुक्तम्। उशिजो मेधाविनः ज्ञानकर्मसमुच्चयकारिणः। विवव्रुः विभिदुः। आदित्यमण्डलस्य मध्येन मार्गं कृतवन्त इत्यर्थः। तदुक्तम्। ते य एवं विदुरित्युपक्रम्य देवलोकादादित्यमण्डलमिति॥ २८॥

हे अग्ने! यजमानास्त्वामनु वर्तमानाः त्वां सेवमानाः सन्तः द्यून् द्युशब्दो दिनवाची कालाध्वनोरिति द्वितीया दिनेषु सर्वदा वार्याणि वरणीयानि प्रार्थ्यानि विश्वा विश्वानि सर्वाणि वसु वसूनि धनानि गोभूहिरण्यादीनि दधिरे धारयन्ति यथेष्टं धनं प्राप्नुवन्तीत्यर्थः वसु अत्र सुब्लोपः। किञ्च त्वया सह स्थिताः त्वां भजन्तस्ते यजमाना द्रविणं यज्ञफलमिच्छमाना इच्छन्तः उशिजः मेधाविनो ज्ञानकर्मसमुच्चयकारिणः सन्तो गोमन्तं गावो रश्मयोऽत्र सन्तीति गोमान् तं रविमण्डलमध्यगं व्रज व्रजन्त्यनेन सुकृतिन इति व्रजस्तं देवयानमार्गं विवव्रुः बिभिदुः रविमण्डले मार्गं कृतवन्त इत्यर्थः तदुक्तम् ते य एवमेतद्विदुरित्युपक्रम्य देवलोकादादित्यमिति॥ २८॥

अस्ताव्यग्निर्नराᳪ सुशेवो वैश्वानर ऋषिभिः सोमगोपाः। अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम्॥ २९॥

अस्ताव्यग्निः। स्तुतोऽग्नि वैश्वानरः नरां सुशेवः मनुष्याणां शोभनं सुखयिता। ऋषिभिः। ऋत्विग् यजमानैः। सोम-

स्य गोपायिता । अद्वेषे । पादौ लिङ्गोक्तदेवताकौ । यतोऽग्निः स्तुतः अतः अद्वेषे द्वेषरहिते द्यावापृथिव्यौ हुवेम आह्वयामः तदाश्रयकर्मप्राप्त्यर्थम् । हे देवा यूयमपि धत्त । दत्त । रयिं धनम् अस्मे अस्मभ्यम् । सुवीरं शोभनपुत्रम् ॥ २९ ॥

ऋषिभिः यजमानर्त्विग्भिः अग्निरस्तावि स्तुतः कर्मणि चिण् । कीदृशोऽग्निः नरां नराणां सुशेवः शोभनं सुखयिता नुडागमाभावे गुणे नरामिति रूपम् शोभनं शेवः सुखं यस्मात् । वैश्वानरः विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितः जठराग्निरूपेण । सोमं गोपायतीति सोमगोपाः सोमस्य रक्षिता । अद्वेषे पादौ लिङ्गोक्तदेवौ । यतोऽग्निः स्तुतः अतोऽद्वेषे द्वेषरहिते द्यावापृथिवी रोदसी वयं हुवेम आह्वयामः तदाश्रितकर्माप्त्यै । हे देवा अग्न्यादयः ! अस्मे अस्मासु सुवीरं शोभनपुत्रयुतं रयिं धनं यूयं धत्त स्थापयत ॥ २९ ॥

स॒मिधा॒ग्निं दु॑वस्यत घृ॒तैर्बो॑धयता॒तिथिम् । आ॒स्मिन् ह॒व्या जु॑होतन ॥ ३० ॥

वनीवाहनम् । आग्नेय्यः पञ्चकण्डिकाः । समिधाग्निम् व्याख्यातम् ॥ ३० ॥

अथ वनीवाहनम् ॥ का० [ १६, ६, १५ ] प्रागनः कृत्वोख्यस्योत्तरतः समिदाधानं समिधाग्निमिति । उख्याग्नेरुत्तरदिशि प्राग्गीषं शकटं संस्थाप्य यजमान उख्येऽग्नौ वनीवाहने समिधमाधत्त इति सूत्रार्थः ॥ विरूपाक्षदृष्टाग्नेयौ गायत्र्यौ व्याख्याताप्युच्यते [ ३ अध्या० १क० ] । हे ऋत्विग्यजमानाः ! समिधा कृत्वाग्निं दुवस्यत परिचरत अतिथिमेनमग्निं बोधयत । अस्मिन्नग्नौ हव्या हवींषि आजुहोतन साकल्येन जुहुत ॥ ३० ॥

उदु॑ त्वा॒ विश्वे॑ दे॒वा अग्ने॒ भर॑न्तु॒ चित्ति॑भिः । स नो॑ भव शि॒वस्त्वꣳ सु॒प्रती॑को वि॒भाव॑सुः ॥ ३१ ॥

उद्यच्छति । उदुत्वा अनुष्टुप् हे अग्ने उद्भरन्तु त्वां विश्वे देवाः । चितिभिः यैरग्निरुद्ध्रियते । स त्वं विश्वै देवै-

रुद्ध्रियमाणः नः अस्माकं शिवो भव । शिवः शान्तः । सुप्रतीकः । शोभनमुखः विभावसुः विभूतधनश्च ॥ ३१ ॥

का० ( १६, ६, १६ ) सासन्दीकमुद्यम्योदु त्वेति दक्षिणतोऽनसि करोति । समिदाधानानन्तरमुदु त्वेति मन्त्रेणासन्दीसहितमुख्याग्निमूर्ध्वं कृत्वा दक्षिणे स्थितो यजमानः शकटे तं स्थापयतीति सूत्रार्थः ॥ तापसदृष्टाग्नेय्यनुष्टुप्। हे अग्ने ! विश्वे सर्वे देवाः प्राणरूपाः चित्तिभिः उद्यमनप्रवीणाभिर्धीवृत्तिभिः त्वा त्वामुद्भरन्तु ऊर्ध्वं धारयन्तु भृञः शप् उ पादपूरणः हे अग्ने ! स उद्धार्यमाणस्त्वं नोऽस्माकं शिवः कल्याणकृद्भव । किम्भूतः सुप्रतीकः शोभनं प्रतीकं मुखं यस्य । विभा दीप्तिरेव वसु धनं यस्य सः ॥ ३१ ॥

प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिष्ट्वम् । बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तन्वा प्रजाः ॥ ३२ ॥

प्रयाति । प्रेदग्ने अनुष्टुप् । प्रयाहि हे अग्ने च ज्योतिष्मान् भूत्वा । शिवाभिरार्चिभिः । शिवैः शान्तैः सुखकरैः अर्चिभिः गच्छस्व । त्वम् बृहद्भिः भानुभिः रश्मिभिः भासन् दीप्यमानः । मा हिंसीः तन्वा शरीरेण प्रजाः ॥ ३२ ॥

का० ( १६, ६, १८ ) अनड्वाहौ युक्त्वा प्रेदग्न इति प्राङ् यात्वा यथार्थम् । शकटे तूष्णीं वृषौ संयोज्य प्रेदिति मन्त्रेण प्राचीं गत्वा यथार्थं प्रयोजनवन्तं देशं गच्छेदित्यर्थः ॥ अग्निदेवत्यानुष्टुप् । हे अग्ने ! शिवेभिरर्चिभिः शान्ताभिर्ज्वालाभिर्ज्योतिष्मान् प्रकाशयुक्तस्त्वं प्रयाहि गच्छ । इतपादपूरणः । किञ्च बृहद्भिर्भानुभिः प्रौढैः रश्मिभिः भासन् भासयन् जगदवभासयन् तन्वा स्वकीयेन दाहकेन शरीरेण प्रजाः पुत्रादिका मा हिंसीः मा नाशय ॥ ३२ ॥

अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ३३ ॥

अक्रन्ददग्निरिति व्याख्यातम् ॥ ३३ ॥

का० ( १६, ६, २० ) अक्षे खर्जत्यक्रन्ददग्निरिति जपति । अक्षे शब्दं कुर्वति जपेत् ॥ व्याख्याता ( ६ क० ) ॥ ३३ ॥

प्र-प्रायमग्निर्भ॒रत॑स्य शृण्वे॒ वि यत् सूर्यो॒ न रोच॑ते बृ॒हद्भाः॑ अ॒भि यः पू॒रुं पृत॑नासु त॒स्थौ॑ दी॒दाय॒ दैव्यो॒ अति॑थिः शि॒वो नः॑ ॥ ३४ ॥

समिधमादधाति । प्र प्रायम् । त्रिष्टुप् प्र प्रायम् । प्रकर्षेण महता अयमग्निः । भरतस्य प्रजापतेः । शृण्वे । शृणोति वचनम् । कथमेतदध्यवसीयते यथा प्रजापतेः शृणोति वचनमिति । वियत्सूर्यो नरोचते बृहद्भाः । यत्सामिधा दानसमनन्तरमेव विरोचते । सूर्यो न सूर्य इव बृहद्भाः महादीप्तीः । यश्च अभितस्थौ पूरुम् असुरराक्षसम् पृतनासु संग्रामेषु एतया समिधा आप्यायितः । यस्माच्च । दीदाय दीप्यते । दैव्यः देवसवन्धी अतिथिः । अतिथिधर्मा जनानाम् । शिवः शान्तः नः अस्माकं भवति । तस्मात्प्रजापतेर्वचनं शृणोति ॥ ३४ ॥

का० ( १६, ६, २१ ) वासेऽवहरत्युद्धतावोक्षित उत्तरतः समिदाधानं प्रप्रेति । वासे स्थितौ क्रियमाणे उत्तरदिशि उद्धतावोक्षिते प्रदेशेऽग्निमवहरत्युत्तारयति ततोऽग्नौ समिदाधानम् ॥ वसिष्ठदृष्टाग्नेयी त्रिष्टुप् । प्रसमुपोदः पादपूरण इति प्रोपसर्गस्य द्वित्वम् अयमग्निः बिभर्ति हवींषि भरतस्तस्य भरतस्य शृण्वे शृणुते आह्वानमिति शेषः यजमानकृतमाह्वानं शृणोतीत्यर्थः पुरुषव्यत्ययः । यत् योऽग्निः सूर्यो न सूर्य इव भाः भासत इति भाः सूर्यवद्भासमानः सन् बृहद्यथा तथा रोचते अत्यन्तं दीप्यते । योऽग्निः पृतनासु संग्रामेषु पूरुं राक्षसमभितस्थौ सम्मुखं तिष्ठति । दैव्यो देवसम्बन्धी अतिथिः नोऽस्माकं शिवः मङ्गलरूपः सोऽग्निर्दीदाय दीप्यते दीङ् क्षये धातूनामनेकार्थत्वादत्र दीप्त्यर्थः लिटि रूपम् तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः छन्दसि लुङ्-

लङ्लिट इति वर्तमाने लिट् ॥ ३४ ॥

**आपो देवीः प्रतिगृभ्णीत भस्मैतत् स्योने कृणुध्वꣳ सुरभा उ लोके। तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृताप्स्वेनत् ॥ ३५ ॥**

आपो देवीः। दश कण्डिका भस्माभ्यवहरणम्। आपो देवी। अब्देवत्या त्रिष्टुप्। हे आपः देव्यः प्रतिगृभ्णीत प्रतिगृह्णीत। भस्मैतत् स्वागतादिभिः। तत्र अयं शिष्टव्यवहारः। ततः स्वागतादिभिः परिगृह्य। स्योने कृणुध्वं सुरभा उ लोके स्योने सुखावहे कृणुध्वं स्थापयत। उकारः समुच्चयार्थः। सुरभौ शोभनगन्धे धूपपुष्पोपहारैः। लोके स्थाने शय्यायाम् तस्मै नमन्ताम्। तदः स्थाने एतदः प्रयोगः प्रकृतत्वात्। अस्मै भस्मरूपायाग्नये नमन्तां जनयः उपतिष्ठन्तु जायाः। सुपत्नीः शोभनपत्न्याः। रूपलावण्ययौवनालङ्कारवैदग्ध्यसपन्नाः। यूयं च। मातेव पुत्रं बिभृत। धारयत। पानं भोजनवासोभिः गोपायत। किञ्च। अप्सु स्वात्मनि एनत् भस्म ॥ ३५ ॥

का० ( १६, ६, २६ ) पलाशपुटेनापो देवीरित्येकया। वनीवाहनानन्तरं तडागादिजलस्थानं गत्वा वटादिपत्रपुटेन सायं प्रातरुखायाः सकाशादुद्धृतं यद्भस्मास्ति तदेकया ऋचा जले क्षिपेदिति सूत्रार्थः॥ अब्देवत्या त्रिष्टुप्। हे आपो देवीः देव्यः दीप्यमानाः! भस्म यूयं प्रतिगृभ्णीत स्वागतादिभिः प्रतिगृह्णीत। किञ्च स्योने सुखावहे सुरभौ पुष्पधूपादिभिः शोभनगन्धयुते लोके स्थाने एतद्भस्म कृणुध्वं कुरुध्वं कृञ् कृतौ स्वादिः उ पादपूरणः। किञ्च शोभनः पतिर्वरुणो यासां ताः सुपत्न्याः आपो वरुणस्य पत्नय आसन्निति श्रुत्यन्तरात्। जनयन्त्यग्निमुत्पादयन्ति वृक्षोत्पत्त्यादिद्वारेति जनयः सुपत्नीर्जनयो भवत्यस्तस्मै भस्मरूपायाग्नये नमन्तां प्रह्वीभवन्तु। किञ्च हे आपः! एनत् भस्म अप्सु स्वा-

त्मनि यूयं विभृत धारयत माता पुत्रमिव यथा माता पुत्रं स्वात्मनि धारयति तद्वत् पालयत ॥ ३५ ॥

अप्स्व॒ग्ने॒ सधि॒ष्टव॒ सौष॑धी॒रनु॑ रुध्यसे । गर्भे॒ सन् जा॑यसे॒ पुनः॑ ॥ ३६ ॥

अप्स्वग्ने । अधस्तनेन मन्त्रेण भस्मा तिथित्वेना प्स्व वस्थाप्य अथेदानीं गायत्र्यनुष्टुभ्यामग्नेः सर्वगतत्वं प्रकाशयन् भस्माभ्यवहरणमेवापन्हुते । अप्सु हे अग्ने सधिः समानस्थानम् । सधिस्तवासौषधीरनुरुध्यसे सर्वं बीजमवस्थाय ओषधीः अनुरुध्यसे । ओषधिपरिणाममनु विपारिणमशे । ततो गर्भे सन् विद्यमानः जायसे पुनरपि ॥ ३६ ॥

का० ( १६, ६, २७ ) ततो द्वाभ्याम् । ततोऽनन्तरं पठिताभ्यां द्वाभ्यामप्स्वग्ने गर्भो असीत्येताभ्यामृग्भ्यां पत्रपुटेन द्वितीयवारमुख्याग्निभस्माप्सु प्रास्यति ॥ विरूपदृष्टाग्नेयी गायत्री । पूर्वमन्त्रेण भस्मातिथित्वेन संस्तुत्य द्वाभ्यामग्नेः सर्वव्यापकत्वं वदन् भस्माभ्यवहरणमपह्नुते । हे अग्ने ! अप्सु जलेषु तव सधिः स्थानं स त्वमोषधीः यवाद्या अनु रुध्यसे ओषधिपरिणाममनु विपरिणमसे सोऽचि लोपे चेत्पादपूरणमिति स इत्यस्य विसर्गलोपे सन्धिः यद्वा ओषधीः स्वीकरोषि जठराग्निरूपेण । किञ्च गर्भे अरण्योर्मध्ये स्थितः सन् पुनः पुनर्जायसे ॥ ३६ ॥

गर्भो॑ अ॒स्योष॑धीनां॒ गर्भो॒ वन॒स्पती॑नाम् । गर्भो॒ विश्व॑स्य भू॒तस्या॑ग्ने॒ गर्भो॑ अ॒पाम॑सि ॥ ३७ ॥

किञ्च । गर्भः असि भवसि ओषधीनां गर्भश्च वनस्पतीनाम् गर्भश्च विश्वस्य भूतस्य भूतग्रामस्य । हे अग्ने गर्भः अपाम् असि ॥ ३७ ॥

तिस्रोऽनुष्टुभोऽग्निदेवत्याः । हे अग्ने ! त्वमोषधीनां गर्भोऽसि भेषजरूपैरोषधिविशेषैरुत्पद्यमानत्वात् । हे अग्ने ! त्वं वनस्पतीनां तरूणां गर्भोऽसि अरणिभ्यो जायमानत्वात् विश्वस्य भूतस्य स-

वस्य प्राणिजातस्य गर्भोऽसि जठराग्निरूपेण विद्यमानत्वात् अपां गर्भोऽसि वाडववैद्युतादिरूपत्वात् ॥ ३७ ॥

प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदः ॥ ३८ ॥

अथ आदत्ते प्रसद्य चतसृभि राग्नेयीभिः । द्वे अनुष्टुभौ द्वे गायत्र्यौ । प्रसद्य अवस्थाप्य भस्मना भस्मरूपेण योनिं स्थानम् अपश्च पृथिवीं च हे अग्ने संसृज्य सङ्गत्य च मातृभिः अद्भिः त्वम् ज्योतिष्मान् भूत्वा पुनरस्यामुखायामासद आसीद ॥ ३८ ॥

का० ( १६, ६, २९ ) अनामिकया प्रास्तादादत्ते प्रसद्येति । अप्सु क्षिप्ताद् भस्मनः सकाशादनामिकया भस्म गृह्णाति प्रसद्येति चतुर्ऋग्भिः ॥ हे अग्ने ! त्वं भस्मना कृत्वा योनिं कारणभूतां पृथिवीं योनिभूता अपश्च प्रसद्य प्राप्य मातृभिरद्भिः संसृज्यैकीभूय ज्योतिष्मान् तेजस्वी सम्पन्नः सन् पुनरासदः स्वस्थानमुखामासीद॥३८॥

पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः ॥ ३९ ॥

पुनरासद्य । पुनरप्यास्थाय सदनं स्थानम् अपश्च पृथिवीं च हे अग्ने । ततोऽनन्तरं शेषे । शीङ् स्वप्न इत्यस्यैतद्रूपम् स्वपिषि । मातुः यथा उपस्थ उत्सङ्गे । अन्तर्मध्ये अस्या मुखायाम् शिवतमः शान्ततमः ॥ ३९ ॥

हे अग्ने ! अपश्च पृथिवीं च सदनमासद्य जलभूमिरूपं स्थानं प्राप्य पुनरपि अस्यामुखायामन्तर्मध्ये त्वं शेषे स्वपिषि मातुरुपस्थे उत्सङ्गे यथा शिशुः शेते । किम्भूतस्त्वं शिवतमः कल्याणतमः॥३९॥

पुनरूर्जा निवर्त्तस्व पुनरग्न इषायुषा पुनर्नः पाह्यꣳहसः ॥ ४० ॥

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥ ४१ ॥

पुन रूर्जा । द्वे व्याख्याते ॥ ४० ॥ ४१ ॥

द्वे व्याख्याते ( ९ क० ) ॥ ४० ॥ ( १० क० ) ॥ ४१ ॥

**बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः । पीयति त्वो अनु त्वो गृणाति वन्दारुष्टे तन्वं वन्दे अग्ने ॥ ४२ ॥**

प्रास्योखायामुपतिष्ठते बोधाम इति द्वाभ्यां त्रिष्टुप्गायत्रीभ्याम् । गायत्रीयजुरन्ता । विश्वकर्मणे स्वाहेति यजुः । बोधाम बुध्यस्व मम । अस्य वचसः । किमभिप्रायोहम् ब्रवीमि। हे यविष्ठ मिश्रयितृतम अथवा युवतम । मंहिष्ठस्य भूयिष्ठस्य प्रभृतस्य श्रोत्रपथप्रापितस्य । हे स्वधावः अन्नवन् । किञ्च पीयति त्वः । पीयतिराक्रोशकर्मा । आक्रोशति त्वः । एकः पुरुषः त्वां हे अग्ने अनुत्वो गृणाति । अनुगृणाति । स्तौति त्वः एकः पुरुषः । एष लोकस्य स्वभावः कश्चिदाक्रोशति कश्चित् स्तौतीति । एवं च सति वन्दारुः वन्दनशीलः सन् ते तव तन्वं शरीरं वन्दे ॥ ४२ ॥

का० ( १६, ६, ३० ) प्रास्योखायामुपतिष्ठते बोधाम इति । तडागादागत्यानामिकया गृहीतं भस्म तूष्णीमुखायां प्रास्य बोधाम इति द्व्यृचेनोख्याग्निमुपतिष्ठते ॥ दीर्घतमोदृष्टाग्नेयी त्रिष्टुप् । स्वधान्नमस्यास्तीति स्वधावान् तत्सम्बोधने स्वधावः मतुवसो रुः सम्बुद्धौ छन्दसीति रुत्वम् । हे अन्नवन् ! हे यविष्ठ ! युवतम अग्ने ! मे मम वचसो बोध बुध्यस्व अभिप्रायमिति शेषः । यद्वा कर्मणि षष्ठी मद्वचनं जानीहीत्यर्थः । किम्भूतस्य भूयिष्ठस्य वचसः मंहिष्ठस्य भूयिष्ठस्य अतिशयेन बहु मंहिष्ठं तस्य । तथा प्रभृतस्य प्रहृतस्य श्रोत्रपथं प्रापितस्य आदरोक्तस्येत्यर्थः । किञ्च त्वशब्द एकशब्दार्थः सर्वादिः पीयतिराक्रोशतिकर्मा हे अग्ने ! त्वः एकः पुरुषः पीयति आक्रोशति निन्दति त्वः एकः त्वामनुगृणाति त्वां स्तौति कश्चित् स्तौति कश्चिन्निन्दतीति लोकस्वभावः ।

एवं सति हे अग्ने ! अहं तु ते तव तन्वं तनूं शरीरं वन्दे स्तौमि नमामि च वदि अभिवादनस्तुत्योः । कीदृशोऽहम् वन्दारुः वन्दनशीलः शृवन्द्योरारुरिति ( पा० ३, २, १७३ ) आरुप्रत्ययः शीलार्थः ॥ ४२ ॥

**स बो॑धि सू॒रिर्म॒घवा॒ वसु॑पते॒ वसु॑दावन् । यु॒योध्य॒स्मद्द्वेषा॑ꣳसि ॥ वि॒श्वक॑र्मणे॒ स्वाहा॑ ॥ ४३ ॥**

स बोधि । यस्त्वं सूरिः पण्डितः मघवा धनवांश्च सः बोधि बुध्यस्व । हे वसुपते धनस्य दातः । बुध्वाच । युयोधि पृथक् कुरु अस्मत्तः द्वेषांसि दौर्भाग्यानि सुप्रीतः सन् । समिधा उपहत्याज्यं जुहोति । विश्वकर्मणे स्वाहा ॥ ४३ ॥

सोमाहुतिदृष्टाग्नेयी यजुरन्ता गायत्री । विश्वकर्मणे स्वाहेति यजुः । हे वसुपते ! धनपते ! हे वसुदावन् ! वसु ददातीति वसुदावा आतो मनिन्निति क्वनिप् तत्सम्बुद्धौ हे वसुदावन् ! धनस्य दातः ! स त्वं बोधि अस्मदभिप्रायं बुध्यस्व बुध्यतेः शपि लुप्ते हुझल्भ्यो हेर्धिरिति धिः गुणान्त्यलोपौ छान्दसौ । कीदृशस्त्वं सूरिः विद्वान् मघवा धनवान् मघं धनमस्यास्तीति । सन्तुष्टः सन् द्वेषांसि दौर्भाग्यानि अस्मद्युयोधि अस्मत्तः पृथक्कुरु । का० ( १६, ७, १ ) प्रायश्चित्तिꣳ समिधोऽपहत्याज्यं विश्वकर्मण इति जुहोति । स्रुवस्थानीयया समिधा घृतमादायोख्येऽग्नौ जुहोति तत्कर्मणः प्रायश्चित्तिरिति संज्ञेति सूत्रार्थः ॥ यजुः । जगत्सृष्टिस्थित्यादिकर्मकर्त्रे तुभ्यं स्वाहा सुहुतमस्तु ॥ ४३ ॥

**पुन॑स्त्वादि॒त्या रु॒द्रा वस॑वः॒ समि॑न्धतां॒ पुन॑र्ब्र॒ह्माणो॑ वसुनीथ य॒ज्ञैः । घृ॒तेन॒ त्वं त॒न्वं॑ वर्धयस्व स॒त्याः स॑न्तु॒ यज॑मानस्य॒ कामाः॑ ॥ ४४ ॥**

आदधाति समिधम् । पुनस्त्वा । आग्नेयी त्रिष्टुप् । निर्वाणं त्वां पुनः समिन्धतां सन्दीपयन्तु । आदित्याः रुद्राः वसवः पुनश्च ब्रह्माणः ब्राह्मणाः ऋत्विग् । यजमानाः । वसु-

नीथ । नीथा स्तुतिरुच्यते । वसुलाभनिमित्ता यस्य स्तुतिः स वसुनीथः । यज्ञैः यागैः घृतेन च त्वं तन्वं शरीरं वर्द्धयस्व । सत्याश्च सन्तु यजमानस्य कामाः । ये भस्माभ्यवहरणव्यवच्छिन्नाः ॥ ४४ ॥

का० ( १६, ७, २ ) उत्थायादधाति समिधं पुनस्त्वेति । घृतहोमानन्तरमुत्थाय तामेव समिधमुख्येऽग्नावादधाति ॥ आग्नेयी त्रिष्टुप् आद्यपादश्चतुर्दशार्णस्तृतीयो दशकस्तेन ह्याधिका । हे अग्ने ! आदित्याः रुद्राः वसवश्च त्वा त्वां पुनः समिन्धतामुपशान्तं दीपयन्तु । हे वसुनीथ ! वसु धनं तन्निमित्ता नीथा स्तुतिर्यस्य यद्वा वसूनि नयतीति वसुनीथः तत्सम्बुद्धौ हे धननेतः ! ब्रह्माणः ब्राह्मणा ऋत्विग्यजमाना यज्ञैः कृत्वा त्वां पुनः समिन्धतां त्वं च तन्वं स्वशरीरं घृतेनास्मद्दत्तेन वर्धयस्व त्वयि वृद्धे सति यजमानस्य कामाः सत्याः सन्तु ॥ ४४ ॥

**अपे॑त॒ वीत॒ वि च॑ सर्पता॒तो येऽत्र॒ स्थ पु॑रा॒णा ये च॒ नूत॑नाः । अदा॑द्य॒मोऽव॒साने॑ पृथि॒व्या अक्र॑न्नि॒मं पि॒तरो॑ लो॒कम॑स्मै ॥ ४५ ॥**

पलाशशाखया गार्हपत्यं व्यूहति । अपेत । त्रिष्टुप् । अर्द्धर्चेनोदरसर्प्पिण उच्यन्ते । पादेन यमः पादेन पितरः । अप इत अपगच्छत । विचसर्प्पतातः । विसर्पत च अतः स्थानात् । येऽत्रस्थ ये यूयमत्रस्थ भवथ । पुराणाश्चिरन्तनाः । ये च नूतनाः । इदानीन्तनाः कस्माद्वयमपसर्प्पाम इति चेन्मतिः । अदात् दत्तवान् यमः अवसानं स्थानम् । अवस्यन्त्यस्मिन्निति अवसानम् । पृथिव्याः अस्मै यजमानाय । अक्रन्दन् अकृतवन्तश्च पितरः इमं लोकं स्थानम् अस्मै यजमानाय । अतोऽपगच्छतेति ॥ ४५ ॥

अथ गार्हपत्यचयनमुच्यते ॥ का० ( १७, १, ३ ) पलाशशाखया गार्हपत्यं व्युदूहत्यपेत वी तेति पुच्छः प्रतिदिशं पुरस्तात् प्रथमम् ।

अत्र भाविन्यावृत्त्या शालाद्वार्यो गार्हपत्यशब्देनोच्यते तदर्थां चितिश्चितेः स्थानमपि गार्हपत्य एव । पलाशशाखया गार्हपत्यचितेः स्थानं व्युदूहति ऊहिरत्र प्रेरणे तत्र पतितं तृणादिकं स्थानाद्बहिः क्षिपतीत्यर्थः अपेत वीति ऋचः पुच्छः पादैः प्रतिदिशमादौ प्राच्यामपेत वीति येऽत्र स्थेति दक्षिणे अदादिति पश्चादक्रन्नित्युत्तरे इति सूत्रार्थः ॥ लिङ्गोक्तदेवत्या त्रिष्टुप् अर्द्धर्चेन तत्स्थानसर्पिण उच्यन्ते पादेन यमः पादेन पितरः । यमस्य सर्वभूम्यधिपतित्वात्तद्भृत्याः सर्वत्र चरन्ति तान् प्रत्युच्यते । हे यमभृत्याः ! ये पुराणाः चिरन्तना ये च नूतनाः इदानीन्तना यूयमत्र स्थाने स्थ भवथ ते सर्वे यूयमतः स्थानादपेत अपगच्छत वीत विगच्छत अतिदूरं गच्छत विसर्पत च अतः स्थानादपेत्य सङ्घातं विहाय विविधं गच्छत । कस्माद्वयमपसर्पामेत्यत आह अवस्यति स्थापयत्यस्मिन्निति अवसानं पृथिव्या अवसानं स्थानमिदं यमो देवोऽस्मै यजमानायादात् दत्तवान् । पितरश्चेमं लोकं स्थानमस्मै यजमानायाक्रन् कृतवन्तः करोतेः शपि लुप्ते लङि रूपम् यमेन पितृभिश्च एतच्च यजनस्थानस्य यजमानाय दत्तत्वाद् यूयमपसर्पतेत्यर्थः ॥ ४५ ॥

**संज्ञानमसि । कामधरणम् । मयि ते कामधरणं भूयात् । अग्नेर्भस्मास्यग्नेः पुरीषमसि । चित स्थ परिचित ऊर्ध्वचितः श्रयध्वम् ॥ ४६ ॥**

उखां निर्वपति उल्वसंस्तत्रपशुसंस्तवश्च तेषामतस्तथैत्र व्याख्यायते । संज्ञानमसि । त्रीणि यजूंषि । समिति एकीभावमाचष्टे । यत एकं ज्ञानमसि उल्वसंस्तवात् । तस्मादुसमानोल्वाः समेव जानीते इति श्रुतिः । कामधरणं च कामान्धारयन्ति संपादयन्ति कामधरणम् पशवो वा उखाः पशवः कामधरणामिति श्रुतिः । अतो मयि ते तव कामधरणं भूयात् । मयि ते पशवो भूयासुरिति श्रुतिः । उल्वाभिप्रायमेकवचनम् सिकतानिर्वपति । अग्नेर्भस्मासि । भस्म भर्त्सनदीप्त्योः । भसितं भस्म भस्म सादृश्यात् सिकता भस्मेत्युक्ताः । न वा अग्निः स्वं

भस्माति दहतीति श्रुतिः । अग्नेश्च पुरीषं पूरणम् असि भस्माभिप्रायमेकवचनम् । अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकता इति श्रुतिः । परिस्रुत उपदधाति चितः स्थ । चिञ् चयेन अस्य क्विपि बहुवचनम् । या यूयं चितो भवथ । परि सर्वतश्च चितः स्थ । ता उच्यन्ते । ऊर्ध्वचितो भूत्वा एन मग्निमाश्रयध्वम् ॥ ४६ ॥

का० [ १७, १, ४ ] उदीचीꣳ शाखामुदस्योषान्निवपति संज्ञानमिति । यया व्युदूहनं कृतं तां शाखामुदक् क्षिप्त्वा गार्हपत्यचितिस्थाने क्षारमृदो निदधाति ॥ ऊषदेवत्यं यजुः हे ऊषस्वरूप ! त्वं संज्ञानमसि पशूनां सम्यक् ज्ञानसाधनमसि पशवो हि ऊषदेशं घ्रात्वा लिहन्ति । तथा कामधरणम् कामान्मनोरथान् धरति सम्पादयतीति कामधरणं यज्ञद्वारा कामसम्पादकत्वात् । अतस्ते तव कामधरणं कामसम्पादनसामर्थ्यं मयि भूयात् अस्तु । यद्वा श्रुत्यनुसारेण व्याख्यानं ते तव कामधरणं पशवः मयि भूयात् भूयासुः यतस्त्वं कामधरणं पशुरूपं संज्ञानं सम्यक् ज्ञापकमसि उल्वसम्भवात् पशवो वा ऊषाः पशवः कामधरणं मयि ते पशवो भूयासुरिति ( ७, १, १, ८ ) श्रुतेः उल्वाभिप्रायमेकवचनमुल्वस्योषोत्पन्नत्वात् ॥ का० ( १७, १, ६ ) सिकताश्चाग्नेर्भस्मेत्यूषवत् : ऊषवत्सिकता निवपति ॥ सिकतादेवत्यं यजुः । हे सिकतास्वरूप ! त्वमग्नेर्भस्म भासकमसि सिकतास्थोऽग्निरत्युग्रो भवति । अग्नेश्च पुरीषं पूरणमसि पूरयतीति पुरीषं पिपर्तेरीषक्प्रत्यये औणादिके उदोष्ठ्यपूर्वस्येति उदादेशः । भस्माभिप्रायमेकवचनम् । न वा अग्निः स्वं भस्माति दहति । अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकता इति च ( ७, १, १, ९—१० ) श्रुतिः ॥ का० ( १७, १, ७ ) परिश्रिद्भिः परिश्रयति पूर्ववदेकविꣳशत्या चितः स्थेति । एकविंशतिपरिश्रिद्भिर्गार्हपत्यस्थानं वेष्टयति पूर्ववदिति प्रदक्षिणमूर्ध्वास्ताः खननीया इति ॥ परिश्रिद्देवत्यं यजुः हे परिश्रितः शर्करा ! यूयं चितः स्थ चीयन्ते भूमौ प्रक्षिप्यन्ते इति चितः भूमौ क्षिप्ता भवथ परिचितः स्थ परितः सर्वतः स्थापिता भवथ ऊर्ध्वं चीयन्त

इति ऊर्ध्वाचितः ऊर्ध्वं स्थापिताः सत्यो यूयं श्रयध्वमिदं गार्हपत्यायतनं सेवध्वम् ॥ ४६ ॥

**अयꣳ सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः । सहस्रियं वाजमत्यं न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेदः ॥ ४७ ॥**

गार्हपत्य इष्टिकाभिश्चीयते । अयं सो अग्निः षडर्चमाग्नेयं त्रैष्टुभम् । चतुर्थी षष्ठ्यौ तु अनुष्टुभौ । इष्टकोपधानं कुर्वन्नाभिनयेन दर्शयति । अयं सः गार्हपत्योऽग्निश्चीयते यस्मिंश्चिते सति अभिषुतं सोमम् इन्दुः दधे धारयति । जठरे उदरे वावशानः कामयमानः । कथं भूतं सोमं दधे । सहस्रियम् सहस्रार्हम् । वाजम् अन्नभूतं सर्वस्य जगतः । अत्यं न सप्तिम् । नकारः संप्रत्यर्थे । अनन्तरं भक्षणादेव मुदकरम् । सप्तिं शरणं तृप्तिकरम् । न केवलं यस्मिंश्चिते इन्द्रः सोमं जठरे धारयति । किन्तर्हि । त्वमपि स सवान्सन्स्तूयसे जातवेदः । ससवान्सम् हवींषि संभजमानः सन् स्तूयसे ऋत्विग्यजमानैः हे जातवेदः । अयं तावदस्य मन्त्रस्य प्रगुणोर्थश्रुतिस्तु आहुतिपरिणामाभिप्रायेण व्याचष्टे । अयं वो लोको गार्हपत्य आपः सोमः सुतोऽस्मिं ल्लोके य इन्द्रो धत्ते । जठरे वावशान इति । मध्यं वै जठरमित्यादि अयं सलोको गार्हपत्याग्निर्यस्मिँल्लोके अभिषुतः सोम परिणामभूता अपः इन्द्रस्य जठरे मध्ये दधे स्थापयति । सहस्रियं वाजमत्यन्नसप्तिमिति । आपो वै सहस्रियो वाजः अपां विशेषणानि । ससवा न्स न्स्तूयसे जातवेदः । इति व्याचष्टे । चितः संश्चीयसे जातवेद इति गार्हपत्यरूपेण चितः सन् चीयसे । आहवनीयरूपेणेति वा अर्थान्तरनिवृत्तिस्त्वम् ॥ ४७ ॥

का० [ १७, १, ८ ] मध्येऽर्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदङ्ङयᳪ सो अग्निरिति प्रत्यृचम्। ततोऽध्वर्युर्मण्डलाद्दक्षिणे उदङ्मुख उपविश्य मध्ये चतस्रोऽर्धबृहतीसंज्ञा इष्टकाः प्राचीः प्राग्लक्षणा दक्षिणोत्तरपङ्क्त्योत्तरमारभ्योपदधाति अभ्यात्मं चयनमित्युक्तेः । ऋक्चतुष्केणैकैकाम् । हस्तदीर्घास्तदर्धायामाः पद्या लोकद्वयव्यापिन्य इष्टका अर्धबृहत्य उच्यन्त इति सूत्रार्थः ॥ पञ्च ऋचो विश्वामित्रदृष्टा आग्नेय्यस्त्रिष्टुभश्चतुर्थ्यनुष्टुप् । इष्टकोपधानं कुर्वन्नभिनयेन दर्शयति अयं गार्हपत्यः सः अग्निरिष्टकाभिश्चीयत इति शेषः । यस्मिन्नग्नौ चिते सति इन्द्रः सुतमभिषुतं सोमं जठरे स्वोदरे दधे धारयति वर्तमाने लिट् । किम्भूत इन्द्रः वावशानः वष्टीति वावशानः बहुलं छन्दसीति ( पा० २, ४, ७६ ) शपः श्लौ सति द्वित्वेऽभ्यासदीर्घे शानचि रूपम् कामयमानः । कीदृशं सोमं सहस्रियं सहस्रार्हम् । वाजमन्नं बहूनां तृप्तिकरामित्यर्थः । अत्यं न नकारः सम्प्रत्यर्थः भक्षणादेव मदकरम् । सप्तिं सरणं तृप्तिकरम् । अग्नौ न केवलमिन्द्र एव सोमं जठरे धत्ते किन्तु हे जातवेदः ! जातं वेदो धनं यस्मात् हे अग्ने ! त्वमपि ससवान् हवींषि सम्भजमानः सन् ऋत्विग्यजमानैः स्तूयसे षण सम्भक्तौ क्वसुप्रत्ययः । उत्तरार्द्धस्यायं वार्थः हे जातवेदः ! सप्तिं सरणं गमनकुशलमत्यं न अश्वामिव सहस्रियं सहस्रसंख्याकेन धनेन सम्मितं वाजमन्नं ससवान् दत्तवान् सन् यजमानैस्त्वं स्तूयसे सहस्रेण सम्मितौ घ इति घप्रत्ययः षणु दाने क्वसुः ससवान् ॥ ४७ ॥

**अग्ने॒ यत्ते॑ दि॒वि वर्चः॑ पृथि॒व्यां यदोष॑धीष्व॒प्स्वा य॑जत्र । येना॒न्तरि॑क्षमु॒र्वा॑त॒तन्थ॑ त्वे॒षः स भा॒नुर॑र्ण॒वो नृ॒चक्षाः॑ ॥ ४८ ॥**

अग्ने यत्ते । हे अग्ने यत्ते तव दिवि द्युलोके आदित्यलक्षणं वर्चः । यच्च पृथिव्यामग्निलक्षणं वर्चः यच्च ओषधीषु अन्तर्व्यवस्थितम् यच्च अप्स्वन्तर्व्यवस्थितम् आयजत्र । आयष्टव्यं मर्यादया यष्टव्यम् एता न्यधस्तादुक्तानि वर्चांसि

दुपतिष्ठन्ते आपः ताश्च त्वमभिजिगासि । त्वमेवैतैः रूपैः परिणमसीत्यभिप्रायः ॥ ४९ ॥

हे अग्ने ! दिवो द्युलोकस्य सम्बन्धि अर्णमुदकं त्वमच्छाजिगासि आभिमुख्येन गच्छसि गा स्तुतिगत्योर्ह्लादिः अभ्यासेत्वं छान्दसम् अच्छाभेराप्तुमिति शाकपूणिः ( निरु० ५, ३१ ) निपातस्य चेति अच्छेत्यस्य संहितायां दीर्घः आपो वा अस्य दिवोऽर्णस्ता एष धूमेनाच्छैतीति ( ७, १, १, २४ ) श्रुतिः । किञ्च ये देवा धिष्ण्या ऊचिषे ऊचिरे उच्यन्ते धियो बुद्धीरिन्द्रियाणि इष्णन्ति प्रेरयन्ति धिष्ण्याः प्राणरूपा देवाः तान् देवांश्च त्वमच्छाजिगासि अभिगच्छसि । ऊचिषे ब्रूञः कर्मणि लिट् पुरुषवचनयोर्व्यत्ययः । प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णन्तीति ( ७, १, १, २४ ) श्रुतेः । किञ्च रोचने दीप्तिरूपे मण्डले वर्त्तमानस्य सूर्यस्य परस्तादुपरिष्टाद्या आप उपतिष्ठन्ते अवस्ताद्रवेरधस्ताच्च या आप उपतिष्ठन्ते ता आपश्च त्वमभिजिगासीत्यन्वयः त्वमेवैतैः रूपैः परिणमसीति भावः ॥ ४९ ॥

पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः । जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः ॥ ५० ॥

पुरीष्यासः । बहुवचनमिष्टकापेक्षम् । ये पुरीष्याः पशव्याः पशुभ्यो हिताः अग्नय इष्टकाः । प्रावणेभिः । प्रुङ गतौ । प्रावणैः गमनैः । लोकव्याप्तिभिः । स जोषसः समानप्रीतयः समानसेविनो वा । समानं हि ते लोकं सेवन्ते । अर्धबृहत्यो हिताश्चतस्रः । ते जुषन्तां सेवन्तां यज्ञम् अद्रुहः अहिंसितारः । अनमीवाश्च अनशना या बुभुक्षानिवृत्तिकरा इत्यर्थः । इषः अन्नभक्तीः महीः महतीः प्रभूताः ॥ ५० ॥

अनुष्टुप् । बहुवचनमिष्टकापेक्षम् अग्नयः एते इष्टकारूपा यज्ञमस्मदीयमिमं यागं जुषन्तां सेवन्ताम् अनमीवा नास्ति अमीवा व्याधिरशनायाबुभुक्षारूपो याभिस्ता अनमीवा क्षुधातृष्णानिव-

त्तिकाः महतीः बहुला इषः अन्नभक्त्रोऽश्वाग्नयो जुषन्ताम् । कीदृशा अग्नयः पुरीष्यासः पुरीषेभ्यः पशुभ्यो हिताः पुरीष्याः आज्जसेरसुक् । तथा प्रावणेभिः प्रवणैः प्रकर्षेण वनन्ति सम्भजन्ति विषयानिति प्रवणानि मनांसि तैः सजोषसः समानप्रीतयः मनसा प्रीतियुक्ता इत्यर्थः अन्येषामपि दृश्यत इति संहितायां प्रावणेति दीर्घः बहुलं छन्दसीत्येत्वम् । तथा अद्रुहः न द्रुह्यन्तीत्यद्रुहः अहिंसितारः परस्परं प्रीतियुताः ॥ ५० ॥

**इडा॑मग्ने पुरु॒दꣳस॑ꣳ स॒निं गोः श॑श्व॒त्तम॒ꣳ हव॑माना॒य सा॑ध । स्यान्नः॑ सू॒नुस्तन॑यो वि॒जावा॑ग्ने॒ सा ते॑ सुम॒तिर्भू॑त्व॒स्मे ॥ ५१ ॥**

पश्चिमे उपदधाति । इडामग्ने । इडामन्नं हे अग्ने पुरुदंसं बहुकर्मसाधनभूतम् । यत्तु श्रुत्या उक्तम् पशवो वा इडेति तद्बलीवर्दैरुपाद्यत इत्यनेन हेतुना । सनिंगोः गोः सम्बधिनींच सनिंदानंपयोदधिघृतादिकम् । शश्वत्तमं शाश्वतिकतमम् शाश्वतिककर्म । अनपायिनीम् हवमानाय । यजमानाय । सहिदेवानाह्वयति । साध प्रसाधय । एतदुक्तं भवति । अन्नं सोपसेचनं शाश्वतिकतमं यजमानाय देहि । किञ्च । स्यान्नः सूनु स्तनयः भवे चास्माकं पुत्र औरसः । विजावा । प्रज्ञातिमान् यद्वा विजयशीलः । पितरं वा योजयति वीर्येण । य या सुमत्या त्वमे तत्करोषिसा तेऽभूतु अस्मे अस्मासु ॥ ५१ ॥

का० ( १७, १, ११ ) इडामग्न इति पश्चिमे प्रतिमन्त्रमुत्तरतः । इडामग्न इति ऋग्द्वयेन प्रतिमन्त्रं पश्चिमे द्वे पादमात्र्यौ पद्ये तिरश्च्यौ उदग्लक्षणे उपदध्यात् उत्तरतोऽवस्थितो दाक्षिणामुखः इडामिति दक्षिणाम् अयं त इत्युत्तरामिति सूत्रार्थः ॥ द्वे आग्नेय्यौ त्रिष्टुबनुष्टुभौ । हे अग्ने ! हवमानाय यजमानाय इडामन्नं साध साधय सम्पादय छन्दस्युभयथेति शप आर्धधातुकाच्छिलोपः । ह्वयति आह्वयति देवान् जुहोति वा हवमानः तस्मै । यत्तु श्रुत्योक्त

पशवो वा इडेति ( ७, १, १, २७ ) तद्बलीवर्दैरन्नस्योत्पाद्यमानत्वात् । किम्भूतामिडां पुरुदंसं दंस इति कर्मनामसु ( निघ० २, १, ३ ) पठितम् । पुरूणि बहूनि दंसांसि कर्माणि यया सा पुरुदंसाः तां पुरुदंससमिति प्राप्ते टिलोपश्छान्दसः । बहुकर्मसाधनभूतमन्नं देहीत्यर्थः । तथा शश्वत्तममत्यन्तमविच्छेदेन वर्त्तमानमनपायिनं गोः सनिं धेनुसम्बन्धि दानं पयोदधिघृतादिकं सर्वदा देहीत्यर्थः । किञ्च नोऽस्माकं यजमानानां सूनुः पुत्रः स्यादस्तु । कीदृशः सूनुः तनयः औरसः पुत्रस्य सूनुशब्देनोक्तत्वाद्दत्तपुत्रादि व्यावृत्त्य तनयशब्दः यद्वा तनोत्यग्निहोत्रादिकर्माणीति विजावा प्रजावान् विडवनोरनुनासिकस्यादिति धातोराकारः । हे अग्ने ! ते तव साऽन्नगोपुत्रदानविषया सुमतिः शोभना बुद्धिरनुग्रहेणस्म अस्मसु भूतु भवतु यजमानेभ्यस्त्वयान्नादि देयमिति भावः व्यत्ययेन शपो लुक् अस्मे विभक्तेः शेआदेशो त्यदाद्यत्वम् ॥ ५१ ॥

**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥ ५२ ॥**

द्वितीयमुपदधाति । अयन्ते । व्याख्यातम् ॥ ५२ ॥

व्याख्याता [ ३ अध्या० १४ क० ) ॥ ५२ ॥

**चिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद । परिचिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ ५३ ॥**

पुरस्तादुपदधाति । चिदसि । चिञ् चयने । चितासि । सादयति । तया देवतया सादिता सती अङ्गिरस्वत् प्राणवत् । यथा हि प्राणः सर्वमङ्गम् व्याप्य स्थितः एवं त्व मपि । ध्रुवासीद निविशस्व । तया देवतयेति वाग्वै ते वताङ्गिरस्वदिति प्राणो वा अङ्गिरा इति श्रुतिः । द्वितीया मुपदधाति । परि चिदसि । परि सर्वत श्चितासि तया देवतयेति व्याख्यातम् ॥५३॥

का० ( १७, १, १२ ) चिदसीति पूर्वे दाक्षिणतः प्रति मन्त्रम् । तदुत्तरतोऽपरमार्गेण दक्षिणां गत्वा चिदसीति प्रतिमन्त्रं पूर्वे ति-

रश्च्यौ उदग्लक्षणे दक्षिणे स्थित उदङ्मुख उपदधाति चिदसी-त्युत्तरां परिचिदसीति दक्षिणाम् ः इष्टकादैवत्ये द्वे यजुषी । चीयत इति चित् । हे इष्टके ! त्वं चित स्थापितासि यद्वा चिनोति भोगान् सम्पादयतीति चित् त्वं भोगसम्पादिकासि । तया प्रसिद्धया देव तया वाग्रूपया सादिता सती अङ्गिरस्वत्प्राणवत् प्राणा यथा सर्वा-ङ्गेषु स्थितास्तथा ध्रुवा स्थिरा सती त्वं सीद निविशस्व तया देव-तयेति वाग्वै सा देवताङ्गिरस्वदिति प्राणो वा अङ्गिरा इति श्रुतिः ॥ द्वितीयामुपदधाति । परिचित् परितः सर्वतः चीयते परितो भोगां-श्चिनोतीति वा त्वं परिचिदसि । तथा देवतयेति व्याख्यातम् ॥ ५३॥

लोकं॑ पृण छि॒द्रं पृ॑णाथो॑ सीद ध्रु॒वा त्वम् । इ॒न्द्रा॒ग्नी त्वा॒ बृह॒स्पति॑र॒स्मिन् योना॑वसीषदन् ॥ ५४ ॥

लोकं पृणा मुपदधाति । लोकं पृण । पद्यादि लोकं स्थानं पृण पूरय । छिद्रं पृण पूरय । अग्ने रवयवभूता भव । अथो अपि च सीद निविशस्व ध्रुवा निश्चला त्वम् । इन्द्राग्नी च । त्वां बृहस्पतिश्च अस्मिन् योनौ स्थाने असीषदन् आसादय-न्तु । न हि मानुषो ऽध्वर्युः त्वां सादयितुं समर्थ इत्यभिप्रायः॥५४॥

का० ( १७ १, १७ ) तिसृषु लोकम्पृणासु मन्त्रो दशसु च द्वयो र्वा दशस्वेकस्यां च । आदौ तिसृषु लोकम्पृणेष्टकासु तूष्णीमुपहि तासु लोकं पृणेत्यभिमन्त्रणम् ततो दशसु मन्त्रः यद्वादौ द्वयोर्लो-कम्पृणयोर्मन्त्रस्ततो दशसु तत एकस्याम् एवमेकविंशतीष्टका गा-र्हपत्ये स्युरिति सूत्रार्थः॥लोकम्पृणादेवत्यानुष्टुप् । हे लोकम्पृणेष्टके त्वं लोकं पृण गार्हपत्यचयनदेशे पूर्वेष्टकाभिरनाक्रान्तं स्थानं पृण । तथा छिद्रं, पृण किञ्चिदपि छिद्रं यथा न दृश्यते तथा संश्लिष्टा भवेत्यर्थः पृण तृप्तौ तुदादिः । अथो अपि च ध्रुवा दृढा सती त्वं सीद तिष्ठ । किञ्च इन्द्राग्नी बृहस्पतिश्चैते देवा अस्मिन् योनौ स्थाने त्वा त्वामसीषदन् सादितवन्तः सदेश्चङ् न हि मानुषोऽध्वर्युस्तां सादयितुं शक्य इति भावः ॥ ५४ ॥

ता अ॑स्य सू॒ददो॑हसः॒ सोम॑ꣳ श्रीणन्ति॒ पृश्न॑यः ।

जन्म॑न् दे॒वानां॒ विश॑स्त्रि॒ष्वा रो॑च॒ने दि॒वः ॥ ५५ ॥

सूददोहसाधिवदति । ता अस्य । अनुष्टुप् । यज्ञाहुतिपरिणामभूता आप उच्यन्ते । व्यवहितपदप्रायो मन्त्रः । ता यज्ञपरिणामभूता दिव इत्यन्तम्पदमिह संबध्यते । दिवः द्युलोकात् च्युताः । सूददोहसः । आपो वै सूदोऽन्नं दोह इति श्रुतिः । अन्नसहिता आपः । अस्येत्यस्य पदस्य विश इत्यनेन सम्बन्धः । यज्ञो वै विश इति श्रुतिः । अस्य शिवः अस्य यज्ञस्य सम्बन्धिनं सोमं श्रीणन्ति मिश्रयन्ति । पृश्नयः अन्नं वै पृश्नीति । एतदुक्तं भवति । अस्मिन् लोके पतिता आप ओषधिवनस्पत्यन्नभूताः सोमस्योपकुर्वन्ति । कस्मिन्काले श्रीणन्ति । जन्मन्देवानाम् । संवत्सरो वै देवानां जन्मेति श्रुतिः । संवत्सरभृतिनः संवत्सरे सोमयागः तदभिप्रायमेतत् त्रिष्वा रोचने सवनानि वै त्रीणि रोचनानीति श्रुतिः । त्रिष्वारोचनेष्विति वचनव्यत्ययः । त्रिषु सवनेषु । एवं श्रुतितोऽयं मन्त्रो व्याख्यातः ॥ ५५ ॥

का० ( १६, ७, २४ ) नित्ये सादनसूददोहसा उपधानादुत्तरे तया देवतया ता अस्येति । तया देवतयेति सादनम् ता अस्येति सूददोहसाधिवदनम् एते नित्ये सर्वत्रेति सूत्रार्थः ॥ इन्द्रपुत्रप्रियमेधदृष्टाब्देवत्यानुष्टुप् । दिवो द्युलोकसम्बन्धिनी दिवश्च्युता वा सूददोहसः सूदाश्च दोहसश्च ते सूददोहसः सूदेन जलेन सहिता दोहसोऽन्नानि अन्नयुक्ता आपः ताः प्रसिद्धा अस्य विशो यज्ञस्य सम्बन्धिनं सोममाश्रीणन्ति सम्यग्मिश्रयन्ति पक्कं कुर्वन्ति वा श्री पाके क्र्यादिः आपो वै सूदोऽन्नं दोहः ( ८, ७, ३, २१ ) यज्ञो वै विश इति च ( ८, ७, ३, २१ ) श्रुतिः । कीदृशाः सूददोहसः पृश्नयः नानाविधाः यद्वा अन्नं वै पृश्नीति ( ८, ७, ३, २१ ) श्रुतेरन्नरूपाः अत्रागत्य व्रीह्यादिधान्यानिष्पादका इत्यर्थः । कदा श्रीणन्ति देवानां जन्मन् जन्मनि संवत्सरे संवत्सरो वै देवानां ज-

न्मेति ( ८, ७, ४, २१ ) श्रुतेः । संवत्सरे संवत्सरे सोमयागस्त-दभिप्रायमेतत् । सवनानि वै त्रीणि रोचनानीति ( ८, ७, ३, २१ ) श्रुतिः । यज्ञपरिणामभूता अन्नोत्पादिका आपो दिवः सकाशा-दस्मिन् लोके पतित्वौषधिवनस्पत्यन्नभूताः सत्यः सोमस्योपस्कु-र्वन्तीति भावः ॥ ५५ ॥

**इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥ ५६ ॥**

पुरीषं निवपति । इन्द्रं विश्वाः । ऐन्द्र्यनुष्टुप् इन्द्रं विश्वाः सर्वाः गिरः स्तुतयः ऋग्यजुःसामलक्षणाः । अवीवृधन् वर्द्धयन्ति । समुद्रव्यचसम् । समुद्रमिव विविधायनं नानागतिम् अक्षोभ्यबलं वा । रथीतमं रथीनाम् । सर्वेषां रथिनां मध्ये रथयुद्धलब्धातिसयम् वाजानां सत्पतिं पतिम् । वाजानामन्नानां पतिं सताञ्च पतिम् । श्रुतिस्मृतिकर्मानुष्ठातारः सन्त उक्ताः ॥ ५६ ॥

का० ( १७, १, १८ ) चात्वालदेशात् पुरीषं निवपतीन्द्रं विश्वा इति । चात्वालस्थानात् मृदमानीय गार्हपत्याचितेरुपरि क्षिपति ॥ इन्द्रदेवत्या मधुच्छन्दः सुतजेतृदृष्टानुष्टुप् । विश्वाः सर्वा गिरः स्तुतयः ऋग्यजुःसामरूपा इन्द्रमवीवृधन् वर्धयन्ति । कीदृशमिन्द्रं समुद्रव्यचसं समुद्रवद् व्यचो व्याप्तिर्यस्य तं समुद्रवद् व्यापकं विविधाञ्जनं नानागतिमित्यर्थः अक्षोभ्यगतिं वा । रथीनां रथयु-क्तानां सर्वेषां मध्ये रथीतममत्यन्तं रथयुतं रथयुद्धे लब्धातिशय-मित्यर्थः । ईद्रथिन इति ( पा० ८, २, १७ वा० १ ) घे परे रथिन ईदादेशः । तथा वाजानामन्नानां पतिं स्वामिनं सत्पतिं स्वधर्मव-र्तिनां च प्रतिपालकम् ॥ ५६ ॥

**समितꣳ सङ्कल्पेथाꣳ सम्प्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभि संवसानौ ॥ ५७ ॥**

चित्येनावुख्यं निवपति समितामिति चतसृभिरुष्णिगुपरिष्टा

द्बृहत्युष्णिग् पङ्क्तिभिर्द्व्यग्निदेवत्याभिः । तृतीयो वाग्निदेवत्या । समितम् । द्वितीयपादप्रभृति । व्याख्यायंते । यो युवां संप्रियौ संगतिप्रियौ रोचिष्णू रोचनशीलौ च । तौ सुमनस्यमानौ परस्परं शोभनं चिन्तयन्तौ । इषमन्नमूर्जं तदुपसेचनं सर्पिरादि अभिसंवसानौ अभ्यवहरन्तौ । वस्ते रर्थान्तरे वृत्तिः एतत्कुर्वाणौ समितम् इण् गतौ । संगतिं कुरुतम् सङ्कल्पेथां च । एकसंकल्पौ । च भवतमित्येतदाशास्महे ॥ ५७ ॥

का० ( १६, १, १९ ) समंविलां कृत्वोख्यं निवपति समितमिति । समं विलं यस्याः सा समंविला विभक्त्यलुक् छान्दसः गार्हपत्यचितिं मृत्पूरणेन परिश्रित्समां कृत्वा तन्मध्ये नीचैरुख्याग्निं स्थापयति चतुर्मन्त्रैः ॥ चतस्रो ह्यग्निदेवत्याः । समितम् उष्णिगेकाधिका अनियताक्षरपादत्वेऽप्यष्टाविंशत्यक्षरत्वात् । हे चित्योख्याग्नी ! युवां समितं सङ्गच्छतम् । इण् गतौ सङ्गतौ भवतं सङ्कल्पेथां च एकसङ्कल्पौ भवतम् । यद्वा सङ्कल्पनं यज्ञनिष्पादनं कुरुतम् । कीदृशौ युवाम् सम्प्रियौ सम्प्रीणीतस्तौ इगुपधेति कः सम्यक् परस्परं प्रीतियुक्तौ । रोचिष्णू दीप्यमानौ अलङ्कृञित्यादिना इष्णुच् । सुमनस्यमानौ शोभनं मनः कुरुतस्तौ सुमनस्येते । सुमनस्येते तौ सुमनस्यमानौ सुधातुः क्यङ्ङन्ताच्छानच् परस्परं शोभनं चित्तवन्तौ । इषमन्नमूर्जमुपसेचनं घृतादि चाभिसंवसानौ अभ्यवहरन्तौ भुञ्जानौ अभितः सम्यक् सम्पादयन्तौ वा वस्तेरर्थान्तरे वृत्तिः ॥ ५७ ॥

**सं वां मनां॑सि सं व्र॒ता समु॑ चि॒त्तान्याक॑रम् । अग्ने॑ पुरीष्याधिपा भ॑व॒ त्वं न इ॒षमूर्ज॒ं यज॑मानाय धेहि ॥ ५८ ॥**

सं वाम् । आसमस्करम् । आभिमुख्येन स्थित्वा संस्कृतवान् । वां युवयो र्मनांसि । बुद्ध्यहंकारमनांसीति बहुवचनम् । संव्रता । व्रतानीमि कर्मनाम । संस्कृतवांश्च युवयोः कर्माणि ।

समुचितानि । चितशब्देन संस्कारा मनोगता उच्यन्ते । संस्कृतवांश्चास्मि मनोगतान्संस्कारान् । उकारः समुच्चयार्थीयः । एवं मनः कर्म संस्कारैरेकीभूतैरेकीभूतं त्वामेकदेवताभिमानिनं प्रार्थये । हे अग्ने पुरीष्य पशव्य अधिपा भव अधिपति भव । त्वन्नः अस्मभ्यम् इषं चोर्जं च यजमानाय च धेहि देहि । इष मन्न मूर्ज्जं च तदुप सेचनं दध्यादि ॥ ५८ ॥

उपरिष्टाद् बृहती अष्टसप्तनवत्रयोदशाक्षरपादत्वादेकाधिका । हे पूर्वोक्तावग्नी ! वां युवयोर्मनांसि बहुवचनत्वान्मनोबुद्ध्यहङ्कारानहं समाकरं सर्वतः सङ्गतान् करोमि करोतेर्लङ्युत्तमबहुवचने शपि अकरामिति रूपम् । तथा व्रता व्रतानि कर्माणि समाकरम् । व्रतमिति [ निघ० २, १, ७ ] । तथा चित्तानि च मनोगतसंस्कारान् समाकरम् । उकारः समुच्चयार्थः । एवं मनःकर्मसंस्कारैरेकीकृतैरेकीभूतमग्निं प्रार्थये हे पुरीष्य ! पशव्य ! हे अग्ने ! त्वं नोऽस्माकम् अधिपातीति अधिपाः पालको भव इषमन्नमूर्जं तदुपसेचनं दध्यादि च यजमानाय धेहि देहि ॥ ५८ ॥

अग्ने॒ त्वं पु॑री॒ष्यो॑ र॒यि॒मान् पु॑ष्टि॒माँ २ऽ॥ अ॑सि । शि॒वाः कृ॒त्वा दिश॒ः सर्वा॒ः स्वं योनि॑मि॒हास॑दः ॥ ५९ ॥

अग्ने त्वम् । हे अग्ने त्वं पुरीष्यः रयिवांश्च धनवांश्च पुष्टिवांश्च असि यतः अतः शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः । इति व्याख्यातम् ॥ ५९ ॥

उष्याग्निदेवत्योष्णिक् आर्ष्येकाधिका अनियताक्षरपादत्वात् । हे अग्ने ! त्वं पुरीष्यः पशव्योऽसि रयिमान् धनवान् पुष्टिमान् पोषयुक्तश्चासि अतः सर्वाः दिशः शिवाः शान्ताः कृत्वा इहास्मिंश्चयने स्वं योनिं स्वकीयं स्थानमासदः प्राप्नुहि ॥ ५९ ॥

भव॑तं नः॒ सम॑नसौ॒ सचे॑तसावरे॒पसौ॑ । मा य॒ज्ञꣳ हिꣳसिष्टं॒ मा य॒ज्ञप॑तिं जातवेदसौ शि॒वौ भ॑वतम॒द्य नः॑ ॥ ६० ॥

भवतन्न इति व्याख्यातम् ॥ ६० ॥

आर्षी पङ्क्तिः अनियताक्षरपादत्वात् अग्निदेवत्या । पुनर्व्याख्यायते ( ४ अध्या० ३ क० ) । हे जातवेदसौ अग्नी ! यज्ञमस्मदीयं कर्म युवां मा हिंसिष्टं मा विनाशयतम् यज्ञपतिं यजमानं च मा हिंसिष्टम् अद्यास्मिन् कर्मदिने नोऽस्मभ्यं शिवौ शान्तौ युवां भवतम् । किञ्च युवां नोऽस्मदर्थं समनसौ सचेतसौ अरेपसौ च भवतम् । मनसा सहितौ समानचित्तौ । अन्यविषयं मनो हित्वास्मदनुग्रहाभिमुखत्वं समनस्त्वम् । अस्मदनुग्रहेऽन्योन्यविप्रतिपत्तिराहित्यं सचेतस्त्वम् । अरेपसौ निष्पापौ अस्माकं प्रमादिकापराधसत्त्वे कोपाभावो निष्पापत्वम् ईदृशावस्मभ्यं भवतमित्यर्थः ॥ ६० ॥

मा॒तेव॑ पु॒त्रं पृ॑थि॒वी पु॑री॒ष्य॑म॒ग्नि५ स्वे योना॑वभारु॒खा । तां विश्वै॑र्दे॒वैर्ऋ॒तुभिः॑ संविदा॒नः प्र॒जाप॑तिर्वि॒श्वक॑र्मा॒ वि मु॑ञ्चतु ॥ ६१ ॥

उखां शिक्याद्विमुञ्चति मातेव पुत्रम् । अनुष्टुप् । उखा स्तुतिः । यं यमुखा माता इव पुत्रं पृथिवीरूपमवस्थाय पुरीष्यं पशव्यम् अग्निम् स्वे स्वकीये उत्सङ्गे कृत्वा अभाः । प्रथमपुरुषस्यैतद्रूपम् उखाशब्दसामानाधिकरण्यात् अभारुखा अभार्षीत् धारितवती । तामिदानीङ्कृतमत्यां सतीं विश्वैर्देवैः ऋतुभिः संविदानः । अहो महत्कर्मकृतमित्येवं संवादं कुर्वन् प्रजापतिर्विश्वकर्मा च विमुञ्चतु शिक्यात् ॥ ६१ ॥

का० [ १७, १, २१ ] सिकताभिः समंविलां कृत्वा मातेव पुत्रमिति शिक्याद्विमुच्याग्निवन्निधायासिञ्चति पयोमध्ये तूष्णीम् । शून्यामुखां सिकताभिः सम्पूर्य मातेवेति मन्त्रेण शिक्यात् पृथक् कृत्वाग्निवदिति स्थापिताग्नेरुत्तरेऽरत्निमात्रे गार्हपत्यचितेरुपर्येवोखां निधाय तन्मध्ये तूष्णीं दुग्धं सिञ्चेदिति सूत्रार्थः ॥ उखादेवत्या त्रिष्टुप् तृतीयो नवकः चतुर्थो द्वादशकः । पृथिवी भूरूपा मृण्मयी या उखा पुरीष्यं पशव्यमग्निं स्वे योनौ स्वकीयगर्भस्थाने

अभाः अभार्षीत् धृतवती भृञो लुङि वहुलं छन्दसीति ( पा० ७, ३, ९७ ) ईडागमाभावे सिचो विसर्गे तिपि लुप्ते रूपम् । माता पुत्रमिव यथा माता पुत्रमुत्सङ्गे बिभर्ति । प्रजापतिः कृतकृत्यां तामुखां विमुञ्चतु शिक्यपाशाद्विमुक्तां करोतु । कीदृशः प्रजापतिः विश्वैर्देवैर्ऋतुभिश्च संविदानः संवित्त इति ऐकमत्यं गतः अहो महत्कर्मोखया कृतमिति संवादं कुर्वन् । विश्वकर्मा विश्वं सृष्टिरूपं कर्म यस्यासौ विश्वकर्मा ॥ ६१ ॥

**असु॑न्वन्त॒मय॑जमानमिच्छ स्ते॒नस्ये॒त्यामन्वि॑हि तस्क॑रस्य । अ॒न्यम॒स्मदि॑च्छ॒ सा त॑ इ॒त्या नमो॑ देवि निर्ऋते॒ तुभ्य॑मस्तु ॥ ६२ ॥**

नैर्ऋतीनामिष्टकानामुपधानं तिसृभिरनुष्टुब्भिः । असुन्वन्तम् सोमाभिषवमकुर्वाणम् यजमानं चान्यैः यज्ञैः क्रतुभिः इच्छ परिगृह्णीष्व । किञ्च । स्तेनस्येत्यामन्विहि । स्तेनस्य चौरस्य इत्यां गतिम् अनुकुर्वन् इहि । प्रपलाय्य याहि । तस्करस्य । तदेवायञ्चौरकर्म करोति नान्यत् सतस्करः सन् तस्कर इत्युच्यते । पुनरप्याह । अन्यमस्मदिच्छ अन्यं पुरुष मस्मत्तः इच्छ ग्रहीतुम् सा ते तव इत्या गतिः । एवं दण्डगर्भमुक्त्वा अथेदानीं साम्नाह । नमो देवि निर्ऋते तुभ्यमस्तु । हे देवि निर्ऋते तुभ्यम् नमः अस्तु ॥ ६२ ॥

का० ( १७, १, २३ ] नैर्ऋतीः कृष्णास्तुषपक्वास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यशान्नहोमवद्देशे दक्षिणोत्तराः कृत्वा दक्षिणामुखोऽनुपस्पृशन्नसुन्वन्तमिति प्रत्यृचं पराचीः । ततोऽध्वर्युः राजसूये हविष्यशान्नहोमे यादृशो देशस्तादृशे स्वयं प्रदीर्णे इरिणे वा असुन्वन्तमिति प्रत्यृचं तिस्रो नैर्ऋतीसंज्ञा इष्टका दक्षिणोत्तराः कृत्वा ततस्ता अस्पृशन्नुपदधाति । कीदृशीः पाकेन कृष्णवर्णाः तुषैरेव पक्वाः लक्षणहीनाः पद्याः पराचीः अनात्ममुखीः । स्वयं दक्षिणामुखः पूर्वमुत्तरां निधाय ततो दक्षिणे द्वे इति सूत्रार्थः ॥ तिस्रो निर्ऋतिदेवत्यास्त्रिष्टुभः । हे निर्ऋते ! असुन्वन्तं सोमयागमकुर्वाणम्

अयजमानमन्यैर्हविर्यज्ञैर्यजनमकुर्वाणं च त्वमिच्छ प्रतिगच्छ तं गृहाणेत्यर्थः । किञ्च स्तेनो गुप्तचोरः तस्करः प्रकटचोरः तयोरित्यां गतिमन्विहि अनुगच्छ पृष्ठतो गत्वा तावपि गृहाणेत्यर्थः । सर्वथा सोमं सुन्वद्भ्यो हविर्यज्ञैश्च यजद्भ्योऽस्मदन्यमिच्छ न त्वस्मानिच्छ । सा दुष्टाशिक्षा ते तवेत्या गतिश्चर्या हे देवि निर्ऋते ! एवम्भूतायै तुभ्यं नमोऽस्तु ॥ ६२ ॥

**नमः सु ते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम् । यमेन त्वं यम्या संविदानोत्तमे नाके अधिरोहयैनम् ॥ ६३ ॥**

नमः सु ते नमस्कारः शोभनः ते तव हे निर्ऋते अस्तु । निर्ऋतिः कृच्छ्रापतिः भूमि र्वा । तिग्ममुत्साहस्तेजो यस्याः सा तिग्मतेजाः तस्याः सम्बोधनं हे तिग्मतेजः । अयस्मयं विचृत । अयोमयं विच्छिन्धि बन्धमेतम् येनाहं बद्धः अजस्य जीवभावलक्षणेन । जनित्वा म्रियते मृत्वा जायत इति । किञ्च । यमेनाग्निना त्वं यम्या च पृथिव्यां संविदाना एकमती भूय । उत्तमे नाके उत्कृष्टे स्वर्गे अधिरोहय एनं यजमानम् ॥ ६३ ॥

निर्ऋतिः कृच्छ्रापतिः स्यादलक्ष्मीस्तु निर्ऋतिरित्यभिधानात् ( अमर० १, २, १३ ) भूमिर्वा निर्ऋतिर्दिगभिमानिनी देवता वा । अलक्ष्म्यां दिक्पतौ चापि निर्ऋतिर्निरुपद्रवे इति ( हेम० नाना० ३, २७२ ) कोशात् । तिग्मं तीक्ष्णं दुःसहं तेजो यस्याः सा तिग्मतेजाः तस्याः सम्बोधने हे तिग्मतेजः । हे निर्ऋते ! ते तुभ्यं सुः सुतरां नमोऽस्तु । अयस्मयमयोमयम् अयस्मयादीनि छन्दसीति सत्वम् । लोहपाशवद्दृढमेतं बन्धं जीवत्वेन जन्ममृतिरूपमज्ञानं त्वं विचृत विच्छिन्धि नाशय चृतो ग्रन्थे तुदादिः द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । किञ्च यमेन अग्निना यम्या पृथिव्या च संविदाना ऐकमत्यं गता सती उत्तमे उत्कृष्टे नाके सर्वसुखोपेते दुःखमात्रहीने स्वर्गे एनं यजमानमधिरोहय स्थापय ॥ ६३ ॥

**यस्यास्ते घोर आसन् जुहोम्येषां बन्धानामवस-**

र्जनाय। यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वा हं परि वेद विश्वतः ॥ ६४ ॥

यस्यास्ते। यस्याः तव हे घोरे विषमशीले। आसन् आस्ये मुखे जुहोमि हविः एषां बन्धानाम् अवसर्ज्जनाय विमोचनाय। सा त्वमेता न्बन्धानस्मत्तो विसृज। किञ्च। यां च त्वां जनो लोकः भूमिरिति कृत्वा प्रमन्दते स्तौति तां त्वा महमपि स्तौमि। तथैव प्रातिष्ठा भूतानां जनयित्री मातेव बिभर्तीत्यादिभिर्गुणैः। किञ्च। निर्ऋतिं त्वाम हं परिवेद जानामि विश्वतः सर्वतः। नितरां हि विदित आमन्त्रितो हिनस्तीत्यत एतान् बन्धानवसृज अस्मत्तः ॥ ६४ ॥

हे घोरे विषमशीले क्रूररूपे निर्ऋतिदेवि ! यस्याः ते तव आसन् आस्ये मुखे अहं जुहोमि आहुतिवदिष्टकामुपदधामि। किमर्थम् एषां बन्धानां यजमानस्य स्वर्गाप्तिप्रतिबन्धकानां पापानामवसर्जनाय। किञ्च जनो जन्तुमात्रो या त्वा त्वां भूमिरिति प्रमन्दते स्तौति शास्त्रानभिज्ञत्वात्। मदिङ् स्वपने जाड्ये मदे मोदे स्तुतौ गताविति धातुः। त्वं तु निर्ऋतिः। अहं तु शास्त्रज्ञतया तादृशीं त्वा त्वां विश्वतः सर्वथापि निर्ऋतिमेव परिवेद सम्यग् जानामि। निर्ऋतिशब्दस्यायमर्थः सर्वदेवसाधारणाद्देवयजनान्निष्क्रम्य स्वतन्त्रदेशे विदीर्णादौ ऋतिः प्राप्तिर्यस्याः सा निर्ऋतिरिति। इदं प्रकारद्वयं वेदेति विश्वत इत्युक्तम् ॥ ६४ ॥

यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम्। तं ते विष्याम्यायुषो न मध्यादथैतं पितुमद्धि प्रसूतः ॥ नमो भूत्यै येदं चकार ॥ ६५ ॥

शिक्यरुक्मपाशेड्वासन्दीः परेणास्याति। यन्ते देवी। त्रिष्टुप्। यजमान उच्यते यं ते देवी निर्ऋतिः आबबन्ध आबद्धवती शिक्यपाशं रुक्मपाशं च। ग्रीवासु कण्ठे। अविचृत्यम्। चृती च्छेदने। अविच्छेद्यम् अनवखण्डनीयम् अनेनैव

यजुषा तं पाशं ते तव विष्यामि । स्यतिरुपसृष्टो विमोचने । विमुञ्चामि । आयुषो न मध्यात् । अग्निर्वा आयुस्तस्यैतन्मध्यं यश्चितो गार्हपत्यो भवत्याचित आहवनीयः नकारः सम्प्रत्यर्थे । अग्नेर्मध्यात् अथोन्मुक्तपाशः सन् अग्निरूपमवस्थाय । यजमान एतं पितुमन्नम् अद्धि भक्षय । प्रसूतोऽभ्यनुज्ञातो निर्ऋत्या । उदपात्रं निषिच्य अन्तरात्मेष्टकमुपातिष्ठन्ति । नमो भूत्यै । विराडेकपदा भूतिदेवत्या । नमो भूत्यै श्रियै या इदमग्निलक्षणङ्कर्म चकार कृतवती ॥ ६५ ॥

क० ( १७, २, ४ ) शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यं त इति । शिक्यं रुक्मपाशं इण्डुं आसन्दीं च नैर्ऋतीष्टकातः पश्चात् क्षिपति ॥ यजमानदेवत्या त्रिष्टुप् । यजमानं प्रत्युच्यते । हे यजमान ! निर्ऋतिर्देवी ते तव ग्रीवासु कण्ठावयवेषु यं पाशं शिक्यरूपमाबबन्ध आ समन्ताद्बद्धवती कीदृशं पाशमविचृत्यं चृतीछेदने अच्छेद्यं दृढं तं ग्रीवस्थं ते तव पाशमनेन मन्त्रेणाहं विष्यामि विमुञ्चामि स्यतिरुपसृष्टो विमोचनार्थः । कस्मात् स्थानाद्विमुञ्चामि आयुषोऽग्नेर्मध्याद्गार्हपत्याचितिस्थानात् न सम्प्रति इदानीमेव पाशं दूरीकरोमीत्यर्थः । नकारः सम्प्रत्यर्थः अग्निर्वा आयुस्तस्यैतन्मध्यं तच्चितो गार्हपत्यो भवत्याचित आहवनीय इति ( ७, २, १, १५ ) श्रुतेरायुःशब्देनात्राग्निरुच्यते । अथ पाशविमोकानन्तरं प्रसूतः निर्ऋत्यानुज्ञातः सन् अग्निरूपमाश्रित्य हे यजमान ! एवं पितुमन्नमद्धि भक्षय ॥ का० [ १७, २, ४ ] उदपात्रं निषिच्यान्तरात्मेष्टकमुत्तिष्ठन्ति नमो भूत्या इति । शिक्यादिनिरसनानन्तरमात्मनो नैर्ऋतीष्टकानां च मध्ये जलपूर्णं चमसं तूष्णीं निनीय ब्रह्मयजमानाध्वर्यवो नम इति मन्त्रेणोत्तिष्ठन्ति नैर्ऋतीसमीपादिति सूत्रार्थः ॥ भूतिदेवत्यैकपदा विराट् । या देवी इदमग्निलक्षणं कर्म चकार कृतवती तस्यै भूत्यै श्रीरूपिण्यै देव्यै नमो नमस्कारोऽस्तु ॥६९॥

निवेशनः सङ्गमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ

स॒म॒रे प॑थी॒नाम् ॥ ६६ ॥

शालाद्वार्योपस्थानम् । निवेशनः । त्रिष्टुप् । पृथिवीलोकसंस्तुतोऽयमग्निर्योऽयमग्निर्निवेशनः । निविशन्तेऽस्मिन्निति निवेशनः । सङ्गच्छन्तेऽस्मान्निति सङ्गमनः । केषाम् । वसूनां धनानाम् । यश्चायं विश्वरूपा । सर्वाणि आहवनीयदक्षिणाग्न्यतिप्रणीताग्नीध्रधिष्ण्यप्रभृतीनि । अभिचष्टे अभिपश्यते । सचीभिः स्वैः स्वैर्युक्तानि । कथं पश्यति। देव इव सविता । सत्यधर्मा अवितथकर्मकारी । यश्च इन्द्रो न इन्द्र इव तस्थौ तस्थिवान् । समरे संग्रामे । पथीनां । परिपन्थिभिः सह । तं वयं स्तुम इति वाक्यशेषः ॥ ६६ ॥

का० ( १७, २, ६ ) अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेशन इति । ब्रह्मयजमानाध्वर्यवो नैर्ऋत्यप्रधानदेशात् पश्चादपश्यन्तः शालां गच्छन्ति अध्वर्युरेत्य शालाद्वारि भवं गार्हपत्याचितिरूपमग्निमुपतिष्ठते ॥ विश्वावसुगन्धर्वदृष्टेन्द्रदेवत्या त्रिष्टुप् । अयमग्निः विश्वा विश्वानि रूपा रूपाणि अभिचष्टे पश्यति आहवनीयातिप्रणीताग्नीध्रधिष्ण्यादीनि सर्वाणि रूपाणि सर्वतः पश्यति । कीदृशानि रूपाणि शचीभिः स्वैः स्वैः कर्मभिर्युक्तानीति शेषः । कीदृशोऽग्निः निवेशनः निवेशयति यजमानं स्वगृहे स्थापयतीति निवेशनः । तथा वसूनां धनानां सङ्गमनः सङ्गमयति प्रापयतीति सङ्गमनः प्रजापशुरूपधनप्रापकः । सत्यधर्मा सत्योऽवश्यम्भाविफलोपेतो धर्मोऽग्निहोत्रादिलक्षणो यस्यासौ सत्यधर्मा । क इव सविता देव इव यथा सविता सूर्यो देवः सर्वाणि रूपाणि अभिचष्टे । यश्चाग्निः पथीनां विभक्तिव्यत्ययः पथिभिः परिपन्थिभिः सह समरे संग्रामे इन्द्रो न इन्द्र इव तस्थौ स्थितवान् यथेन्द्रो युद्धे तिष्ठति तद्वत् तं वयं स्तुम इति शेषः । पथिन्शब्दस्य परिपन्थिवाचकत्वाद्भस्य टेरिति टिलोपाभावे छान्दसे दीर्घे पथीनामिति रूपम् ॥ ६६ ॥

सीरा॑ युञ्जन्ति क॒वयो॑ यु॒गा वित॑न्वते॒ पृथ॑क् ।
धीरा॑ दे॒वेषु॑ सुम्न॒या ॥ ६७ ॥

सीरं युज्यमानमभि मन्त्रयते गायत्रीत्रिष्टुब्भ्याम् । सीरा युञ्जन्ति । सीराणि लाङ्गलानि युञ्जति । कवयो मेधाविनः। युगा वितन्वते । युगानि च वितन्वन्ति । पृथक् नाना । कथं भूताः कवयः युञ्जन्ति। धीराः धीमन्तः अग्निक्षेत्रविदः । किमर्थं युञ्जन्ति । देवेषु सुम्नया सुम्नमिति सुखनाम । द्वितीयार्थे तृतीया । देवेषु सुम्नं सुखम् कर्तुमिति शेषः । सीरकविशब्दयो र्बहुवचनं पूजार्थं युगानि तु बहून्यपि यज्ञे भवन्ति ॥ ६७ ॥

का० ( १७, २, ११ ) दक्षिणामग्निश्रोणिमपरेण तिष्ठन् युज्यमानमभिमन्त्रयते सीरा युञ्जन्तीति । चितेर्दक्षिणश्रोणेः पश्चिमे तिष्ठन्नध्वर्युः प्रतिप्रस्थात्रोत्तरांसपूर्वं षड्भिर्वा दशभिश्चतुर्विंशत्या वा वृषैर्युज्यमानमौदुम्बरं हलं द्वाभ्यामभिमन्त्रयते ॥ सीरदेवत्ये सोमपुत्रबुधदृष्टे द्वे गायत्रीत्रिष्टुभौ । धीराः धीमन्तोऽग्निक्षेत्रविदः कवयः कृषिकर्माभिज्ञाः सीरा सीराणि हलानि युञ्जन्ति वृषैर्योजयन्ति युगानि पृथक् नाना वितन्वते विस्तारयन्ति । किं कर्तुम् देवेषु सुम्नया । सुम्नमिति सुखनाम ( निघ० ३, ६, १ ) ततो द्वितीयैकवचनस्य सुपां सुलुगिति यादेशः सुम्नं सुखं कर्त्तुमिति शेषः । देवानां सुम्नं कर्त्तुं युञ्जन्तीत्यर्थः । चतुर्थ्या यादेशो वा देवानां सुम्नाय युञ्जन्ति । सीरकविपदयोर्बहुत्वं पूजार्थं तयोरेकत्वात् युगानि बहूनि सन्ति ॥ ६७ ॥

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात् ॥ ६८ ॥

युनक्त सीरा । सीराणि युनक्त वियुगा तनुध्वम् वितनुध्वम् युगानि सम्यग् योक्त्रप्रभृतिभिः । ततः कृते योनौ वाहनादिभिः । वपत इह क्षेत्रे बीजं व्रीह्यादि । गिरा च वाचा च । या ओषधीरित्यादिकया । चशब्दात्प्रसेन च वपत । तथाच वपत यथा श्रुष्टिः अन्नजातिः व्रीह्यादिका सभराः सह भरसाकृ-

लवनातेन वर्त्तत इति सभराः । सान्तोऽयं स्त्रीलिङ्गः शब्दः । आनामितफलेत्यर्थः । असत् भवेत् । नोऽस्माकम् यथानेदीयः अन्तिकतमम् । इत् शब्दोऽनर्थकः । सृण्यः दात्रान् पक्वम् औषधम् आ इयात् आगच्छेत् । एतदुक्तं भवति । अतिघनत्वादोषधीनां निकटतमन्दात्रभूमेश्च दात्रपूरं पक्वमोषधमागच्छेत् यथा तथा वपतेति ॥ ६८ ॥

हे कर्षकाः ! सीरा सीराणि हलानि युनक्त युङ्क्त योजयत । तप्तनप्तनथनाश्चेति यस्य तबादेशे श्नसोरल्लोपाभावे युनक्तेति रूपम् । युगा युगानि वितनुध्वं शम्यायोक्त्रादिभिर्विस्तारयत । ततः कृते कर्षणेन संस्कृते इह अस्मिन् योनौ स्थाने बीजं व्रीह्यादिकं यूयं वपत । कया । गिरा या ओषधीरित्यादिकया ( ७५ क० ) वेदमन्त्रवाचा चकाराच्चमसेन च । किञ्च वाग्वै गीरन्नꣳ श्रुष्टिरिति ( ७, २, २, ५ ) श्रुतेः श्रुष्टिः अन्नजातिर्व्रीह्यादिका सभरा असत् भरणं भरः पुष्टिः भृञोऽसुन्प्रत्ययः भरसा फलपुष्ट्या सह वर्त्तमाना सभरा पुष्टा अस्तु । इतश्च लोपः परस्मैपदेष्विति इकारलोपेऽडागमेऽसदिति रूपम् । पक्वं धान्यं नेदीय इत् अतिशयेनान्तिकं नेदीयः अन्तिकबाढयोर्नेदसाधाविति अन्तिकस्येयसुनि प्रत्यये नेदादेशः इत् एवार्थे नेदीय इत् अन्तिकतममेवात्यल्पकालमेव पक्वं धान्यं सृण्यः सृण्या सृणिशब्दोऽत्र दात्रार्थः सृण्या लवनसाधनेन दात्रेण लूनमिति शेषः दात्रेण छिन्नं सत् नः अस्मान् प्रति आ इयात् आगच्छतु अल्पकालेन पक्वमस्मद्गृहमागच्छत्वित्यर्थः ॥ ६८ ॥

**शुनꣳ सुफाला विकृषन्तु भूमिꣳ शुनं कीनाशा अभियन्तु वाहैः । शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मे ॥ ६९ ॥**

चतस्रः सीताः कृषति चतसृभि ऋग्भिः । तत्र द्वे त्रिष्टुभौ तृतीया पङ्क्तिः चतुर्थ्यनुष्टुप् । शुनं सुफालाः । शुनमिति सुखनाम । सुखेन शोभनफालाः लाङ्गलाग्रस्थिताः । विकृ-

षन्तु । विविधं कृषन्तु विलिखन्तु भूमिम् सुखेन च कीनाशाः हलिनः अभिगच्छन्तु वाहैः अनड्डुद्भिः सहिताः । अथैवं कृष्टे सति । शुना सीरा । शुनो वायुः । शु इत्यव्यक्तानुकरणम् शु इत्यन्तारिक्षे । सीर आदित्यः सरणात् । वाय्वादित्यौ हविषा उदकेन । तोशतिर्वधकर्मा । निघ्नन्तौ भूमिम् सुपिप्पलाः पिप्पल मिह फलमुच्यते । ओषधी कर्तन कुरुतम् । द्वयोर्बहुवचनं छान्दसम् अस्मे अस्माकम् ॥ ६९ ॥

का० ( १७, २, १२, आत्मनि कृषत्यनुपरिश्रिच्छुनᳪ सु फाला इति प्रत्यृचम् । चितिस्थाने परिश्रित्समीपे चतुर्भिर्ऋग्भिर्दक्षिणपश्चिमोत्तरपूर्वेषु चतस्रः सीलाः कृषति ॥ कुमारहारितदृष्टाः सीतादेवत्याश्चतस्रः द्वे त्रिष्टुभौ तृतीया पङ्क्तिः चतुर्थ्यनुष्टुप् । सु शोभनाः फालाः सीराग्रस्था लोहविशेषाः शुनं सुखं यथा तथा भूमिं विकृषन्तु विलिखन्तु । शुनमिति सुखनाम ( निघ० ३, ६, ११ ) । फालः सीरोपकरणोत्प्लवयोः फालमंशुके इति कोशः । कीनाशा हलिनः शुनं सुखेन वाहैः वृषभैः सह अभियन्तु अभिगच्छन्तु । हे शुनासीरा शुनासीरौ हे वाय्वादित्यौ ! अस्मे अस्माकमोषधीः ब्रीह्यादिकाः सुपिप्पलाः शोभनफलाः युवां कर्तन कुरुत । कुरुतमिति वचनव्यत्ययः थस्य तनबादेशे शापि लुप्ते गुणे कृते कर्तनेति रूपम् । कीनाशः कर्षके क्षुद्रे कृतान्तोपांशुघातिनोरिति कोशः । शुनश्च सीरश्च शुनासीरौ देवताद्वन्द्वे चेति पूर्वपददीर्घः शुनो वायुः सीर आदित्यः । शुनो वायुः शु इत्यन्तरिक्षे सीर आदित्यः सरणादिति यास्कोक्तेः [ निरु० ९, ४० ] । कीदृशौ शुनासीरौ हविषा जलेन तोशमाना तोशतिर्वधकर्मा भूमिं घ्नन्तौ जलेन भूमिं सिञ्चन्तौ सन्तावोषधीः सफलाः कुरुतामिति भावः पिप्पलं फलम् ॥ ६९ ॥

**घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमता मरुद्भिः । ऊर्जस्वती पयसा पिन्वमानास्मान् सीते पयसाभ्याववृत्स्व ॥ ७० ॥**

घृतेन सीता । सीता समज्यताम् अनुमता इति परोक्षाभिधायीनि त्रीणि पदानि । सीते अभ्याववृत्स्वेति प्रत्यक्षाभिधायिनी द्वे पदे एकस्मिन्मन्त्रवाक्ये । तत्र विरोधिसमवाये तु भूयसां स्याद्धर्मित्वमिति न्यायात् । प्रथमं वा नियम्येत कारणाव्यतिक्रमः स्यादिति च न्यायात् । तस्मादुपक्रमप्रभृति व्याख्यायते । घृतेनोदकेन मधुना मधूदकेन समज्यताम् संसिच्यताम् । विश्वैः सर्वैर्देवैः अनुमता अभ्यनुज्ञाता । मरुद्भिश्च । मरुतो ह वै वर्षास्वेशते । एवमक्षारोदकेन सिक्ता अभ्यनुज्ञाता च मरुदादिभिः । ऊर्जस्वती अन्नवती । पयसा पयोदधिघृतादिभिः पिन्नमाना पूरयन्ती सर्वा दिशः । अस्मान्सीते । सीता इति विभक्तिव्यत्ययः परोक्षत्वात् अस्मान्प्रति सीता अभ्याववृत्स्व । स्वयमभ्यावर्त्ततामिति पुरुषव्यत्ययः ॥ ७० ॥

सीता लाङ्गलपद्धतिर्मधुना मधुरेण घृतेनोदकेन समज्यतां संसिच्यतां सिक्ता भवतु । कीदृशी सीता विश्वैर्देवैर्मरुद्भिश्चानुमता अनुज्ञाता अङ्गीकृता वा । एवं परोक्षमुक्त्वा प्रत्यक्षमाह हे सीते ! ऊर्जस्वती अन्नवती सा त्वं पयसा पयोदधिघृतादिभिः पिन्वमाना दिशः पूरयन्ती सती पयसा दुग्धादिभिः सह अभ्याववृत्स्व अस्मदभिमुखमावृत्ता भव अस्माकमनुकूला भवेत्यर्थः । वृतेर्बहुलं छन्दसीति ( पा० २, ४, ७६, ) शपः श्लौ सति लोटि ववृत्स्वेति रूपम् ॥ ७० ॥

**लाङ्ग॑लं प॒वीर॑वत् सु॒शेव॑ꣳ सोम॒पित्स॑रु । तदुद्व॑पति॒ गामविं॑ प्रफ॒र्व्यं॑ञ्च॒ पीव॑रीं प्र॒स्थाव॑द्र॒थ॒वाह॑नम् ॥७१॥**

लाङ्गलं पवीरवत् । पविर्धारोच्यते । सोऽस्यास्तीति पवीरं फालः रो मत्वर्थे । तदस्य लाङ्गलस्यास्तीति पवीरवल्लाङ्गलम् फालसंयुक्तमित्यर्थः । श्रुतिस्तुलक्षणया व्याचष्टे । लाङ्गलं रयिमदिति । सुशेवम् शेवमिति सुखनाम । शोभनसुखकरम् ।

सोमपित्सरु । सोमं पिबतीति सोमपाः यजमानः तस्मिन् सोमपि यजमाने त्सरणशीलः त्सरुरुच्यते । भूमेः खननशीलम् । यद्वा त्सरुर्वृत्तम् । सोमपि यजमाने पापं त्सरयति नाशयतीति सोमपि त्सरु । यद्वा । सोमः पीयते येन चमसेन स सोमपिः तस्य सोमपेः त्सरु वृत्तं लाङ्गलम् । नहि लाङ्गलस्य कर्मान्तरेण सोमचमसाः स्युः । यदित्थम्भूतं लाङ्गलं तदुद्वपति उद्गमयति । गाम् अविं प्रफर्व्यं च पीवरीम् । फर्वतिर्गतिकर्मा । प्रकर्षेण फर्व्या गम्या प्रफर्वी प्रथमयुवतिः पीवरी उच्छूनस्तनकपोलानामुद्वपति प्रस्थावद्रथवाहणम् । प्रस्थानसंयुक्तमुत्कृष्टजवोपेतं च रथवाहनमश्वम् उद्वपतीत्यनुषज्यते ॥ ७१ ॥

तत् पूर्वोक्तं लाङ्गलं हलं गां धेनुमविं छागविशेषं रथवाहनं रथवाहकमश्वादिकं च उद्वपति उद्गमयति प्रापयति । रथं वाहयति प्रापयतीति रथवाहनम् । कृषिसमृद्धावेव गवादिकं यजमानस्य सुलभमिति भावः । अत एव लाङ्गलं गवादिप्रापकम् । कीदृशं लाङ्गलं पवीरवत् पविर्धारास्यास्तीति पवीरं फालः रो मत्वर्थः पवीरमस्यास्तीति पवीरवत् फालसंयुक्तम् । तथा शेवमिति सुखनाम ( निघ० ३, ६, १७, ) शोभनं सुखकरं शोभनं शेवं यस्मात् । तथा सोमपित्सरुं सोमं पिबतीति सोमपा यजमानः तस्मिन् सोमपि यजमाननिमित्तं त्सरति भूमिं खनतीति सोमपित्सरु । त्सर छद्मगताविति धातोरुप्रत्ययः शीलार्थः हलदन्तात्सप्तम्या इति विभक्तेरलुक् आतो धातोरिति ( पा० ६, ४, १४०, ) आलोपे हलन्तत्वात् । यद्वा सोमः पीयतेऽनेनेति सोमपिश्चमसः तस्य त्सरु निष्पादकं न हि लाङ्गलकर्म विना सोमचमसा स्युः । ईदृशं लाङ्गलं गवादि गमयतीत्यर्थः । कीदृशीं गामविं च प्रफर्व्यं फर्वतिर्गतिकर्मा प्रकर्षेण फर्वति गच्छति प्रफर्वी तां प्रफर्व्यं वा छन्दसीति ( पा० ६, १, १०६ ) अमि पूर्वरूपाभावे यणादेशः युवतित्वादतिवेगवतीमित्यर्थः । तथा पीवरीं स्थूलां पुष्टाङ्गीम् । कीदृशं रथवाहनं प्रस्थावत् प्रस्था प्रस्थानं गतिरस्यास्तीति प्रस्था-

वत् प्रयाणसमर्थमुत्कृष्टजवोपेतमित्यर्थः ॥ ७१ ॥

**कार्मं कामदुघे धुक्ष्व मित्राय वर्रुणाय च। इन्द्रा॑-याश्विभ्या॑ पूष्णे प्रजाभ्य ओर्षधीभ्यः ॥ ७२ ॥**

कामं कामदुघे। सीतोच्यते। हे कामदुघे कामानां प्रपूरणि कामं धुक्ष्व पूरय। केषामित्यत आह। मित्राय वरुणाय च। इन्द्राय अश्विभ्याम्। पूष्णे प्रजाभ्यः ओषधीभ्यः। चकारः समुच्चयार्थः सर्वत्रानुषज्यते ॥ ७२ ॥

कामान् मनोरथान् दुग्धे पूरयति कामदुघा। दुहः कब्घश्चेति कप्प्रत्ययो घान्तादेशश्च तस्याः सम्बुद्धौ हे कामदुघे लाङ्गलपद्धते! मित्रादिपूषान्तदेवानामर्थे प्रजार्थमोषधिनिष्पत्त्यर्थं च काममपेक्षितं भोगं धुक्ष्व सम्पादय ॥ ७२ ॥

**विमुंच्यध्वमघ्न्या देवयाना अगंन्म तमंसस्पा-रमुस्य। ज्योतिरापाम ॥ ७३ ॥**

अनडुहो विमुञ्चतिः। विमुच्यध्वम्। गायत्री। एवं जगतः स्थितिनिमित्तभूतां कृषिमभिनिर्वर्त्त्य कृतकृत्याः सन्तो विमुच्यध्वं युगात्। हे अघ्न्याः अहन्तव्याः। देवयानाः देवकर्मकारिणः। यद्वा देवयानमार्गनिमित्तभूता अगन्म गतवन्तः अशनायोद्भवा तमसः पारमस्य। तदुक्तम्। योशनायापि पासे शोकं मोहं जरां मृत्युमत्येतीति। तदेव स्पष्टयति। ज्योतिः आपाम। प्राप्तवन्तः। परमात्मलक्षणं यज्ञलक्षणं वा देवलक्षणं वा ७३ ॥

का० ( १७, २, २०—२१ ) अनडुहो विमुच्य विमुच्यध्वमिति पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति। वृषान् हलाद्वियोज्य पशुवदित्यैशानीं दिशं प्रति विसृजत्यध्वर्युः यजमानश्च सुत्यायां ससीरांस्तानध्वर्यवे ददातीति सूत्रार्थः। विमोचने मन्त्रः वृषदेवत्यार्षी गायत्री पादानियमात्। हे देवयानाः! देवतार्थकर्मकारिणः!

देवार्थं यानं कृष्याद्युद्यमो येषां ते यद्वा देवयानमार्गहेतुभूताः कर्मद्वारा तत्प्रापकाः । हे अघ्न्या ! अहन्तव्या गावो बलीवर्दा यूयं विमुच्यध्वम् मुचेः कर्मकर्त्तरि यक् लोटि जगत्स्थितिहेतुं कृषिमेवं निष्पाद्य कृतकृत्याः सन्तो युगात् पृथग्भवतेत्यर्थः । अस्य तमसः क्षुत्पिपासाद्युद्भूतस्य दुःखस्य पारं समाप्तिं वयमगन्म प्राप्ताः गच्छतेर्लङि शपि लुते रूपम् । तदुक्तं (बृहदार० मा० ३, २, १,) योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीति । दुःखपारमेव स्पष्टयति वयं ज्योतिरापाम परमात्मलक्षणं यज्ञरूपं वा तेजः प्राप्ताः । आप्नोतेर्लुङि पुषादीत्यादिना अङ्प्रत्ययः ॥ ७३ ॥

सजूरब्दो अयवोभिः सजूरुषा अरुणीभिः सजोषसावश्विना दꣳसोभिः सजूः सूर एतशेन सजूर्वैश्वानर इडया घृतेन स्वाहा ॥ ७४ ॥

कुशस्तम्बे जुहोति । सजूरब्दः । यजुरेतत् । सजूः समानजोषणः । अब्दः सम्बत्सरः । स हि अपो ददाति । अयवोभिः । यवाश्च अयवाश्च अर्द्धमासा मासाश्चोच्यन्ते । सजूः उषा अरुणीभिः । अरुणवर्णाभिर्गोभिः किरणैः । सजोषसौ अश्विना अश्विनौ । दंसोभिः कर्मभिः । सजूः सूरः एतशेन अश्वेन । सजूर्वैश्वानर इडया । आग्नेयी पृथिवी इडा पृथिवी स्थानाया स्त्री तस्या अत्र ग्रहणं युक्ततरम् । गौर्वागन्नं च इडाशब्देनोच्यते । घृतेन हविषा स्वाहा सुहुतमस्तु ॥ ७४ ॥

का० (१७, ३, ३) पञ्चगृहीतेनोद्गृह्णन्नभिजुहोति सजूरब्द इति । तदानीं संस्कृतेन जुह्वा पञ्चगृहीतेनाज्येन कृष्टात्ममध्यस्थापितकुशस्तम्बे स्रुचमूर्ध्वां कुर्वन् जुहोति ॥ लिङ्गोक्तदेवतं यजुर्ब्राह्म्यनुष्टुप्छन्दस्कम् । अब्दः अपो जलानि ददातीत्यब्दः संवत्सरः उषाः प्रातरधिष्ठात्री देवता अश्विना अश्विनौ देवभिषजौ सूरः सूर्यः वैश्वानरः अग्निश्च एभ्योऽब्दादिदेवेभ्यो घृतेन स्वाहा इदं घृतं तेभ्यः सुहुतमस्तु । तेषां प्रत्येकं विशेषणानि । कीदृशोऽब्दः

अयवोभिः सजूः यवाश्चायवाश्चार्धमासा मासाश्चोच्यन्ते जोषणं जुट् प्रीतिः सह जुषा वर्त्तते समाना जुट् वा यस्य सजूः जुषतेः सम्पदादित्वाद्भावे क्विप् मासार्धमासैः प्रीतियुक्त इत्यर्थः । कीदृश्युषाः अरुणीभिः अरुणवर्णाभिः गोभिः सजूः प्रीतियुता । कीदृशावश्विनौ दंसोभिः कर्मभिश्चिकित्सादिभिः सजोषसौ प्रीतौ । कीदृशः सूरः एतशेनाश्वेन सजूः तुष्टः । कीदृशोऽग्निः इडया पृथिव्या सजूः प्रीतः तदधिष्ठातृत्वात् आग्नेयी हि पृथिवी इडाशब्देन गौर्वाग्वान्नं चोच्यते ॥ ७४ ॥

**या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहꣳ शतं धामानि सप्त च ॥ ७५ ॥**

क्षेत्रे सर्वौषधं वपति । सप्त विंशतिरनुष्टुभः । ओषधी स्तुतिः । पञ्च दश तु वपने नियुक्ताः । या ओषधीः । या ओषधयः । पूर्वा जाताः प्रथमजाताः । अन्याभ्य ओषधीभ्यः भविष्यत्कालसम्बन्धिनीभ्यः । देवेभ्यः ऋतुभ्यः । ऋतवो वै देवा इति श्रुतिः । ऋतुभ्योऽर्थाय । ऋतव ओषधिसम्बद्धाः कर्त्तव्या इति । त्रियुगं पुरा । त्रीणि युगानि समाहृतानि त्रियुगं त्रिकाल मित्यर्थः । वसन्ते प्रावृषि शरदि । पुरा पूर्वेषु वसन्तादिषु । पूर्वस्मिन्हि सम्वत्सरे ओषधयः अग्निक्षेत्रे उप्यन्ते । कि न्निमित्तमित्यत आह । मनै नु । मन्ये जानामि । तासां बभ्रूणां बभ्रूवर्णानाम् वभ्रूगसामः । अहं शतं धामानि । धामशब्दः स्थानपर्यायः । सम्वत्सरोपलक्षितमेकैकं स्थानम् यदिदं-शतायुः शतार्थः शतवीर्यः पुरुषः एतानि शतन्धामानि सप्त च य एवेमे शीर्षाः प्राणाः तानेतदाह ॥ ७५ ॥

का० ( १७, ३, ८ ) या ओषधीरिति तृचैर्वपत्युदपात्रवत् । पञ्चभिस्तृचैश्चमसेन सर्वौषधिं वपति उदपात्रवदिति चतुश्चतुःसीतासु यथा कृष्टम् ॥ अथर्वपुत्रभिषग्दृष्टा ओषधिदेवत्या यो अस्मानभिदासतीत्यन्ताः ( १०१ ) सप्तविंशतिरनुष्टुभः मुञ्चन्तु मे-

त्याद्या ( ९० ) द्वादश बन्धुदृष्टाः कुत्रापि कर्मण्यनियुक्ताः । पादानां न्यूनाधिक्ये व्यूहाधिक्ये कार्ये । युगशब्दः कालवाची त्रयाणां युगानां समाहारास्त्रियुगं त्रिकालं वसन्ते प्रावृषि शरदि च । पुरा सृष्ट्यादौ या ओषधीः ओषधयः पूर्वाः प्रथमा भाविनीभ्यः ओषधीभ्यः आद्याः जाता उत्पन्नाः । किमर्थं देवेभ्यः ऋतुभ्यः । ऋतवो वै देवा इति ( ७, २, ४, २६ ) श्रुतेः ऋतव ओषधियुताः कर्तव्या एतदर्थम् । बभ्रूणां जगज्जनभरणसमार्थानां पाकेन पिङ्गलवर्णानां वा तासामोषधीनां शतं सप्त च धामानि अहं मनै नु मन्य एव जाने मन्यतेर्लिटि आत्मनेपदे उत्तमैकवचने शपि एत ऐ इति (पा० ३, ४, ९३, ) रूपम् । संवत्सरोपलक्षितमेकैकं स्थानं शतायुर्वै पुरुष इति श्रुतेः शतं धामानि वर्षात्मकानि शिरःस्थानि मुखदृङ्नासाख्यानि सप्त स्थानानि च य एवेमे सप्त शीर्षन् प्राणास्तानेतदाहेति श्रुतेः ( ७, २, ४, २६ ) नराणां शतवर्षपर्यन्तमिन्द्रियाणामोषधिभिस्तर्प्यमाणत्वादोषधीनां तत्स्थानत्वम् । यद्वा शतं धामानि स्थानभेदान् जातिभेदानसंख्यान् विशेषतश्च सप्त भेदान् ग्राम्यानारण्यांश्च व्रीह्यादीन्नीवारादींश्चाहं जाने ॥ ७५ ॥

श॒तं वो॑ अम्ब॒ धामा॑नि स॒हस्र॑मु॒त वो॒ रुहः॑ । अधा॑ शतक्रत्वो यू॒यमि॒मं मे॑ अग॒दं कृ॑त ॥ ७६ ॥

शतं वः हे ओषधयः शतं वः युष्माकम् अश्वमातरः धामानि जन्मानि । सहस्रमुत वो रुहः अपि च सहस्रं युष्माकं विरोहणानि सन्ति । अधा शतक्रत्वः अथैवं सति हे शतक्रत्वः बहुकर्माणः । यूयं प्रजापतिमिमम् इमं वा यजमानं मे मम सम्बन्धिनम् अगदम् गदो व्याधिः अव्याधिं कृत कुरुत ॥ ७६ ॥

हे अम्ब ! मातृस्थाना ओषधयः वो युष्माकं धामानि जातिभेदाः क्षेत्राणि वा जन्मानि वा शतं सन्ति उत अपि च वो युष्माकं रुहः रोहन्तीति रुहः प्ररोहा अङ्कुराः सहस्रं सन्ति शतसहस्रपदाभ्याम परिमितत्वमुच्यते । अध अथ निपातस्य चेति संहितायां दीर्घः शतं क्रतवः कर्माणि याभिस्ताः शतक्रतवः जसि चेति ( पा– ७, ३, १०९ ) प्राप्तगुणस्याभावे छान्दसो यणादेशः अथैवं

सति हे शतक्रत्वो ! यूयं मे मम इमं यजमानमगदं क्षुत्पिपासादिषड्र्मिरोगरहितं कृत कुरुत करोतेः शपो लुक् ॥ ७६ ॥

**ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ ७७ ॥**

ओषधीः प्रति। हे ओषधयः प्रति मोदध्वं हर्षयत। पुष्पवतीः प्रसूवरीः। पुष्पवत्यः प्रसववत्यश्च सत्यः। ततोऽनन्तरम् अश्वा इव संग्राम्याः सजित्वरी स्म ह जयनशीला भूत्वा वीरुधः विविधं व्याधिं रुधन्तीति वीरुधः। पारयिष्णवः। पारणशीलाश्च भवत अस्माकमिति शेषः ॥ ७७ ॥

हे ओषधीः ! हे ओषधयः ! यूयं मोदध्वं हृष्टा भवत। कीदृश्यो यूयं पुष्पवतीः पुष्पैरुपेताः। प्रसूवरीः फलप्रसववत्यः प्रसुवते जनयन्ति फलानीति प्रसूवरीः अन्येभ्योऽपि दृश्यन्ते इति सूतेर्वनिपि प्रत्यये वनो र चेति ङीप् रान्तादेशश्च। अश्वा इव साजित्वरीः सह जयन्ति तच्छीलाः इण्नशजीति क्वरप् टिड्ढाणञ् इति ङीप्। यथाश्वाः संग्रामे जयशीलाः तद्वत् फलपर्यन्तत्वाज्जयशीलाः वा छन्दसीति ( पा० ६, १, १०६ ) सर्वत्र पूर्वसवर्णदीर्घः। वीरुधः विविधं रुन्धन्ति निवारयन्ति व्याधिमिति वीरुधः। नहिवृतिवृषीत्यादिना उपसर्गदीर्घः यद्वा विविधं रोहन्ति प्ररोहन्ति वीरुधः विरुहः क्वौ धान्तादेशो वेर्दीर्घः इति धान्तादेश उपसर्गदीर्घश्च। पारयिष्णवः पार तीर कर्मसमाप्तौ चुरादिरदन्तो धातुः पारयन्ति फलपाकान्तत्वं पारत्यज्य बहुकालं कर्मपरायणशीलाः पारयिष्णवः णेश्छन्दसीति इष्णुच्प्रत्ययः ॥ ७७ ॥

**ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे। सनेयमश्वं गां वासं आत्मानं तव पूरुष ॥ ७८ ॥**

ओषधीरिति। हे ओषधयः या यूयम् इति इत्थमशनदानव्याध्यपगम दि कुर्वन्त्यो मातरः जगन्निर्मात्र्यः ततो देवीः वः युष्मान् हे देव्यः उपब्रुवे उपसङ्गम्य ब्रुवे ब्रवीमि। प्रार्थयामि।

सनेयं सम्भजेयम् अश्वं गां वासः आत्मानञ्च । सनेयं तव यज्ञ पुरुषं प्रजापतिरूपिणम् ॥ ७८ ॥

हे ओषधीः ओषध्यः ! हे मातरः जगन्निर्मात्र्यः ! भोजनदानव्याध्यपगमादिभिरुपकर्त्र्यः हे देवीः देव्यः ! वो युष्मान् प्रति इति अमुना वक्ष्यमाणविधिना तत् प्रसिद्धं मदभीष्टमुपब्रुवे वच्मि प्रार्थयामि । इति किम् तदाह हे पुरुष ! यज्ञपुरुष ! तव प्रसादादश्वं हयं गां धेनुं वासो वस्त्रमात्मानं शरीरमहं सनेयं सम्भजेयम् । वन षन सम्भक्तौ लिङ् यज्ञपुरुषं प्रति मया यदश्वादिकं प्रार्थ्यते तदोषधिभिरनुमन्तव्यमित्योषधिप्रार्थनमिति भावः ॥ ७८ ॥

अ॒श्व॒त्थे वो॑ नि॒षद॑नं प॒र्णे वो॑ वस॒तिष्कृ॒ता । गो॒भा॒ज इत् किला॑सथ॒ यत् स॒नव॑थ॒ पूरु॑षम् ॥ ७९ ॥

अश्वत्थे वः । चतुर्थः पादोऽत्र प्रथमं व्याख्यायते । यत्सनवथ पूरुषम् । यदा यूयं सनवथ संसेवध्वम् पूरुषं यजमानम् । अथ अश्वत्थे वः युष्माकं निषदनमवस्थानम् । पर्णे वः पलाशपर्णमय्यां जुह्वाम् वः युष्माकं वसतिः स्थितिः होमार्थमध्वर्युणा कृता । अश्वत्थपर्णयोस्तद्धितलोपश्छान्दसः । अथापि तद्धितेन कृत्स्नवन्निगमा भवन्तीति । गोभाज इत्किलासथ । इच्छब्दः पादपूरणः किलेति विद्याप्रकर्षे । ततोऽग्नौ हुताः सत्यः । गोभाजः । गोशब्देनादित्यो ऽभिधीयते । आदित्यभाजः यूयं किल भवथ । तदुक्तम् । अग्नौ प्रस्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्यज्जायते वृष्टि र्वृष्टेरन्नन्ततः प्रजाः इति । यद्वा अश्वत्थे वो निषदनम् तथाहि अश्वत्थे फलिते सर्वा ओषधयः फलवत्यो भवन्ति । पर्णे फलिते कोद्रवादयः फलिता भवन्ति गोभाजः पृथिवीभाजश्च उप्ताः सत्यः किल भवथ । तदुक्तम् । यदा पूरुषः संसेवध्वं भाजनादिभिरुपकारैः एवं दुरवधार्य्यगतयो यूयमित्यभिप्रायः ॥ ७९ ॥

हे ओषधयः ! वो युष्माकमश्वत्थे आश्वत्थ्यामुपभृति स्रुचि निषदनं स्थाने भवति हविषां तत्र स्थापनात् किञ्च वो युष्माकं पर्णे पलाशे पर्णमय्यां जुह्वां वसतिः स्थितिः कृता अध्वर्युणा होमार्थं जुह्वां स्थापनात् अश्वत्थपर्णशब्दाभ्यां तद्धितप्रत्ययलोपश्छान्दसः । अथापि तद्धितेन कृत्स्नवन्निगमा भवन्तीति यास्कोक्तेः ( निरु० २, ५ ) । हविर्भूता ओषधयः प्रार्थ्यन्ते । किलेति विद्याप्रकर्षे । इत् एवार्थे । हे हविर्भूता ओषधयः ! यूयमग्नौ हुताः सत्यो गोभाजः असथ भवथ गामादित्यं भजन्तीति गोभाजः । अग्नौ प्रस्ताहुतिः सम्यगादित्यमुपतिष्ठत इति श्रुतेः ॥ यद्वा अश्वत्थं वा निषदनमश्वत्थे फलिते सर्वौषधीनां फलवत्त्वात् पर्णे वो वसतिः कृता पलाशे च फलिते व्रीह्यादीनां फलित्वात् । अत एव यूयमुप्ताः सत्यो गोभाजो भूमिभाज एव किलासथ भवथ गौर्नादित्ये बलीवर्दे मखभेदर्षिभेदयोः । स्त्रियां स्याद्दिशि भारत्यां भूमौ च सुरभावपीति कोशात् । किमर्थमिदमित्यत आह यत् यस्मात्कारणात् पुरुषं यजमानं यूयं सनवथ सेवध्वमन्नदानेन पोषयथ तस्मादश्वत्थादिस्थानमित्यर्थः । अश्वत्थे पलाशे च वः स्थानम् देवाधिष्ठानादश्वत्थो लोके नतिप्रदक्षिणादिना पूज्यते पलाशश्चेध्मादिरूपेण । एवमश्वत्थादिरूपेण यूयं भूभाजः स्थ शेषं पूर्ववत् । अस्तेः शपि असथेति रूपं लटि सनवतिः परिचयार्थः ॥ ७९ ॥

**यत्रौष॑धीः स॒मग्म॑त॒ राजा॑नः॒ समि॑ताविव । विप्रः॒ स उ॑च्यते भि॒षग् र॑क्षो॒हामी॑व॒चात॑नः ॥ ८० ॥**

यत्रौषधीः । यत्र यस्मिन्पुरुषे भैषज्यकर्त्तरि हे ओषधयो यूयं सग्मत । समागच्छत व्याधिं जेतुम् । कथमिव । राजानः समिताविव । यथा राजानः समितौ संग्रामे शत्रुं जेतुं समागच्छन्ति । किन्तत्रेत्यत आह । विप्रः ब्राह्मणः स उच्यते भिषक् वैद्यः । रक्षोहा च अमीव चातनश्च । अमीवा व्याधिः । चातयतिर्नाशने । व्याधिनाशनः ॥ ८० ॥

हे ओषधीः ओषधयः ! यत्र विप्रे भैषज्यकर्त्तरि ब्राह्मणं यूयं समग्मत सङ्गच्छत रोगं जेतुम् के इव राजान इव यथा राजानः

समितौ युद्धे शत्रून् जेतुं समागच्छन्ति । गमेर्लुङि मध्यमबहुवचने पुषादीन्यङि गमहनेति उपधालोपे छान्दसेऽग्मतेति रूपम् । स भवदाश्रितो विप्रः भिषग्वैद्य उच्यते कथ्यते । कीदृशो विप्रः रक्षोहा रक्षांसि हन्तीति रक्षोघ्नं पुरोडाशं कृत्वा रक्षसां हन्ता रक्षःकृतोपद्रवनाशकः । तथा अमीवचातनः अमीवान् रोगान् चातयति नाशयति अमीवचातनः ओषधदानै रोगनाशकः चातयतिर्नाशनार्थः धातूनामनेकार्थत्वात् ॥ ८० ॥

**अ॒श्वा॒व॒तीᳪं सो॑माव॒तीमू॒र्जय॑न्ती॒मुदो॑जसम् । आ वि॑त्सि॒ सर्वा॒ ओष॑धीर॒स्मा अ॑रि॒ष्टता॑तये ॥ ८१ ॥**

अश्वावतीम् । सर्वा ओषधीरिति बहुवचनोपदेशादिहापि बहुवचनं भवति । या ओषधयश्च अश्ववत्यः अश्वसंपादिन्यः सोमयागसंपादिन्यः ऊर्जयन्त्यः । ऊर्ज बलप्राणनयोः । बलसंपादिन्यः उदोजसः उद्गतमोजो यासां उदोजसः । ताः सर्वा ओषधीः अहम् आ अवित्सि जानामि । विदित्वा च अस्मै अरिष्टतातये । रिषतिर्विनाशार्थः । न रिष्टमरिष्टमविनाशः तस्य तननमरिष्टतातिः । अस्मै अरिष्टविनाशतननाय भैषज्यं करोमीति शेषः ॥ ८१ ॥

अस्मै अस्य यजमानस्य अरिष्टतातये रिषतिर्विनाशार्थः रेषणं रिष्टम् भावे क्तः न रिष्टमरिष्टमनाशो मङ्गलमित्यर्थः तस्य करणमरिष्टतातिः शिवशमरिष्टस्य कर इति तातिप्रत्ययः । यद्वा तननं तातिर्विस्तारः तस्मै यजमानस्य शुभकरणाय सर्वा ओषधीरहमा अवित्सि समन्ताद्वेद्मि जानामि विदेर्लङि आत्मनेपदे उत्तमैकवचने इडभावे अवित्सीति रूपम् । यजमानार्थं वेद्मीति वा । तद्विशेषणम् अरिष्टं शुभं करोति तनोति वारिष्टतातिस्तस्मै । सर्वाः का इत्यत आह अश्ववतीमश्वा अस्यां सन्तीत्यश्ववती ताम् अश्वसम्पादिनीं काञ्चित् ओषधिसमृद्धौ सत्यां धनद्वारेणाश्वलाभात् । अन्यां सोमवतीं सोमयोगोऽस्यामस्तीति सोमवतीं तां सोमसम्पादिनीं मन्त्रे सोमाश्वेत्यादिना अश्वसोमयोर्दीर्घः । ऊर्जयन्तीमूर्ज बलप्राणनयोः

बलसम्पादिनीं जीवयन्तीं वा ऊर्जयन्तीति । उद्गोजसमुद्गतमोजो यस्याः सा उद्गोजास्तां तेजःसम्पादिनीम् । एवं नानाकार्यकारिणीः सर्वा ओषधीः जानामीत्यर्थः । यद्वा अश्वावतीमित्यादीनि बहुवचनान्तानि कार्याणि ओषधी रित्यस्य विशेषणत्वात् ॥ ८१ ॥

उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनंᳪ सनिष्यन्तीनामात्मानं तव पूरुष ॥ ८२ ॥

उच्छुष्माः । उच्छब्द ईरत इत्यनेन सम्बध्यते । उदीरते उद्गच्छन्ति प्रकाशी भवन्ति शुष्माः वीर्याणि । ओषधीनां सम्बन्धीनि । कथमिव । गावः गोष्ठादिव निष्क्रान्तः । किं कुर्वतीनाम् । धनं सनिष्यन्तीनाम् संभजमानानां यजमानार्थम् आत्मानं च संभजमानानाम् तव यज्ञपूरुष ॥ ८२ ॥

हे पूरुष ! यज्ञपुरुष ! तवात्मानं त्वदीयं शरीरं प्रति धनं सनिष्यन्तीनाम् षणु दाने हवीरूपं धनं दातुमिच्छन्तीनामोषधीनां शुष्मा बलानि सामर्थ्यानि उदीरते उद्गच्छन्ति प्रकाशीभवन्ति गावो गोष्ठादिव यथा गोष्ठात् स्वस्थानाद् गावोऽरण्यदेशं प्रति उद्गच्छन्ति तद्वत् । ईर कम्पे अदादिः ॥ ८२ ॥

इष्कृतिर्नाम वो माता थो यूयᳪ स्थ निष्कृतीः । सीराः पतत्रिणीं स्थन यदामयति निष्कृथ ॥ ८३ ॥

इष्कृतिर्नाम । उपसर्गैकदेशलोपः छान्दसः । निष्क्रमणं विनाशनं व्याध्यादेः करोतीति निष्कृतिः । निष्कृतिस्ताव युष्मदीयाया मातुर्नाम व्युत्पत्त्यभिप्रायम् । अथोअपि च यूयं स्थ भवथ निष्कृतीः व्याधिनिष्क्रमणाः । किञ्च । सीराः सह इरया अन्नेन वर्त्तन्त इति सीराः । पतत्रिणीः पतनशीलाः स्थन भवथ । कुरुत नेत्यनर्थका उपजना भवन्तीति नकार उपजनः । कस्मिन्काले यूयमित्थं भूता भवथेत्यत आह । यदामयति नि-

ष्कृथ । अम रोगे । यदा आमयाविनि स्थितं तस्य व्याधिं नि-
ष्कृथ निर्नाशय ॥ ८३ ॥

हे ओषधयः ! वो युष्माकमिष्कृतिर्नाम निष्कृतिनाम्नी माता जननी । निष्करोति व्याधिं नाशयति निष्कृतिः । निशब्दो बहुलमिति ( ३, १, १७, ) प्रातिशाख्यसूत्रेणोपसर्गैकदेशनकारलोपः । अथो अपि च यूयमपि निष्कृतीः निष्कृतयः स्थ व्याधिनिष्क्रमणकारिण्यो भवथ निष्कृतिमातृकत्वात् । किञ्च सीरा सह इरया अन्नेन वर्त्तन्त इति सीराः सहस्य सादेशे टिलोप इकारदीर्घश्च छान्दसः । यद्वा सीराः क्षुधादीनामपसारयितृयः । यद्वा सीरं हलं निष्पादकत्वेन सहस्य यासु ताः सीराः । पतत्रिणीः पतत्रं पतनं गमनं विद्यते यासां ताः पतत्रिण्यः प्रसरणशीलाश्च स्थन भवथ वा छन्दसीति ( पा० ६, १, १०६ ) दीर्घः तप्तनबित्यादिना ( पा० ७, १, ४५ ) थस्य थनादेशः । यत् यस्मात् आमयति अम रोगे चुरादिः शत्रन्तः रुजति आमयाविनि नरे स्थितं रोगं निष्कृथ नाशयथ । यद्वा यत् क्षुधादिकं रोगवद् बाधते तद्यूयं निष्कृथ करोतेः शपि लुप्ते लटि रूपम् ॥ ८३ ॥

अति॒ विश्वाः॑ परि॒ष्ठा स्ते॒न इ॑व व्र॒जम॑क्रमुः । ओष॑धीः॒ प्राचु॑च्यवु॒र्यत्कि॒ञ्च॑ त॒न्वो॒ रपः॑ ॥ ८४ ॥

अति विश्वाः । यदा अत्यक्रमुः आक्रामन्ते तनूः विश्वाः सर्वाः परिष्ठाः परि सर्वतो व्याधीनधिष्ठाय तिष्ठन्तीति परिष्ठा ओषधयः । कथमिव स्तेन इव व्रजम् । यथा स्तेनस्तस्करः व्रजमत्यक्रामत् परिमुमोषिषया एवमत्यक्रमुः । अथानन्तरमेव ओषधयः प्राचुच्यवुः प्रच्यावयन्ति । यत्किञ्चित्तन्वः शरीरस्य रपः । रपो रिप्र इति पापनामनी भवतः पाप जनितं व्याधिमित्यर्थः ॥ ८४ ॥

परि सर्वतो रोगानधिष्ठाय तिष्ठन्तीति परिष्ठाः रोगनाशिका विश्वाः सर्वाः ओषधीः ओषधयो यदा अत्यक्रमुः आक्रमन्ते भक्षि-

ताः सत्यो देहं व्याप्नुवन्ति क्रमेतेर्लेङि अन उश् छान्दसः । तत्र दृष्टान्तः स्तेन इव व्रजम् यथा रात्रौ स्तेनश्चोरो गोष्ठमाक्रमते गोशालायां गामपहर्तुं सर्वत्र गच्छति तद्वत् यदौषधयो रोगमपहर्तुं देहमाक्रमन्ते तदा तन्वः शरीरस्य यत् किञ्च यत् किमपि रपः पापं शिरोव्यथागुल्मातिसारादिरूपं पापफलं यत् किञ्चिदस्ति तत्सर्वं प्राचुच्यवुः प्रच्यावयन्ति नाशयन्ति च्युङ् गतौ लुङि णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् इति चङ्प्रत्यये रूपम् । रपो रिप्रमिति पापनामनी भवत इति ( निरु० ४, २१ ) ॥ ८४ ॥

यदि॒मा वा॒जय॑न्न॒हमोष॑धी॒र्हस्त॑ आद॒धे । आ॒त्मा यक्ष्म॑स्य नश्यति पु॒रा जी॑व॒गृभो॑ यथा ॥ ८५ ॥

यदिमाः । यदैव इमा वाजयन् पूजयन् अहम् ओषधीः हस्ते आदधे अस्थापयामि । अथानन्तरमेव । आत्मा यक्ष्मस्य व्याधेः नश्यति । कथमिव । पुराजीवगृभो यथा । जीवमेव हिंसार्थं यो गृह्णते पशुर्वान्यो वा मनुष्यादिः सजीवगृप् तस्य जीवगृभः प्रागेव वधा इति विषादान्मृतोऽहमिति मन्यमानस्य यथात्मा नश्येत् एवं व्याधेरात्मा नश्यति । यदाहमोषधी र्हस्त आदध इति सम्बन्धः ॥ ८५ ॥

यत् यदा इमा ओषधीः वाजयन् पूजयन् मानयन् सन् अहं हस्ते स्वकरे आदधे स्थापयामि तदैव यक्ष्मस्य व्याधेरात्मा स्वरूपं पुरा भक्षणात्प्रागेव नश्यति किं पुनर्भक्षणेनेति भावः । तत्र दृष्टान्तः जीवगृभो यथा जीवन् सन्नेव यो हिंसार्थं गृह्यते आघातस्थानं नीयते स जीवगृप् तस्य जीवगृभो बधात् प्रागेवातिविषादात् मृतोऽहमिति मन्यमानस्य मनुष्यस्यात्मा यथा नश्यति नष्टप्रायो भवति तथौषधौ हस्ते धृतायां व्याधेरात्मा नश्यतीत्यर्थः ॥ ८५ ॥

यस्यौ॑षधीः प्र॒सर्प॒थाङ्ग॑मङ्गं॒ परु॑ष्परुः । ततो॒ यक्ष्मं॒ वि बा॑धध्व उ॒ग्रो म॑ध्यम॒शीरि॑व ॥ ८६ ॥

यस्यौषधीः । यस्य रोगिणः हे ओषधयः प्रसर्पथ । अङ्ग-

मङ्गम् परुष्परुः । सर्वाण्यङ्गानि सर्वाणि च पर्वाणीत्युक्तं भवति । परुःशब्दः पर्ववचनः । तस्य रोगिणः ततो यक्ष्मं विबाधध्वे । ततस्तस्मादङ्गपर्व समुदायात् व्याध्यपगमं कुरुध्वे । कथमिव । उग्रो मध्यमशीरिव । उग्रः क्षत्रियो बद्धगोधाङ्गुलित्राणः स एव विशिष्यते मध्यमशीः मध्यमं भागं शृणातीति मध्यमशीः स यथा शत्रून् बाधते एवं यूयमपि रोगिणो रोगं बाधध्वे इत्युपमार्थः । यद्वा । उग्रो रुद्रः स एव त्रिशूलमध्यमेन शृणातीति मध्यमशीः स यथा युगान्ते सर्वं जगद्भस्मसात्करोति एवं यूयमपि व्याधिं कुरुध्वे ॥ ८६ ॥

हे ओषधीः ओषधयः ! यस्य रोगिणः अङ्गमङ्गं प्रत्यङ्गं सर्वाण्यङ्गानि परुष्परुः परुःशब्दः पर्ववचनः प्रतिपरुः सर्वाणि पर्वाणि ग्रन्थीन् यूयं प्रसर्पथ प्रगच्छथ व्याप्नुथ ततोऽङ्गपर्वसमुदायात् यक्ष्मं रोगं यूयं विबाधध्वे निवर्तयथ व्याधिनाशं कुरुध्वे । तत्र दृष्टान्तः उग्रो मध्यमशीरिव मध्ये देहमध्ये भवं मध्यमं मर्मभागं शृणाति हिनस्ति मध्यशीः शॄ हिंसायां क्विप् ऋत इद्धातोरिति इदादेशः उरण् रपर इति ( पा० १, १, ५१ ) रेफः मर्मघातकः उग्र उत्कृष्टो बद्धगोधाङ्गुलित्राण उद्गूर्णशस्त्रः क्षत्रियो यथा शत्रुं बाधते । यद्वा उग्रो रुद्रो मध्यमेन त्रिशूलमध्यभागेन शृणातीति मध्यमशीः यथा युगान्ते जगद्बाधते तद्वद् यूयमपि रोगिणो देहं प्रविष्टा व्याधिं विबाधध्व इत्यर्थः ॥ ८६ ॥

**साकं यक्ष्म प्रपत चाषेण किकिदीविना । साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ ८७ ॥**

साकं यक्ष्म । साकं सहेत्यर्थः । हे यक्ष्म सह प्रपत प्रणश्य । चाषेण पक्षिणा किकिदीविना शब्दानुकरणमेतत् । किकि एवं यो दीव्यति तेन सह प्रपत । सहि तत्र सार्थ उचितः । साकं वातस्य ध्राज्या । गत्या प्रपत । साकं नश्य प्रपलाहि । निहाकया । निहन्ति कायमिति निहाका निर्ऋतिः कृच्छ्रापत्तिः

तया कृच्छ्रापत्या सह नश्य हे यक्ष्म। यद्वा शब्दानुकरणमेतत्। हा कष्टं निर्गतोऽहंकया ओषध्या एवं रूपया शब्दानुकरणभक्त्या। सह नश्य हे यक्ष्म अपुनरागमनाय॥ ८७॥ शतम्॥ ६००॥

हे यक्ष्म रोग! त्वं चाषेण पक्षिणा साकं सह प्रपत प्रकर्षेण गच्छ। किम्भूतेन चाषेण किकिदीविना किकीति शब्दानुरणं किकीतिशब्देन दीव्यति क्रीडतीति किकिदीविस्तेन। चाषस्तवोचितः सार्थः। वातस्य ध्राज्या गत्या साकं प्रपत वातगतिवत् पलायस्वेत्यर्थः। किञ्च निहाकाया साकं नश्य नष्टो भव निहन्ति कायमिति निहाका निर्ऋतिः कृच्छ्रपित्तिस्तया सह नश्य। यद्वा शब्दानुकरणमिदं हा कष्टं कया ओषध्या निहतोऽहमिति शब्दं कुर्वन् हे यक्ष्म! त्वं नश्य॥ अर्थान्तरं वा कफावरुद्धकण्ठोत्थध्वनेरनुकरणार्थः किकिशब्दः किकिना कण्ठध्वनिना दीव्यतीति किकिदीविः श्लेष्मरोगः। चष वधे चषति व्याकुलं कृत्वा हन्ति चाषः पित्तरोगः। वातस्य ध्राजिर्वातरोगः। हे यक्ष्म रोगराज! त्वं कफपित्तवातरोग सह प्रपत गच्छ। यया पीडया कया रुजा निहतोऽस्मि हा कष्टमिति शब्दं करोति सा निहाका सर्वाङ्गवेदना तया साकं हे यक्ष्म त्वं नश्य॥ ८७॥

अ॒न्या वो॑ अ॒न्याम॑वत्व॒न्यान्य॒स्या उपा॑वत। ताः सर्वाः॑ संविदा॒ना इ॒दं मे॒ प्राव॑ता॒ वचः॑॥ ८८॥

अन्या वः। हे ओषधयः अन्या ओषधिः वः युष्मायन् अन्यामोषधिम् अवतु पालयतु। अन्या च ओषधिः अन्यस्याः ओषध्याः प्रभावम् उपावते पुरुषवचनव्यत्ययः। उपावतु उपगम्य पालयतु। ता यूयमेव सर्वाः संविदानाः संगच्छमानाः। इदं मे मम प्रावत प्रपालयतु। वचः वचनमार्षम्॥ ८८॥

हे ओषधयः! वो युष्माकं मध्ये अन्या काचिदोषधिव्यक्तिरन्यामोषधिव्यक्तिमवतु तथा रक्षिता अन्यापि अन्यस्या रक्षिकाया उपावत उपावतु उप समीपमागत्य पालयतु पुरुषवचनव्यत्ययः अन्यान्यस्याः प्रभावमवतु वा। ताः सर्वास्तथाविधा ओषधयो यूयं संवि-

दान्ताः परस्परैकमत्यं गतः सत्यो मे ममेदं वचः वाक्यं प्रार्थनारूपं प्रावत प्रकर्षेण रक्षत ॥ ८८ ॥

**याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ ८९ ॥**

याः फलिनीः । या ओषधयः फलवत्यः याश्च अफलाः फलरहिताः । या अपुष्पाः पुष्परहिताः याश्च पुष्पिणीः पुष्पवत्यः । बृहस्पतिना अभ्यनुज्ञाताः ताः नः अस्मान् मुञ्चन्तु अंहसः पापात् ॥ ८९ ॥

या ओषधयः फलिनीः फलयुक्ताः याश्चाफलाः फलरहिताः याश्चापुष्पाः पुष्परहिताः याश्च पुष्पिणीः पुष्पिण्यः पुष्पयुक्ताः ताः सर्वा ओषधयो बृहस्पतिप्रसूता बृहस्पतिप्रेरिताः सत्यो नोऽस्मानंहसः पापाद्रोगरूपात् मुञ्चन्तु पृथक् कुर्वन्तु ॥ ८९ ॥

**मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत । अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥ ९० ॥**

इत उत्तर मनारभ्य वाद मन्त्राः । तेषां लिङ्गतो विनियोगः । मुञ्चन्तु मा शपथ्यात् शपथनिमित्तात्किल्विषात् । अथो अपि च वरुण्यात् । वरुणनिबन्धनात् । उत अथो अपिच । यमस्य सम्बन्धिनः पड्वीशात् बन्धनात् । पड्वीशशब्दो बन्धन वचनः । सन्दानमर्वन्तं पड्वीशमिति दृश्यते । किञ्च । सर्वस्मात् च देवनिमित्तात्किल्विषात् मुञ्चन्तु । यत्किञ्चिद्विनास्ति पापकर्त्तुः सम्बन्धि तत्किल्विषमित्युच्यते ब्रह्महत्यादि ॥ ९० ॥

एवमोषधिवापार्थानि पञ्च तृचानि समाप्तानि । अथानारभ्याधीताः ॥ शपथनिमित्तात्किल्विषात् पापादोषधयो मा मां मुञ्चन्तु पृथक् कुर्वन्तु । अथो अपि च वरुण्यात् वरुणे भवं वरुण्यं तस्माद्वरुणापराधनिमित्तात् पापान्मां मुञ्चन्तु उतापि च यमस्य सम्बन्धिनः पड्वीशात् पड्वीशशब्दो बन्धनवाची यमबन्धननिमित्तात्

पापान्मां मुञ्चन्तु । अथा अपि च सर्वस्माद् देवाकिल्विषाद् देवापरा-धनिमित्तात् पापान्मां मुञ्चन्तु ॥ ९० ॥

**अ॒व॒पत॑न्तीरवद॒न्दि॒व ओष॑धय॒स्परि॑ । यं जी॒वम॒-श्नवा॑महै॒ न स रि॑ष्याति॒ पूरु॑षः ॥ ९१ ॥**

अवपतन्तीः । अवाचीनं पतन्त्यः । दिवः परि दिवो द्यु-लोकात् ओषधयः । किमवदन्नित्यत आह । यज्जीवमनु-क्रान्तप्राणम् अश्नवामहै व्याप्नुमः । नस रिष्याति विनश्य-ति पूरुषः । छान्दसं दीर्घत्वम् ॥ ९१ ॥

दिवः परि द्युलोकात्सकाशादवपतन्तीरवपतन्त्योऽधस्ताद्भूमौ गच्छन्त्यः ओषधयः अवदन् परस्परं वदनमुक्तवत्यः । किम् तदाह जीवतीति जीवस्तं यं जीवमनुत्क्रान्तप्राणं पुरुषं वयमश्नवामहै अ-शूङ् व्याप्तौ लोट् व्याप्नुमः स पुरुषो न रिष्यति न नश्यति रिष्य-तीत्यत्र लेटोऽडाटाविति आडागमः पूरुष इति छान्दसो दीर्घः सर्वत्र ॥ ९१ ॥

**या ओष॑धीः सोम॑राज्ञी॒र्बह्वीः श॒तवि॑चक्षणाः ता-सा॑मसि॒ त्वमु॑त्त॒मारं॒ कामा॑य॒ शꣳ हृ॒दे ॥ ९२ ॥**

या ओषधीः । या ओषधयः सोमराज्ञ्यः सोमराजा आ-सामिति । सोमराज्ञ्यः बह्व्यः अनन्ताः । शतविचक्षणाः बहु-वीर्याः । बहवो वा स्तोतारो विचक्षणा आसां बहुविचक्षणाः । तासामोषधीनां मध्ये त्वं भवासि उत्तमा यतः अतः अलङ्कामाय भव । शञ्चसुखञ्चहृदयाय भव ॥ ९२ ॥

सोमो राजा यासां ताः सोमराज्यः बह्वीः बह्व्योऽनन्ताः शत-विचक्षणाः शतसंख्यं विचक्षणाश्चतुराः बहुवीर्या वा शतं विचक्षणाः स्तोतारो यासामिति वा एवम्भूता या ओषधीः ओषधयः सन्ति ता-सामोषधीनां मध्ये हे ओषधे ! त्वमुत्तमा उत्कृष्टा यतोऽसि भवसि अतः कमायेप्सिताय अरमलं पर्याप्ता भव हृदे हृदयाय शं सुख-कारिणी भव ॥ ९२ ॥

**या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु । बृहस्पतिप्रसूता अस्यै सन्दत्त वीर्यम् ॥ ९३ ॥**

या ओषधीः । या यूयं हे ओषधयः सोमराज्यः विष्ठिताः विविधं स्थिताः पृथिवीम् अनु । ताः बृहस्पतिप्रसूताः अस्यै ओषधयै सन्दत्त वीर्यम् । येनेयं बहुवीर्या भवतीत्याभिप्रायः ॥९३॥

सोमराज्यो या ओषधयः पृथिवीमनु विष्ठिताः विविधं स्थिताः बृहस्पतिप्रसूताः बृयस्पतिना प्रेरिताः ता ओषधयोऽस्यै ओषध्यै मदृगृहीतायै वीर्यं सन्दत्त सामार्थ्यं प्रयच्छत इयं बहुवीर्या भवत्विति भावः ॥ ९३ ॥

**याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । सर्वाः सङ्गत्य वीरुधोऽस्यै सन्दत्त वीर्यम् ॥ ९४ ॥**

याश्च याश्च ओषधयः इदं वच उपशृण्वन्ति समीपास्थिताः । याश्च अतिदूरम्परागता दूरदेशव्यवहिताः ताः सन्निधानी कृत्याहं ब्रवीमि । सर्वाः सङ्गत्य सम्भूय । हे वीरुधः विरोहणाः अस्यै सन्दत्त वीर्यम् प्रभावम् ॥ ९४ ॥

या ओषधय इदं मद्वचनं प्रार्थनारूपमुप समीपस्थाः शृण्वन्ति याश्चान्याः दूरं परागताः दूरे व्यवस्थिता व्यवहिताः सत्यः ईषत् शृण्वन्ति हे वीरुधः विविधरोहणा ओषधयः ! ता सर्वा समीपदूरस्थाः सङ्गत्य सङ्गता भूत्वा अस्यै ओषध्यै यूयं वीर्यं सन्दत्त प्रयच्छत ॥ ९४ ॥

**मा वो रिषत् खनिता यस्मै चाहं खनामि वः । द्विपाच्चतुष्पादस्माकꣳ सर्वमस्त्वनातुरम् ॥ ९५ ॥**

मा वो रिषत् । मा रिषतु मा विनश्यतु । वो युष्माकं खनिता । यस्मै च पुरुषाय अहं खनामि वः युष्मान् । किञ्च । द्विपात् स्त्रीपुंसम् चतुष्पात् गवादि । संख्यासुपूर्वस्येति पादशब्दान्त्य-

लोपः। अस्माकं सर्वमस्तु अनातुरमनाकुलम्। युष्मत्प्रसादा-दिति शेष ॥ ९५ ॥

हे ओषधयः! वो युष्माकं खनिता चिकित्सार्थं युष्मन्मूलं ग्रहीतुं खननकर्त्ता मा रिषत् मा विनश्यतु यस्मै च रुग्णाय चिकित्सार्थं वो युष्मानहं खनामि युष्मन्मूलमादातुं खननं करोमि स च मा रिषत्। किम्बहुनास्मकं सम्बन्धि द्विपात् स्त्रीपुंसं चतुष्पाद्गवादि प्राणिजातं सर्वमनातुरं रोगरहितमस्तु। द्वौ पादौ यस्य चत्वारः पादा यस्य संख्यासुपूर्वस्येति पादशब्दस्यान्तलोपः ॥ ९५ ॥

**ओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तꣳ राजन् पारयामसि ॥ ९६ ॥**

ओषधयः सम्। ओषधयः समवदन्त सम्वादं कृतवत्यः। सोमेन सह राज्ञा। सोमो हि ओषधीनां राजा। किं समवदन्त। यस्मै पुरुषाय भैषज्यं कृष्णोति करोति ब्राह्मणः तमातुरं हे सोमराजन् पारयामसि पारयामः उत्तारयामो व्याधेः। सोमेन सह सम्वादो व्याध्यपगमदृढीकरणार्थः ॥ ९६ ॥

राज्ञा स्वस्वामिना सोमेन सह ओषधयः देवताः समवदन्त संवादं कृतवत्यः। कथं संवादस्तमाह ब्राह्मणो यस्मै रुग्णाय कृणोति अस्मन्मूलादिना चिकित्सां करोति कृ कृतौ स्वादिः हे राजन् स्वामिन् सोम! तं रुग्णं नरं वयं पारयामसि पारयामः इदन्तो मसि सोमसंवादो व्याधिनाशदार्ढ्यार्थः ॥ ९६ ॥

**नाशयित्री बलासस्यार्शस उपचितामसि। अथो शतस्य यक्ष्माणां पाकारोरसि नाशनी ॥ ९७ ॥**

नाशयित्री। नाशयित्री बलासस्य बलमस्यति निक्षिपतीति बलासः क्षयः अर्शसः शूलव्याधेः। उपचिताम्। शरीरे ये उपचीयन्ते। श्वयथुगडश्लीपदप्रभृतयः। तेषाञ्च त्वं नाशनी भवसि। अथो शतस्य यक्ष्माणामपि बहूनां व्याधीनां नाशयित्री त्वमसि।

पाकारोः अरुः क्षतमुच्यते । मुखपाकक्षतादेर्नाशिनी त्वमसि । यद्वा रुच् दीप्तौ । अन्नपाकस्य अरुः अदीप्तिर्मन्दाग्नित्वं तस्य च त्वन्नाशिनी भवसि ॥ ९७ ॥

हे ओषधे ! त्वं बलासस्य क्षयव्याधेर्नाशयित्री नाशकर्त्री असि भवसि बलमस्यति क्षिपति बलासः क्षयः । अर्शसो गुदव्याधेश्च नाशिकासि : उपचिताम् उपचिन्वन्ति शरीरं वर्धयन्तीत्युपचितः क्विप् श्वयथुगड्डश्लीपदादयः तेषां च नाशिकासि । अथो अपि च शतस्य यक्ष्माणां बहूनां व्याधीनां पाकारोः मुखपाकक्षतादेश्च नाशनी नाशकर्त्री त्वं भवसि । पाको मुखपाकः अरुः क्षतमुच्यते पाकेनारुः पाकारुस्तस्य यद्वा पाकोऽन्नपाकस्तस्यारुर्व्यथा मन्दाग्नित्वं तस्य नाशनी त्वमसि ॥ ९७ ॥

त्वां ग॑न्धर्वा अ॑खनँस्त्वामिन्द्र॒स्त्वां बृह॒स्पति॑ः । त्वामो॑षधे॒ सोमो॒ राजा॑ वि॒द्वान् यक्ष्मा॑दमुच्यत ॥ ९८ ॥

त्वाङ्गन्धर्वाः यतश्च त्वमित्थं भूता असि अतः । त्वां गन्धर्वाः अखनन् । अभिलषितकामप्राप्त्यर्थम् । त्वां च इन्द्रः त्वां च बृहस्पतिः त्वां च हे ओषधे सोमराजा विद्वान् जानानः उपयोगम् यक्ष्मान्महाव्याधेः अमुच्यत मुक्तः ॥ ९८ ॥

हे ओषधयः ! गन्धर्वाः देवविशेषाः त्वामखनन् स्वेष्टकार्य्यसिद्ध्यर्थं खननमकुर्वन् इन्द्रश्च त्वामखनत् बृहस्पतिश्च त्वामखनत् हे ओषधे ! सोमो राजा त्वां च विद्वान् त्वत्सामर्थ्यं जानन् सन् त्वामुपयुज्य यस्मात् महाव्याधेरमुच्यत मुक्तोऽभवत् ॥ ९८ ॥

सह॑स्व मे॒ अरा॑ती॒ः सह॑स्व पृतनाय॒तः । सह॑स्व॒ सर्वं॑ पा॒प्मान॒ꣳसह॑माना॒स्योषधे ॥ ९९ ॥

सहस्व मे । यतस्त्वमित्थंभूता च अतोऽहं याचे । सहस्व अभिभव मे मम अरातीः अदानशीलाः सत्रुसेनाः । सहस्व च अभिभवस्व च पृतनायतः । पृतनाः संग्रामः संग्रामकामान् शत्रून् शहस्व च अभिभवस्व च सर्वं पाप्मानं सर्वमशुभम् । कस्मादभि-

ताः प्रसर्पन्ति । नच वृक्षाणां भोग्या भवन्ति अयथातथेमे वृक्षा उपस्तयः यथा त्वत्प्रसादात् उपस्तिः अस्तु स पुरुषः अस्माकम् यः अस्मान् अभिदासति । दसु उपक्षये । अभिहन्ति ॥ १०१ ॥

हे ओषधे ! त्वमुत्तमा उत्कृष्टासि भवासि वृक्षाः शालतालतामालादयस्तवोपस्तयः सन्तु स्त्यै शब्दसङ्घातयोः उपस्त्यायन्ति उपकारायोपद्रवनिराकरणाय च समीपे संहतास्तिष्ठन्तीत्युपस्तयः वृक्षाः त्वां सेवन्तामित्यर्थः । किञ्च यो नरोऽस्मानभिदासति अभिहन्ति स नरोऽस्माकमुपस्तिः समीपस्थ उपासकोऽस्तु दासतिर्हिंसाकर्मा ॥ १०१ ॥

अनारभ्याधीताः समाप्ताः ॥

**मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट् । यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥ १०२ ॥**

चतस्रो लोगेष्टका श्चतसृभिर्ऋग्भिरुपदधाति । मा मा । कायी त्रिष्टुप् । मा मा हिंसीत् पूर्वः प्रतिषेधार्थीयः उत्तरोऽस्मदादेशः । माहिंसीन्माञ्जनितायः जनिता मन्त्र इति णिचो लोपः जनयितायः पृथिव्याः प्रजापतिः । यो वा दिवं सत्यधर्मा व्यानट् । वाशब्दः समुच्चयार्थीयः । व्यानडिति व्याप्तिकर्मा । श्रुत्या तु सृजतेरर्थे व्याख्यातः यश्च दिवं सत्यधर्मा सत्यधारणः व्यानट् असृजत्।यश्च आपश्चन्द्राः प्रथमो जजान । मनुष्या वा आपश्चन्द्रा इति श्रुतिः । मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्रलोकं पितृमार्गानुसारिणः । यद्वा । यश्चापः चायनीयाः प्रथमः शरीरी जनितवान् । अपां चायनीयानां कारणभूतानां जननेन यो मनुष्यान् जनितवान् इति कारणेकार्योपचारः । कस्मै देवाय हविषा विधेम । य इत्थम्भूतः कःप्रजापति स्तस्मै कस्मै काय इति प्राप्ते स्मैआदेशश्छान्दसः । सर्वनाम्नः स्मै इति हि पाणिनिः नचैतत्सर्वनाम देवतात्वात् प्रजापतयेहविषा

हविषेति विभक्तिव्ययः। विदधातिर्दानकर्मा। तस्मै प्रजापतये हविर्दद्म इति सम्बन्धः॥ १०२॥

का० (१७, ३, ११) लोगेष्टकाः स्फ्येनाहृत्य बहिर्वेदेरनूक्कान्तेषूपधाति तिष्ठन्मा मा हिᳬंसीदिति प्रत्यृचं प्रतिदिशं पुरस्तात्प्रथमम्। ततोऽध्वर्युः स्फ्येन वेदिबहिःप्रदेशाल्लोगेष्टकाश्चतुरो मृत्खण्डान् पद्मप्रमाणानानीयात्मनो दक्षिणोत्तरपूर्वापरमध्यसूत्रप्रान्तेषु पूर्वादि तिष्ठन् मन्त्रचतुष्टयेनोपदध्यादिति सूत्रार्थः॥ हिरण्यगर्भदृष्टा कदेवत्या त्रिष्टुप्। यः प्रजापतिः पृथिव्या भूमेर्जनिता जनयिता उत्पादकः जनिता मन्त्र इति [ पा० ६, ४, ५३ ] णिचो लोपः। वा चार्थे यो वा दिवं व्यानट् द्युलोकमसृजत्। व्यानट् इति व्याप्तिकर्मा (निघ० २, १८, ४) श्रुतौ तु सृजतेरर्थे व्याख्यातः यो वा दिवᳬं सत्यधर्मासृजतेति श्रुतेः (७, ३, १, २०)। यश्च चन्द्राः आह्लादिका जगत्कारणभूता अपो जलानि प्रथमः आदिभूतः सन् जजानोत्पादितवान् तद्द्वारा मनुष्यानुत्पादितवानित्यर्थः। यतः श्रुतौ आपश्चन्द्रा इति मनुष्या व्याख्याताः मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्रलोकं पितृमार्गानुसारिणः मनुष्या वा आपश्चन्द्रा इति श्रुतेः [ ७, ३, १, २० ] कारणे कार्योपचारात्। कीदृशः प्रथमः शरीरी सत्यधर्मा सत्यं धरतीति सत्यस्य धारयिता स प्रजापतिर्मा मा हिंसीत् मा हन्तु यतः कस्मै काय प्रजापतये हविषा हविः वयं विधेम दद्मः। हविर्दानान्मा हन्तु। कशब्दस्य सर्वनामत्वाभावात् स्मैआदेशः छान्दसः। हविषा इति विभक्तिव्यत्ययः। विदधातिर्धातुर्दानार्थः॥ १०२॥

अ॒भ्याव॑र्त्तस्व पृथिवि य॒ज्ञेन॒ पय॑सा स॒ह। व॒पां ते॑ अ॒ग्निरि॑षि॒तो अ॑रोहत्॥ १०३॥

दक्षिणत उपदधाति। अभ्यावर्तस्व अभिमुखीभव। अग्निंप्रत्याहृता भव हे पृथिवि। यज्ञेन यज्ञसाधनभूतेन हविषा। पयसासह कस्मात्कारणादित्यतआह वपान्ते। वपां पृष्ठे ते तव अग्निः इषितः प्रजापतिप्रेषितः अरोहत् आरूढवान्॥ १०३॥

अग्निदेवत्या उष्णिक् । हे पृथिवि ! यज्ञेनास्मच्चिकीर्षितेन पयसा तत्फलभूतेन दुग्धादिभोगेन च सह अभ्यावर्तस्व आभिमुख्येनागच्छ । कथमागन्तव्यमत आह इषितः प्रजापतिप्रेषितोऽग्निः ते तव वपां त्वचं पृष्ठं वपासदृशमिमं प्रदेशमरोहत् आरोहतु । अनयर्चा दक्षिणे लोगेष्टकोपधानम् ॥ १०३ ॥

**अग्ने यत्ते शुक्रं यच्चन्द्रं यत् पूतं यच्चं यज्ञियम् । तद्देवेभ्यो भरामसि ॥ १०४ ॥**

पश्चादुपदधाति । अग्ने यत्ते । आग्नेयी गायत्री । हे अग्ने यत्ते-तव शुक्रं सारं शुक्लं वा । यच्च चन्द्रमाल्हादनीयम् यच्च पूतं पवित्रम् यच्च यज्ञियं यज्ञार्हम् तद्देवेभ्योऽर्थाय । देवेभ्यो वा सकाशात् भरामसि सम्भरामः ॥ १०४ ॥

अग्निदेवत्या गायत्री पश्चाल्लोगेष्टकोपधाने विनियुक्ता । हे अग्ने । यत्ते तवाङ्गं शुक्रं शुक्लं दीप्तिमत् यच्चान्यदङ्गं चन्द्रमाह्लादकरं यदन्यत् पूतं पवित्रं यच्चान्यदङ्गं याज्ञेयं यज्ञार्हं तत्सर्वं श्लाघ्यरूपं देवेभ्यो देवानामर्थे भरामसि भरामः सम्पादयामः ॥ १०४ ॥

**इषमूर्जं महमित आदंमृतस्य योनिं महिषस्य धाराम् । आ मा गोषु विशत्वा तनूषु जहांमि सेदिमनिंरामर्मीं वाम् ॥ १०५ ॥**

उत्तरत उपदधाति । इषमूर्जम् । त्रिष्टुप् । आशीः प्रायो-मन्त्रः । अस्मिन्मन्त्रे विशेषणविशेष्यभावात् यत्तद्भ्यां वाक्यपरिपूर्त्तिः क्रियते । यत् इममन्नं यच्च ऊर्जं तदुपसेचनन्दधिपयो-घृतादिकम् अहम् इतः उदीच्या दिशः । आदम् आददे गृहीतवान् । यच्च ऋतस्य सत्यस्य योनिं स्थानं तिस्रो विद्या अहमाददे । यच्च महिषस्य महतः इच्छावतश्चाग्नेः धाराम् आहुतिमहमाददे । उदीच्यां दिशः । एतत्सर्वम् आ मा गोषु विशत्वा तनूषु । आविशतु मां गोषु तनूषु च पुत्रपौत्रादिकासु । सिकताः प्रध्वंसयति ।

जहामि परित्यजामि उदीच्यां दिशि स्थापयामि । सेदिम् अव-
सादम् अनिरामनन्ताम् अमीवां व्याधिम् ॥ १०५ ॥

आशीर्देवी त्रिष्टुप् पादत्रयस्योत्तरतो लोगेष्टकोपधाने विनियोगः । इषमन्नमूर्जं तदुपसेचनं दधिपयोघृतादिकमृतस्य सत्यस्य योनिं स्थानं विद्यात्रयम् महिषस्य महत इच्छावतोऽग्नेर्धारां धारणामाहुतिं वा इतोऽस्मात् प्रदेशादुदीच्या दिशः सकाशादहमादमद्मि भक्षयामि स्वीकरोमीत्यर्थः । अद् भक्षणे लङ् । किञ्च एतत्सर्वमिडादिकं मा मामाविशतु आगत्य प्रविशतु तनूषु मदीयपुत्रादिशरीरेषु गोषु मदीयधेन्वादिपशुषु चाविशतु ॥ का० ( १७, ३, १३ ) उत्तरस्याः सिकताः प्रमार्ष्टि जहामि सेदिमिति । उत्तरलोगेष्टकातः सिकताः पातयति ॥ नास्ति इराऽन्नं यस्यां तामनिरामन्नरहितामममीवां व्याधियुतां सेदिमवसादमहं जहामि त्यजामि अन्नाभावरोगदुःखानि मे मा सन्त्वित्यर्थः ॥ १०५ ॥

अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो । बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥ १०६ ॥

आग्नेयेन षडृचेन सिकतानि वपति । अग्ने तव । प्रथमे द्वे विष्टारपङ्क्ती । तिस्रः सतो बृहत्यः षष्ठी उपरिष्टाज्ज्योतिः । हे अग्ने तव सम्बन्धी धूमः । श्रवो वयः । अमुष्मिन् लोके श्रावयतीति श्रवः वयोऽन्नम् तस्याहुतिपरिणामद्वारेण निमित्तभूतत्वात् धूमो वय-इत्युच्यते । धूमो वा अस्य श्रवो वयः सह्येनममुष्मिन् लोके श्रावयतीति श्रुतिः । एवंप्रभावस्तव धूमः । अथ महि । महत् । भ्राजन्ते अर्चयः अर्चींषीति लिङ्गव्यत्ययः । हे विभावसो विभूतधन । किञ्च । हे बृहद्भानो महादीप्ते शवसा बलेन सहितं वाजमन्नम् उक्थ्यम् उक्थ्यार्हं यज्ञार्हम् । दधासि ददासि दाशुषे हवींषि दत्तवते यजमानाय । हे कवे क्रान्तदर्शन ॥ १०६ ॥

का० ( १७, ३, १५ ) अग्ने तवेति सिकतान्युप्य छादयत्यात्मा

नम् । षड्ऋचेनोत्तरवेद्यां सिकताः प्रक्षिप्य ताभिः पुच्छपक्षं विनात्मानं छादयेत् ॥ पावकाग्निदृष्टं षड्ऋचमग्निदेवत्यम् । आद्ये द्वे विष्टारपङ्क्ती यस्या द्वितीयतृतीयपादौ द्वादशार्णौ आद्यतुर्यावष्टकौ सा विष्टारपङ्क्तिः । हे अग्ने ! हे विभावसो ! विभा दीप्तिरेव वसु धनं यस्य तत्सम्बोधनं हे कान्तिधन ! तव वयो धूमः अर्चयो दीप्तयश्च भ्राजन्ते दीप्यन्ते वीयते भक्ष्यते प्राणिभिरिति वयोऽन्नम् । वी कान्त्यसनस्वादनव्याप्तिषु धूमस्याहुतिपरिणामद्वारेणान्नहेतुत्वाद् वयोऽत्र धूम उच्यते । कीदृशं वयः श्रवः आवयाति द्युलोके कृतं कर्मेति श्रवः धूमदर्शनाद् देवानां कर्मज्ञानम् । तथा महि महत् नभोगामित्वात् धूमो वा अस्य श्रवोः वयः स ह्येनममुष्मिँल्लोके आवयतीति श्रुतेः ( ७, ३, १, २९ ) । किञ्च बृहन्तो महान्तो भानवो रश्मयो यस्य तत्सम्बुद्धौ हे बृहद्भानो ! हे कवे ! क्रान्तदर्शिन् विद्वन् यजमानाभिप्रायज्ञ ! दाशुषे हविर्दत्तवते यजमानाय शवसा बलेन सह वाजमन्नं त्वं दधासि ददासि । कीदृशं वाजम् उक्थ्यम् उक्थः शस्त्राद्युपेतो यज्ञस्तद्योग्यं यज्ञपर्याप्तमन्नं ददासीत्यर्थः ॥ १०६ ॥

पा॒व॒कव॑र्चाः शु॒क्रव॑र्चा॒ अनू॑नवर्चा॒ उदि॑यर्षि भा॒नुना॑ । पु॒त्रो मा॒तरा॑ वि॒चर॒न्नुपा॑वसि पृ॒णक्षि॒ रोद॑सी उ॒भे ॥ १०७ ॥

पावकवर्च्चाः । हे अग्ने यस्त्वं पावकवर्च्चाः पावकशक्तिः शुक्रवर्च्चाश्च शुक्रशक्तिश्च अनूनवर्च्चाश्च अपरिहीणशक्तिः सन् अन्यूनशक्तिर्वा सन् । उदियर्षि उद्गच्छसि । भानुना दीप्त्या । यश्च त्वं पुत्र इव मातरा मातापितरौ । उत्तमे वयसि विचरन् उपचरन् । उपावसि । उपसङ्क्रम्य पालयसि । सदेवमनुष्यञ्जगत् । यश्च त्वं पृणक्षि पूरयसि रोदसी द्यावापृथिव्यौ । उभे अपि इमे वै द्यावापृथिवीरोदसी ते एष उभे पृणक्ति धूमे नाम्नं दृष्ट्येमामिति श्रुतिः तत्त्वांस्तुम इतिवाक्यशेषः ॥ १०७ ॥

हे अग्ने ! त्वं भानुनादीप्त्या उदियर्षि उद्गच्छसि उत्कर्षं प्राप्नोषीत्यर्थः । कीदृशस्त्वं पावकवर्चाः पावकं शोधकं वर्चो दीप्तिशक्ति-

यस्य सः । शुक्रवर्चाः शुक्रं शुक्रं निर्मलं वर्चो यस्य । अनूनवर्चाः अनूनमहीनं वर्चो यस्य पूर्णशक्तिः । किञ्च हे अग्ने । त्वं विचरन् सर्वतः प्रचरन् सन् उपावसि उपसङ्गम्य पालयसि सदेवमनुष्यं जगद्रक्षसि । तत्र दृष्टान्तः पुत्रो मातरा यथा पुत्रश्चरमे वयसि मातरा मातापितरौ उपावति तद्वत् पितरामातरा च छन्दसीति निपातः । किञ्च उभे रोदसी द्यावापृथिव्यौ पृणक्षि पूरयसि हविषा द्यां वृष्ट्या भूमिं पूरयसीत्यर्थः । इमे वै द्यावापृथिवी रोदसी ते एष उभे पृणक्ति धूमेनामूं वृष्ट्येमामिति ( ७, ३, १, ३० ) श्रुतेः । तं त्वां स्तुम इति वाक्यशेषः ॥ १०७ ॥

ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः । त्वे इषः सन्दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ १०८ ॥

ऊर्जो नपात् । ऊर्जशब्देनाप उच्यन्ते । नपाच्छब्देन च पौत्रः। हे अपां पौत्र ! अद्भ्य ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्योऽग्निर्जायते । एवमपान्नपादग्निः । जातवेदः जातप्रज्ञानः । सुशस्तिभिः साधुशंसनैः स्तुत इति शेषः। मन्दस्व दीप्यस्व । धीतिभिः कर्मभिर्निमित्तभूतैः हितः निहितः । स्थापितः । कस्मात्त्वां वयमेवम्ब्रूम इत्यवेक्ष्याह। त्वे इषः सन्दधुर्भूरि वर्प्पसः । त्वयि इषः अन्नानि हविर्लक्षणानि सन्दन्धुः जुहुवुः भूरिवर्पसः। वर्प इति रूपनाम । बहुरूपा यजमानाः जगदात्मत्त्वेनोपगताः । चित्रोतयः । चायनीयानि अयनानि तर्पणानि येषान्ते चित्रोतयः । वामजाताः । वननीयजन्मानः विशिष्टदेशजातिकुलोत्पन्नाः । अतस्त्वं मन्दस्वेति सम्बन्धः ॥ १०८ ॥

तिस्रः सतोबृहत्यः । यस्या आद्यतृतीयौ द्वादशकौ द्वितीयतुर्यावष्टकौ सा सतोबृहती । ऊर्क् जलं नपात्पौत्रः हे ऊर्जो नपादपां पौत्र ! अद्भ्य ओषधिवनस्पतयो जायन्ते तेभ्योऽग्निर्जायत इत्यपां पौत्रत्वमग्नेः । यद्वा ऊर्जोऽन्नस्य नपात् न पातयति नाशयति नपात्

पतेर्णिजन्तात् क्विप् हे अन्नस्याविनाशक ! हे जातवेदः जातप्रज्ञान ! धीतिभिः कर्मभिर्निमित्तभूतैर्हितः स्थापितः सन् सुशस्तिभिः शोभनाभिः शस्तिभिः स्तुतिभिः कृत्वा त्वं मन्दस्व मोदस्व हृष्टो भव । मदिङ् स्वपने जाड्ये मदे मोदे स्तुतौ गताविति धातुः । किमिति हर्षः कार्यस्तत्राह यजमानाः त्वे त्वयि इषो हविर्लक्षणान्यन्नानि सन्दधुः जुहुवुः हविष्प्राप्त्या हर्षः कार्य इत्यर्थः । कीदृशा यजमानाः भूरिवर्पसः वर्प इति रूपनाम ( निघ० ३, ७ ) भूरीणि वर्पांसि येषां ते नानारूपाः । चित्रोतयः चित्रा विचित्रा नानाविधा ऊतयो रक्षा अवनानि अन्नानि तर्पणानि वा त्वत्कृतानि येषां ते त्वया तर्पिता इत्यर्थः । वामजाताः वामं वननीयं सम्भजनीयं जातं जन्म येषां ते विशिष्टदेशजातिकुलोत्पन्ना इत्यर्थः ॥ १०८ ॥

इ॒र॒ज्यन्न॑ग्ने प्रथयस्व ज॒न्तुभि॑र॒स्मे रायो॑ अमर्त्य । स द॑र्श॒तस्य॒ वपु॑षो॒ वि रा॑जसि पृ॒णक्षि॑ सान॒सिं क्रतु॑म् ॥ १०९ ॥

इरज्यन् । अत्रोपरितनोऽर्द्धर्चः प्रथमं व्याख्यायते । स इत्यस्य च पदस्य स्थाने यदो वृत्तिः । सर्वनामसामान्याद्वाक्यवशाच्च विभक्तिव्यत्ययोऽत्र कर्त्तव्यः । स दर्शतस्य वपुषो विराजसि । यस्त्वं दर्शनीयेन वपुषा शरीरेण ज्वालालक्षणेन विराजसि देदीप्यसे पृणक्षि पूरयसि । सानसिं चिरन्तनम् क्रतुं सङ्कल्पम् तन्त्वां ब्रवीमि । इरज्यन्दीप्यमानः हे अग्ने प्रथयस्व पृथुर्भव । स्वार्थे णिच् । जन्तुभिः मनुष्यैरध्वर्युप्रभृतिभिः चीयमान इति शेषः । अस्मे अस्मासु च रायो धनानि धारयन् स्थापयन् प्रथयस्वेत्यनुषज्यते । हे अमर्त्य अमरणधर्मन् ॥ १०९ ॥

हे अमरणधर्मन् । हे अग्ने ! रायो धनानि अस्मे अस्मासु त्वं प्रथयस्व विस्तारय । कीदृशस्त्वं जन्तुभिः प्राणिभिर्हविष्प्रदैरध्वर्युप्रभृतिभिः इरज्यन् दीप्यमानः । किञ्च यस्त्वमीदृशो धनप्रथयिता स त्वं दर्शतस्य दर्शनीयस्य वपुषः चित्याग्निरूपस्य

शरीरस्य मध्ये विराजसि विशेषेण दीप्यसे विभक्तिव्यत्ययो वा दर्शतेन वपुषा ज्वालालक्षणेन शरीरेण विराजसि। सानसिं चिरन्तनं क्रतुं सङ्कल्पं पृणक्षि पूरयसि सर्वेष्टं ददासीत्यर्थः ॥ १०९ ॥

इष्कर्त्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ राधसो महः। रातिं वामस्य सुभगां महीमिषं दधासि सानसिꣳ रयिम् ॥ ११० ॥

इष्कर्त्तारम् यन्तमिष्कर्त्तारम् निरुपसर्गस्यादिलोपः। निश्चयेन कर्त्तारम् अध्वरस्य यज्ञस्य। प्रचेतसम्प्रकृष्टप्रज्ञानम्। क्षयन्तम् क्षि निवासगत्योः। क्षयन्तन्निवसन्तम् राधसो महः।राध इति धननाम। सप्तम्यर्थेषष्ठ्यौ। राधसि महति स्तुमः। स त्वं रातिन्दानं दधासि। कस्य सम्बन्धिनीम् वामस्य वननीयस्य दातुः सम्बन्धिनीम् कथं भूताम् सुभगाम् भगशब्दो धनवचनः किञ्च। महीमिषम् महतीञ्च इष्टं वृष्टिमन्नं वा दधासि। सानसिम्पुराणञ्च रयिन्धनम् स्मर्य्यमाणविषयं निधानलक्षणं दधासि ॥ ११० ॥

हे अग्ने! अध्वरस्य यज्ञस्य इष्कर्त्तारं निस उपसर्गस्य नलोपः पूर्वमुक्तः (८३) निष्कर्तारं निश्चयेन कर्तारं यज्ञनिष्पादकं प्रचेतसं प्रकृष्टचित्तयुक्तं क्षयन्तं क्षि निवासगत्योः विशिष्टस्थाने निवसन्तमीदृशं यजमानं प्रति वामस्य वननीयस्य महो महतो राधसो धनस्य रातिं दानं त्वं दधासि। किञ्च सुभगां सुष्ठु भजनीयां महीं महतीमिषमन्नं च ददासि! सानसिं पुराणं रयिं धनमस्मर्य्यमाणविषयं निधानलक्षणं च दधासि निधिं दर्शयसीत्यर्थः ॥ ११० ॥

ऋतावानं महिषं विश्वदर्शतमग्निꣳ सुम्नाय दधिरे पुरो जनाः। श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥ १११ ॥

ऋतावानम्। यत्त्वामृतवानं सत्यवन्तम्महिम्महान्तम्

विश्वदर्शतम् सर्वस्य दर्शनीयम् अग्निम् अन्यदेवतानिवृत्त्यर्थोऽग्नि-शब्दः। सुम्नाय यज्ञाय दधिरे स्थापितवन्तः । पुरोऽग्रतः । आह-वनीयात्मना जनाः यजमानाः । तन्त्वाम् श्रुत्कर्णम् शृणोत्या-ह्वानं श्रुत्वा चानुतिष्ठति यःस श्रुत्कर्णः ।सप्रथस्तमम् सर्वतः पृ-थुतमम् ऊर्ध्वमधोऽनवच्छिन्नगतिविज्ञानम् गिरा वाचा स्तुत्या । दैव्यं देवम् स्वार्थे यत्प्रत्ययः । मानुषा मनुष्याः । युगा । युग-शब्दः कालवचनः । कालैर्निमित्तभूतैः पूर्णमास्यमावस्यादि-भिराह्वयन्ति ॥ १११ ॥

उपरिष्टाज्ज्योतिः । यस्यास्त्रयः पादा द्वादशाक्षराश्चतुर्थोऽष्टा-क्षरः सोपरिष्टाज्ज्योतिः । मानुषा विभक्तेराकारः मनुष्या जना मनुष्यजातियुक्ता जन्तव ऋत्विग्यजमानाः युगा विभक्तेराकारः युगशब्दः कालवाची युगैः कालैः पौर्णमास्यमावास्यादिभिर्निमित्तैः गिरा वेदवाचा कृत्वा सुम्नाय यज्ञाय त्वा त्वामग्निं पुरोऽग्रतः पूर्व-भागे आहवनीयरूपेण दधिरे स्थापितवन्तः । किम्भूतं त्वामृत-वानमृतमस्यास्तीति ऋतवान् तं सत्यवन्तं छान्दसो दीर्घः छन्द-सीवनिपौ वाच्यौ वंश्च मतुप् चेति ( पा० ५, २, १०९ वा० २ ) अस्त्यर्थे वन्प्रत्ययः । महिषं महान्तं विश्वदर्शतं सर्वस्य दर्श-नीयं श्रुत्कर्णं शृणुत इति श्रुतौ क्विप् श्रुतौ कर्णौ यस्य तम् यद्वि-ज्ञाप्यते तत्सत्यमेव कर्णाभ्यां श्रुत्वा सम्पादयतीत्यर्थः । सप्रथ-स्तमं प्रथनं प्रथः कीर्तिः । प्रथ प्रख्याने अस्मादसुन्प्रत्ययः प्रथसा सह वर्तमानः सप्रथाः अतिशयेन सप्रथाः सप्रथस्तमस्तम-तिकीर्तिमन्तम् । दैव्यं देव एव दैव्यस्तं स्वार्थे यत् यद्वा देवेभ्यो हितम् ॥ १११ ॥

**आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥ ११२ ॥**

सिकता अभिमृशति । आप्यायस्व । तिस्रः सौम्याः गाय-त्रीत्रिष्टुबुष्णिहः वा गायत्र्यः द्वाभ्यां विनियोगः। आप्यायस्व-आत्मानमभिवर्द्धय । कथंकृत्वा । समेतु ते । समागच्छतु तव-

विश्वतः सर्वतः हे सोम वृष्ण्यं सर्वभूतबीजम् । ततस्त्वं सर्वभूतो-त्पत्तिना वृष्ण्येन भव। वाजस्यान्नस्य सङ्गथे सङ्गमने । अन्नभात्रं प्राप्नुहि अन्नं वा प्राप्नुहि ॥ ११२ ॥

का० ( १७, ३, १६ ) आप्यायस्वेति सिकतालम्भनमृग्भ्याम् । आत्मनि विस्तारिताः सिकताः स्पृशति ऋग्द्वयेन ॥ गोतमदृष्टाः सोमदेवत्यास्तिस्रो गायत्रीत्रिष्टुबुष्णिक्छन्दस्काः आप्यायस्व मदिन्तमेति ( ११४ ) तृतीयस्या विनियोगः सूत्रे नास्ति । हे सो-म ! विश्वतः सर्वस्मात् वृष्ण्यं वीर्यं सर्वभूतोत्पत्तिकृद्बीजं ते तव समेतु समागच्छतु तेन च वीर्येण त्वमाप्यायस्व सर्वतो वर्ध-स्व। किञ्च वाजस्यान्नस्य संगथे सङ्गमननिमित्तं भवान्नमस्मासु सङ्गमयेत्यर्थः ॥ ११२ ॥

**सं ते पयांꣳसि समु यन्तु वाजाः सं वृष्ण्यान्य-भिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांꣳस्युत्तमानि धिष्व ॥ ११३ ॥**

सन्ते पयांसि । संयन्तु ते तव पयांसि रसाः सारभूताः संयन्तु च वाजाः अन्नानि । संयन्तु च वृष्ण्यानि रेतांसि । अभिमा-तिषाहः पाप्मनोऽभिभवतु सोमस्य ततः तैः पयोऽन्नवृष्ण्यैः आ-प्यायमानः अमृताय भव । प्रजात्यै अमरणधर्मिण्यै भव । प्र-जात्यान्तदमृतं दधाति तस्मात्प्रजातिरमृतेति श्रुतिः। हे सोम त-तो दिवि द्युलोके श्रवांसि चन्द्ररूपाणि उत्तमानि आहुतिपरिणाम-जनितानि । धिष्व धारयस्व ॥ ११३ ॥

हे सोम ! पयांसि पातव्या रसाः ते तव संयन्तु सङ्गच्छ-न्तामुत अपि च वाजा अन्नानि संयन्तु वृष्ण्यानि रेतांसि ते सं-यन्तु । कीदृशस्य त अभिमातिषाहः अभिमातिं पाप्मानं सहतेऽभि-भवतीत्यभिमातिसाट् तस्याभिमातिसाहः षत्वं छान्दसम् । हे सोम ! पयोऽन्नवृष्ण्यैराप्यायमानः वर्धमानः सन् अमृताय अम-रणधर्मिण्यै प्रजात्यै पुत्रादिवृद्ध्यै यजमानस्य भवेति शेषः । अमृ-

तशब्देन श्रुत्या प्रजातिर्व्याख्याता । तथा च श्रुतिः ( ७, ३, १, ४६ ) प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृतेति । किञ्च दिवि द्युलोके उत्तमानि उत्कृष्टानि श्रवांसि अन्नानि आहुतिपरिणामजनितानि धिष्व धारय सम्पादय लोकद्वयभोगं सम्पादयेत्यर्थः । धि धारणे तुदादिः विकरणव्यत्यय आत्मनेपदं च छान्दसं बहुलं छन्दसीत्युक्तः ( पा० २, ४; ७३ ) सुधितवसुधितेति सूत्रेण दधातेर्निपातो वा धत्स्वेत्यर्थे ॥ ११३ ॥

आप्यायस्व मदिन्तम सोम विश्वेभिरꣳशुभिः । भवा नः सप्रथस्तमः सखा वृधे ॥ ११४ ॥

आप्यायस्व । हे सोम त्वमात्मानमाप्यायस्व मदिन्तम मदयितृतम । यद्वा मदोऽस्यास्तीति मदी अतिशयेन मदी मदिन्तमः । नाद्घस्येति नुट् । विश्वेभिः सर्वैरंशुभिः । ततः समर्थः सन् भव नः अस्माकम् सप्रथस्तमः सखा । सर्वतः प्रथयितृतमः सखा । वृधे । वर्द्धनाय ॥ ११४ ॥

हे मदिन्तम ! मदयति तर्पयतीति मदी ग्रहादित्वाण्णिनिप्रत्ययः ( पा० ३, १, १३४ ) । यद्वा मदस्तृप्तिरस्तीति मदी अत इनिठनाविति इन् अतिशयेन मदी मदिन्तमः नाद्घस्येति नान्तात्परस्य तमपो नुडागमः । ईदृश हे सोम ! विश्वेभिर्विश्वैः सर्वैरंशुभिः सूक्ष्मांशैः आप्यायस्व प्रवृद्धो भव वृद्धः सन्नोऽस्माकं वृधे वर्धनाय सखा सहायो भव द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । कीदृशस्त्वं सप्रथस्तमः अत्यन्तं सप्रथाः सकीर्तिः सप्रथस्तमः ॥ ११४ ॥

आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वाङ्कामया गिरा ॥ ११५ ॥

हौत्रम् । आ ते वत्सः । आग्नेय्यसितस्य गायत्र्यः । हे अग्ने आयमत् गृहीतवान् ते तव वत्सः पयोजीवनसामान्याद्यजमानो वत्स उक्तः । स हि पयोव्रतो भवति । मनः अन्तः करणम् परमा-

च्चित्सधस्थात् । चिच्छब्दोऽप्यर्थे । परमादपि सहस्थानात् आहृत्येति शेषः । सहस्थानदेवैः समानं स्थानं द्युलोकोऽग्नेः केन वत्सो मन आयमदित्यत आह । त्वाङ्कामया । त्वां स्तोतुङ्कामयमानया गिरा वाचा ॥ ११५ ॥

का (१७, ३, २०—२१) श्वेतेऽश्वे पुरस्तात्तिष्ठति श्वेताभावेऽश्वेतेऽश्वाभावेऽनड्ह्यग्निभ्यः प्रह्रियमाणेभ्योऽनुवाचयति । श्वेतवर्णेऽश्वेऽन्यवर्णे तदभावे वृषे वा तिष्ठति सति अग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति प्रेषितो होताऽऽते वत्स इति तृचमनुवक्तीति सूत्रार्थः ॥ आग्नेदेवत्यास्तिस्रो गायत्र्यः आद्यावत्सारदृष्टा द्वितीया विरूपदृष्टा तृतीया प्रजापतिदृष्टैव : हे अग्ने ! ते तव वत्सः पयोव्रतत्वाद्वत्ससमस्त्वात्प्रियो यजमानः परमाच्चित् चिदप्यर्थे उत्कृष्टादपि सधस्थात्सहस्थानात् द्युलोकात् मन आहृत्येति शेषः । आयमत् आयच्छति गृह्णाति मनोनिग्रहं करोतीत्यर्थः । इतश्च लोप इति इकारलोपे यमदिति रूपम् । इषुगमियमां छ इति छत्वाभावश्छान्दसः । कया गिरा वेदवाचा मन आहृत्येत्यर्थः । कीदृश्या गिरा त्वाङ्कामया त्वां कामयते स्तोतुमिच्छतीति त्वाङ्कामा तया अलुक् । देवैः सह तिष्ठति यस्मिन्नाग्नेः तत्सधस्थं द्युलोकः सध मादं इति (पा० ६, ३, ९६) सहस्य सधादेशः ॥ ११५ ॥

**तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥ ११६ ॥**

तुभ्यन्ताः । तुभ्यं हवींषि दत्वा यजमानैः ततोऽनन्तरम् ताः स्तुतयः हे अङ्गिरस्तम । अन्नं गिरतीत्यङ्गिरस्तमस्तस्य सम्बोधनं हे अङ्गिरस्तम । विश्वाः सर्वाः सुक्षितयः शोभननिवसनाः । स्थानकरणानुप्रदानवत्यो देवताः यथात्मयसन्तानचिन्तनगर्भा पृथक्नानाभूताः हे अग्ने कामय कामपरिपूरणार्थम् त्वय्येव येमिरे । कर्मणि लकारः । नियम्यन्ते । स्तुतयः ॥ ११६ ॥

हे अङ्गिरस्तम ! अन्यते जीव्यते येनेत्यन् अन्नम् अन् प्राणने क्विप् अन् अन्नं गिरति अत्तीत्यङ्गिराः अतिशयेनाङ्गिरा अङ्गिरस्तमः हे

अग्ने ! पृथक् नानाभूताः विश्वाः सर्वाः ताः प्रसिद्धाः स्तुतयः कामायाभिलाषपूरणाय तुभ्यं त्वयि येमिरे नियम्यन्ते यजमानैरिति शेषः कर्मणि लिट् । कीदृश्यः सुक्षितयः शोभनाः क्षितयो निवासा याभ्य स्ताः स्वर्गादिशुभस्थानप्रदा इत्यर्थः । यजमाना इह कामपूर्त्यै द्युलोकाप्त्यै च मन्त्रैस्त्वामेव स्तुवन्तीति भावः ॥ ११६ ॥

अ॒ग्निः प्रि॒येषु॒ धाम॑सु॒ कामो॑ भू॒तस्य॒ भव्य॑स्य । स॒म्राडेको॒ विरा॑जति ॥ ११७ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
द्वादशोऽध्यायः ॥ १२ ॥

अग्निः प्रियेषु । योऽग्निः प्रियेष्वभिरुचितेषु धामसु स्थानेष्ववस्थितानाम् कामः कामपूरकः सः भूतस्योत्पन्नस्य प्राणिजातस्य भव्यस्य भविष्यतश्च । सम्राट्सङ्गतराज्यभावः सन् एक एवासहायः विराजति । इष्टे अधिपतिः विविधन्दीप्यते ॥११७॥

इति उव्वटकृतौ मन्त्रभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

---

अग्निः प्रियेषु अभिरुचितेषु धामसु स्थानेषु धिष्ण्येषु एकोऽसहायभूतः सन् विराजति विशेषेण दीप्यते । कीदृशोऽग्निः भूतस्योत्पन्नस्य भव्यस्य भविष्यतश्च जनस्य कामः कामपूरकः सम्राट् सम्यग् राजमानः शोभमानः भूतस्य भव्यस्य सम्राडीश्वर इति वा । काम्यते सर्वैर्यष्टुमिष्यत इति काम इति वा ॥ ११७ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
रुक्मादिवाचनान्तोऽयं द्वादशोऽध्याय ईरितः ॥ १२ ॥

## त्रयोदशोऽध्यायः ।

---

**मयि॑ गृह्णाम्यग्रे॑ अ॒ग्निᳬ रा॒यस्पोषा॑य सुप्रजा॒स्त्वा-य॑ सु॒वीर्या॑य । माम॑ु दे॒वताः॑ सचन्ताम् ॥ १ ॥**

मयि गृह्णामीति यजमानो जपति । मयि गृह्णामि । आग्नेयी-ककुप् । मयि आत्मनि गृह्णामि अग्रे प्रथमम् । अग्निदर्शनेन । त-तोऽग्निश्चिनोमीति शेषः । किमर्थम् । रायस्पोषाय । धनपोषाय । सुप्रजास्त्वाय सुवीर्याय । वीर्यं शक्तिः । किञ्च । मामु देवताः सचन्ताम् । मामेव देवताः सेवन्ताम् अग्निमिव ॥ १ ॥

द्वादशेऽध्याये उखाधारणगार्हपत्यचयनक्षेत्रकर्षणौषधवपनादि-मन्त्रा उक्तास्त्रयोदशे पुष्करपर्णाद्युपधानमन्त्रा उच्यन्ते ॥ का० ( १७, ३, २७ ) उत्तरवेदिमपरेण तिष्ठन् यजमानो मयि गृह्णामीति जपति । उत्तरवेदेः पश्चात्तिष्ठन् यजमानो जुहोति ॥ अग्निदेवत्या ककुप् यस्या मध्यपादो द्वादशक आद्यतृतीयावष्टकौ सा ककुप् अत्र मध्य-श्चतुर्दशकस्तेन द्व्यधिका । अहं यजमानोऽग्रे प्रथमं मयि आत्मनि अग्निं गृह्णामि धारयामि ततोऽग्निं चिनोमीति शेषः । किमर्थं रायो धनस्य पोषाय पुष्ट्यर्थम् । सुप्रजास्त्वाय शोभना प्रजा यस्य स सुप्रजाः सुप्रजसो भावः सुप्रजस्त्वम् तस्मै दीर्घश्छान्दसः शोभन-पुत्रादिनिष्पत्त्यै । सुवीर्याय शोभनसामर्थ्याय वीर्यं शक्तिः । किञ्च उकारोऽप्यर्थे देवता अपि मां सचन्तां सेवन्तां सङ्गच्छन्ताम् उ एवार्थे वा देवता मामेव सचन्ताम् ॥ १ ॥

**अ॒पां पृ॒ष्ठम॑सि॒ योनि॑र॒ग्नेः स॑मु॒द्रम॒भितः॒ पिन्व॑मा-नम् । वर्ध॑मानो म॒हाँ२॥ आ च॒ पुष्क॑रे दि॒वो मात्र॑या वरि॒म्णा प्र॑थस्व ॥ २ ॥**

पुष्करपर्णमुपदधाति । अपां पृष्ठमसि । व्याख्यातम् ॥२॥

का० ( १७, ४, १ ) पुष्करपर्णमुपदधाति स्तम्बे दूर्ववत् । ततो-

ऽध्वर्युः कुशास्तम्बोपरि कमलिनीपत्रमुपदधाति पूर्ववदित्युखासम्भरणवत् तेनापां पृष्ठमिति मन्त्रेण पुष्कर इत्यन्तेनोपधानं दिवो मात्रयेति तस्य मार्जनमिति सूत्रार्थः । व्याख्यातः ॥ ( ११, २९ ) ॥ २ ॥

**ब्रह्म॑ जज्ञा॒नं प्र॑थ॒मं पु॒रस्ता॒द्वि सी॑म॒तः सु॒रुचो॑ वे॒न आ॑वः । स बु॒ध्न्या॒ उप॒मा अ॑स्य वि॒ष्ठाः स॒तश्च॒ योनि॒मस॑तश्च॒ वि॑वः ॥ ३ ॥**

रुक्ममुपदधाति । ब्रह्म जज्ञानम् त्रिष्टुप् आदित्यदेवत्या । ब्रह्मलक्षण आदित्यः जज्ञानं यजमानः प्रथमं पुरस्तात् प्राच्यान्दिशि जायते । ततोऽनन्तरम् वि सीमतः सुरुचो वेन आवः । व्यावः । व्यावृणोत् विवृतानकरोत् स्वप्रकाशेन । सीमतः मध्यतो मर्यादातः । सुरुचः सुरोचनानिमान् लोकान् । वेनः कान्तो मेधावी वा आदित्यः । स एव च । बुध्न्याः । बुध्नमन्तरिक्षं तत्र भवा दिशो बुध्न्याः । उपमाः । उपमीयन्ते आसु स्थितानि भूतानीत्युपमा दिशः । अस्य विष्ठाः । अस्य जगतः विविधं स्थानमिति विष्ठा दिशः । सतश्च योनिः । विद्यमानस्य च मूर्त्तस्य स्थानम् असतश्च अमूर्त्तस्य वाय्वादेः योनिम् । विवः विवृणोति आदित्य एव लोकान्दिशो भूतानि चाभिव्यनक्ति नान्य इति स्तूयते स्वकीयेन कर्मणा ॥ ३ ॥

का० ( १७, ३, २९ ) तस्मिन् रुक्ममधःपिण्डं ब्रह्म जज्ञानमिति। तस्मिन् पुष्करपर्णे पूर्वं कण्ठघृतं रुक्ममधःपिण्डमुपदधाति ॥ आदित्यदेवत्या त्रिष्टुप् । वीत्युपसर्ग आव इति क्रियापदेन सम्बध्यते व्यवहिताश्चेति पाणिनिस्मरणात् । ब्रह्म बृहत् रुक्मरूपोऽयमादित्यः सीमतः सीमानं मर्यादां भूगोलमध्यभागमारभ्य सुरुचः सुष्ठु रोचन्ते शोभन्ते तान् सुरोचनानिमान् लोकान् वि आवः विवृतानकरोत् स्वप्रकाशेन । कीदृशं ब्रह्म प्रथममादौ पुरस्तात् पूर्वस्यां दिशि जज्ञानं जायमानं दृश्यमानं जनेः शानचि शपः श्लौ सति जज्ञानमिति रूपम् । किञ्च वेनः कामनीयो मेधावी वा स आदित्यः

बुध्न्या बुध्नमन्तरिक्षं तत्र भवा बुध्न्या दिशः विवः विवृणोति । सतो विद्यमानस्य मूर्तस्य घटपटादेर्योनिं स्थानमसतोऽमूर्तस्य वाय्वादेश्च योनिं प्रभवं विवः प्रकाशयति वृणोतेः शपि लुप्ते लङि गुणे च व इति रूपमडभाव आर्षः बहुलं छन्दस्यमाङ्योगेऽपीति वचनात् । कीदृशीर्बुध्न्याः उपमाः उप समीपे मान्ति भूतानि यासु ता उपमाः सावकाशा इत्यर्थः । अत एवास्य जगतो विष्ठाः विविधस्थानभूताः विविधं तिष्ठन्ति यासु ताः अम्बाम्बगोभूमीत्यादिना षत्वम् । आदित्य एव लोकान् दिशो भूतानि चाभिव्यनक्तीत्यर्थः ॥ ३ ॥

**हि॒र॒ण्य॒ग॒र्भः सम॑वर्त्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑ आसीत् । स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ४ ॥**

पुरुषमुपदधाति । द्वाभ्यां त्रिष्टुब्भ्याम् स प्रजापतिः सोऽग्निः अधियज्ञं स यजमानः । हिरण्यगर्भः । यो हिरण्यगर्भाख्यः पुरुषः समवर्तताग्रे समभवदग्रे प्रथमम् शरीरी यश्च भूतस्योत्पन्नस्य प्राणिजातस्य जातः जातमात्रः सन् पतिरीश्वर एक एवासीत् अभूत् । स दाधार । तदः स्थाने यदो वृत्तिरर्थसंभवात् । यश्च दाधार धारयति । पृथिवीमन्तारिक्षमप्युच्यते । पृथिवीभूः वेयंभूरित्यादेरन्तारिक्षनामसु पठितत्वात् । द्यां द्युलोकं च । उत अपि इमां पृथिवीम् । तस्मै कस्मै काय इति प्राप्ते स्मै आदेशश्छान्दसः । प्रजापतये देवाय । हविषा विधेम हविर्दद्म इति विभक्तिव्यत्ययः ॥ ४ ॥

का० ( १७, ४, ३ ) उत्तानं प्राञ्चꣳ हिरण्यपुरुषं तस्मिन् हिरण्यगर्भ इति । तस्मिन् रुक्मे प्राञ्चमुत्तानं हिरण्यं पुरुषाकारमृग्द्वयेनोपदधाति ॥ हिरण्यगर्भदृष्टा प्रजापतिदेवत्या त्रिष्टुप् । हिरण्ये हिरण्यपुरुषरूपे ब्रह्माण्डे गर्भरूपेणावस्थितः प्रजापतिर्हिरण्यगर्भः भूतस्य प्राणिजातस्याग्रे समवर्त्तत प्राणिजातोत्पत्तेः पुरा स्व

यं शरीरधारी बभूव । स च जातः उत्पन्नमात्र एक एवोत्पत्स्यमानस्य सर्वस्य जगतः पतिरीश्वर आसीत् । स एव पृथिवीमन्तरिक्षं द्यां द्युलोकमुतापि चेमां भूमिं लोकत्रयं दाधार धारयति तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः । पृथिवीभूः स्वयम्भूरित्यन्तरिक्षनामसु ( निघ० १, ३ ) पठितत्वात् पृथिवीशब्देनान्तरिक्षलोकोऽत्रोच्यते । कस्मै काय प्रजापतये देवाय वयं हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः ॥ ४ ॥

**द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनिमनु यश्च पूर्वः । समानं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ ५ ॥**

द्रप्सश्चस्कन्द । अस्यामृच्यादित्यो यथा सर्वं बिभर्ति पालयति च तथोच्यते । य आहुतिपरिणामरसनिधानभूतो द्रप्स आदित्यः चस्कन्द पृथिवीम् उदकरूपेण पृथिवीं स्कन्दति मनुष्यादिधारणाय । यश्च द्युलोकमनुस्कन्दति आहुतिपरिणामभूतेन रसेन देवादिधारणाय । इमं च योनिमनुयश्च पूर्वः । यश्च इमं लोकं स्कन्दति आहुतिग्रहणाय । यश्च अनुस्कन्दति पूर्वयोनिममुं लोकं सुकथितान् तर्प्यणाय । तमेवं समानं योनिं स्थानम् अनुसञ्चरन्तं द्रप्समादित्यं जुहोमि स्थापयामि । अनुसप्तहोत्राः । सप्तस्वपि दिक्षु । असौ वा आदित्यो द्रप्सो दिशः सप्तहोत्रा अमुमादित्यं दिक्षु प्रतिष्ठापयन्तीति श्रुतिः । तिर्यक् चतस्रो दिशः अध एका उपर्येका मध्य एका एताः सप्त दिशः ॥ ५ ॥

देवश्रवोदृष्टादित्यदेवत्या त्रिष्टुप् । यः पूर्वः प्रथमो मुख्यो द्रप्स आदित्यः पृथिवीमन्तरिक्षमनुचस्कन्द अनुस्कन्दति गच्छति सिञ्चतीत्यर्थः मनुष्यादिधारणाय । द्यां द्युलोकं चानुसिञ्चति आहुतिपरिणामभूतेन रसेन देवादिधारणाय । य इमं योनिं स्थानं भूलोकमनुस्कन्दति आगच्छति आहुतिग्रहणाय । एवं समानं योनिं सर्वेषां तुल्यं स्थानं लोकत्रयमनु सञ्चरन्तं द्रप्समादि-

त्यं सप्त होत्रा अनु जुहोमि विभक्तिव्यत्ययः सप्तसु होत्रासु दिक्षु स्थापयामि हिरण्यपुरुषरूपेण सर्वदिक्षु सूर्य्यमेव स्थापयामीत्यर्थः । असौ वा आदित्यो द्रप्सो दिशः सप्त होत्रा अमुमादित्यं दिक्षु प्रतिष्ठामयतीति ( ७, ४, १, २० ) श्रुतेः । पूर्वादिचतस्रो दिशः अध एका उपर्येका मध्ये चैकेति सप्त दिशो ज्ञेयाः ॥ ५ ॥

**नमो॑ऽस्तु स॒र्पेभ्यो॒ ये के च॑ पृथि॒वीमनु॑ । ये अ॒न्तरि॑क्षे॒ ये दि॒वि तेभ्य॑ः स॒र्पेभ्यो॒ नम॑ः ॥ ६ ॥**

सर्पानामभिरुपातिष्ठते । नमोऽस्तु । तिस्रोऽनुष्टुभः सर्प्पदेवत्याः । लोका वा सर्पाः । नमस्कारोऽस्तु सर्पेभ्यः ये के च पृथिवीमनु । व्यवस्थिताः येचान्तरिक्षे ये च दिवि व्यवस्थिताः तेभ्यः सर्पेभ्यो नमस्कारोऽस्तु ॥ ६ ॥

का० ( १७ , ४, ६ ) उपतिष्ठते यजमानो मनोऽस्त्विति । यजमानो हिरण्यपुरुषं पश्यन्नृक्त्रयं पठेत् ॥ सर्पदेवत्यास्तिस्रोऽनुष्टुभः । ये के च ये केचित् सर्पन्ति सर्पा लोकाः पृथिवीमनुगताः तेभ्यः सर्पेभ्यो नमोऽस्तु नमस्कारो भवतु । अन्तरिक्षे लोके ये वर्त्तमानाः सर्पाः ये च दिवि द्युलोके ये वर्त्तमानाः सर्पास्तेभ्यः सर्पेभ्यो नमोऽस्तु । इमे वै लोकाः सर्पा इति ( ७. ४, १, २५ ) श्रुतेः सर्पशब्देन लोका उच्यन्ते ॥ ६ ॥

**या इष॑वो यातु॒धाना॑नां॒ ये वा॒ वन॒स्पती॒ँ१ ॥ रनु॑ । ये वा॑व॒टेषु॒ शेर॑ते॒ तेभ्य॑ः स॒र्पेभ्यो॒ नम॑ः ॥ ७ ॥**

या इषवः । यानि काण्डानि । यातुधानानाम् यातनां दुःखं येदधाति ते यातुधाना रक्षःप्रभृतयः । ये च वनस्पतीन् अनु व्यवस्थिताः ये च अवटेषु बिलेषु शेरते आसते तेभ्यः सर्पेभ्यो नमः ॥ ७ ॥

यातुं यातनां दुःखं दधाति ते यातुधाना रक्षःप्रभृतयस्तेषां याः सर्पजातय इषवो बाणरूपेण वर्त्तन्ते ये वान्ये वनस्पतीन् चन्दनादिवृक्षाननुवेष्ट्य स्थिताः ये वा ये चान्ये अवटेषु बिलेषु शेरते स्वपन्ति तेभ्यः सर्पेभ्यो नमोऽस्तु ॥ ७ ॥

ये वा॒मी रो॑च॒ने दि॒वो ये वा॒ सूर्य॑स्य र॒श्मिषु॑ ।
येषा॑म॒प्सु सद॑स्कृ॒तं तेभ्यः॑ स॒र्पेभ्यो॒ नमः॑ ॥ ८ ॥

ये वा । ये च अमी । प्रत्यक्षान्दूरतो निर्दिशति सर्प्पान् । रोचने दिवः । रोचनो ह नामैष लोको यत्रैष एतत्तपाति इति श्रुतिः । ये च सूर्यस्य रश्मिषु स्थिताः येषां च अप्सु सदः कृतम् उदके स्थानं कृतम् तेभ्यः सर्पेभ्यो नमः ॥ ८ ॥

दिवो द्युलोकस्य रोचने दीप्तस्थाने ये वामी सर्पा अस्माभिरदृश्यमानाः सन्ति रोचनो ह नामैष लोको यत्रैष एतत्तपतीति श्रुतिः। तथा सूर्य्यस्य रश्मिषु किरणेषु ये च सर्पा वसन्ति । येषां सर्पाणामप्सु जलेषु सदः स्थानं कृतं तेभ्यः सर्पेभ्यो नमोऽस्तु ॥ ८ ॥

कृ॒णु॒ष्व पाजः॑ प्रसि॑तिं॒ न पृ॒थ्वीं या॒हि राजे॒वाम॑वाँ २॥ इभे॑न । तृ॒ष्वीमनु॒ प्रसि॑तिं द्रूणा॒नोऽस्ता॑सि॒ विध्य॑ र॒क्षस॒स्तपि॑ष्ठैः ॥ ९ ॥

जुहोति । कृणुष्व पाजः । पञ्च त्रिष्टुभ आग्नेय्यो रक्षोघ्न्यः । हे अग्ने कृणुष्व पाजः। पाज इति बलनामसु पठितम् । कुरुष्व बलम् प्रासितिन्न पृथ्वीम् प्रासितिः प्रसयनात्तन्तुर्वा जालं वा । नकार उपमार्थीयः । उपरिष्टादुपचारः अथ कोऽर्थः । कुरुष्व बलं वागुरामिव पृथिवी। यद्वा जलमिव पृथिवी। ततो याहि राजेव । अमवान् अमात्यवान् भूत्वा । अभ्यवनवान् वा अभ्यमनं शत्रूणां भयादप्रतिपक्षकरणम् । गृहवान्वा भूत्वा । शत्रून् प्रति याहि । इभेन इभमयेन बलेन । यद्वा । इभेन हस्तिना । गत्वाज । तृष्वीमनुप्रासितिन्द्रूणानः । तृष्व्या प्रासित्येति विभक्तिव्यत्ययः । द्रूणान इति हिंसाकर्मा । यतश्च त्वं तृष्व्या क्षिप्रया प्रसित्या तन्तुना जालेन वा । द्रूणानो हिंसन् अस्ता असि क्षेप्ता असि विकटः कृतास्त्रोऽसि अतोऽब्रवीमि । विध्य । ताडय ।

चित्तमुपैतीति पूर्वचित्तिः । एते दिगुपदिग्रूपे अप्सरसौ ॥ स्फूर्जो वज्रनिर्घोषे अवस्फूर्जतीत्यवस्फूर्जन् भयहेतुशब्दं कुर्वन् हेतिः । विद्युच्चपला प्रहेतिः ॥ शिष्टं व्याख्यातम् ॥ १९ ॥

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ॥ अपाᳬं रेताᳬंसि जिन्वति ॥ २० ॥

छन्दस्या उपधाति । अग्निर्मूर्धा । आग्नेयं प्राक् तपश्च तपस्यश्चेत्यतः । प्रथमः त्र्यचो गायत्रः । प्रथमा व्याख्याता ॥२०॥

का० ( १७, १२, ५ ) छन्दस्यास्तिस्रोऽनूकान्तेषु पुरस्ताद् गायत्रीरग्निर्मूर्धेति प्रत्यृचम् । वक्ष्यमाणा गायत्र्याद्याश्छन्दस्या एकैकास्मिन् स्थाने तिस्र उपदधाति तासां मध्यमा पद्यानूके तामभितो द्वे अर्द्धपद्ये अत्र पूर्वदिश्यनूकान्ते तिस्रो गायत्रीरग्निमर्धेति प्रत्यृचम् एवं वक्ष्यमाणा अपीति सूत्रार्थः ॥ तिस्र ऋचोऽग्निदेवत्या गायत्र्यः । आद्या व्याख्याता ( ३ अध्या० १२ ॥ क० ) ॥ २० ॥

अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् ॥ २१ ॥

अयमग्निः । ऋषिरभिनयेन दर्शयति । अयमग्निः सहस्रिणः । सहस्राणि बहूनि यस्य विद्यन्ते तस्य । वाजस्यान्नस्य शतिनश्च पतिरधिपतिः । मूर्द्धा च रयीणाम् । प्रधानभूतश्च धनानाम् । अग्निर्हि सर्वेषां धनानां प्रधानं दृष्टादृष्टसाधनं हि । कविः क्रान्तदर्शनश्च अतः स्तुमः ॥ २१ ॥

अयमग्निरीदृशस्तं स्तुम इति शेषः । कीदृशः सहस्रं संख्या अस्यास्तीति सहस्री तस्य । शतिनः शतसंख्यावतो वाजस्यान्नस्य पतिः स्वामी अनेकान्नप्रद इत्यर्थः । तथा रयीणां धनानां मूर्धा शिरोवदुत्तमः अग्निर्हि सर्वधनानां प्रधानधनं दृष्टादृष्टसाधनत्वात् कविः क्रान्तदर्शनः ॥ २१ ॥

त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥ २२ ॥

त्वामग्ने पुष्करात्। व्याख्यातम् ॥ २२ ॥

व्याख्यातैकादशे द्वात्रिंशत्तमकण्डिकायाम् ॥ २२ ॥

**भुवो॑ य॒ज्ञस्य॒ रज॑सश्च ने॒ता यत्रा॑ नि॒युद्भिः॒ सच॑से शि॒वाभिः॑। दि॒वि मू॒र्धानं॑ दधिषे स्व॒र्षां जि॒ह्वाम॑ग्ने चकृषे हव्य॒वाह॑म् ॥ २३ ॥**

भुवो यज्ञस्य। त्रैष्टुभस्त्र्यचः। प्रथमा व्याख्याता ॥२३॥

का० (१७, १२, ७) पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्येति। पूर्वदिशि रेतःसिग्वेलायां त्रिष्टुप्संज्ञा इष्टका उपदधाति तृचेन तिस्रः त्रिष्टुप्छन्दस्काभिर्ऋग्भिरुपधेया इष्टकास्त्रिष्टुभः एवमग्रेऽपि तिस्रस्त्रिष्टुभ आग्नेय्यः। प्रथमा व्याख्याता त्रयोदशेऽध्याये (१३, १५) ॥ २३ ॥

**अबो॑ध्य॒ग्निः स॒मिधा॒ जना॑नां॒ प्रति॑ धे॒नुमि॑वाय॒तीमु॒षास॑म्। य॒ह्वा इ॑व॒ प्र व॒यामु॒ज्जिहा॑नाः॒ प्र भा॒नवः॑ सिस्रते॒ नाक॒मच्छ॑ ॥ २४ ॥**

अबोध्यग्निः। योऽयमग्निः। अबोधि प्रतिबुध्यते कर्माणि स्वमधिकारम्। समिधा समिन्धनेन। जनानामग्निहोत्रीणां सत्यातिथिज्ञानश्रद्धासंपन्नानाम्। कथमिव प्रतिबुध्यते। धेनुमिवायतीम् यथा धेनुमागच्छन्तीं वत्सः प्रतिबुध्यते। यथा च उषसमागच्छन्तीं मनुष्याः प्रतिबुध्यन्ते। तस्याहुतिभिर्दीप्तस्य यह्वा इव प्र वयामुज्जिहानाः यह्व इति महतो नामधेयम्। यथा महान्तो जातपक्षाः पक्षिणः वयां वृक्षशाखामुज्जिहानाः परित्यजन्तः ऊर्ध्वङ्गच्छेयुः। एवम्। प्रभानवः सिस्रते। प्रसिस्रते प्रसर्पन्ति भानवः अर्चींषि महान्ति। नाकमच्छ। अच्छाभेराप्तुमिति शाकपूणिः। स्वर्गलोकमभि ॥ २४ ॥

जनानां ज्ञानश्रद्धाद्विजतर्पणशत्यादिसम्पन्नामनामग्निहोत्रिणां समि-

धा समिन्धनेनाग्निः प्रत्यबोधि प्रतिबुध्यते कर्मणि स्वमधिकारं जानातीत्यर्थः । दीपजनेत्यादिना ( पा० ३, १, ६९ ) लुङि कर्तरि चिण् । तत्र दृष्टान्तः । आयतीमागच्छन्तीं धेनुं यथा वत्सः प्रतिबुध्यते यथा चोषसमागच्छन्तीं प्रति मनुष्याः प्रतिबुध्यन्ते ॥ दीप्तस्य तस्याग्ने र्भानवो रश्मयो नाकमच्छ स्वर्गमभितः प्रसिस्रते प्रसरन्ति- अच्छाभेराप्तुमिति शाकपूणिः ( निरु० ५, २८ )। दृष्टान्तमाह । यह्व इति महन्नाम ( निघ० ३, ३, १३ ) । यह्वाः महान्तो जातपक्षाः पक्षिणो वयां वृक्षशाखां प्रोज्जिहानाः प्रोद्गच्छन्तो नाकमाकाशं प्रति प्रसरन्ति तद्वत् ॥ ऋचोऽर्थान्तरं वा । जनानामृत्विजां सम्बन्धिन्या समिधाग्निरबोधि प्रतिबोधितः प्रज्वलितः आयतीमुषसं प्रातःकालं प्रति धेनुं यथा प्रतिबोधयन्ति उत्थापयन्ति तस्य भानवः प्रोज्जिहाना नाकमभि प्रसिस्रते । दृष्टान्तः । वयां पक्षिणां मध्ये यह्वाः महान्तः पक्षिणो यथा प्रोद्गच्छन्तः प्रसरन्ति । विः पक्षी तस्यामि छान्दसे गुणे वयामिति रूपम् । एकः प्रशब्दः उज्जिहाना इत्यत्र सम्बध्यते द्वितीयः सिस्रते इत्यत्र । सृ गतौ ह्वादिः लट् । ओहाङ् गतौ शानच् जिहानाः । उषासमिति संहितायां दीर्घः ॥ २४ ॥

अवो॑चाम क॒वये॒ मेध्या॑य॒ वचो॑ व॒न्दारु॑ वृष॒भाय॒ वृष्णे॑ । गवि॑ष्ठिरो॒ नम॑सा॒ स्तोम॑म॒ग्नौ दि॒वीव॑ रु॒क्मम्- उ॒रु॒व्यञ्च॑मश्रेत् ॥ २५ ॥

अवोचाम । उद्गातारो ब्रुवन्ति । अवोचाम उक्तवन्तो वयम् । कवये क्रान्तदर्शनाय । मेध्याय याज्ञियाय । वचः स्तुतिलक्षणं वाक्यम् । वन्दारु वन्दनशीलम् । वृषभाय वर्षित्रे । आहुतिपरिणामाभिप्रायमेतत् । वृष्णे सेक्त्रे यूने परिणामरहिताय । इदानीम् । गविष्ठिरः होता गवि वाचि स्थिरोऽप्रच्याव्यः । तस्य हि अग्निरधिष्ठात्री देवता । नमसान्नेन संयुक्तं स्तोमं स्तुतिः । अग्नौ आहवनीयाख्ये । अश्रेत् आसञ्जयिष्यति अग्निसम्बद्धं करिष्यते । कथमिव । दिवीव रुक्मम् । यथा द्यु-

लोके रुक्मं रोचनमादित्यम् । उरुव्यञ्चम् । बहुभिः स्तुतिभक्तिभिर्युक्तम् । स्वरसौष्ठवादि युक्तम् । स्तोम आदित्येनोपमीयते ॥ २५ ॥

उद्गातारो वदन्ति । वयं कवये क्रान्तदर्शिनेऽग्नये वचोऽवोचाम स्तुतिरूपं वाक्यमुक्तवन्तः । कीदृशाय कवये । मेध्याय मेधे यज्ञे योग्याय । वृषभाय श्रेष्ठाय कामानां वर्षयित्रे । वृष्णे सेक्त्रे यूने परिणामरहिताय । कीदृशं वचः वन्दारु वन्दनशीलं स्तुतितत्परम् । शृवन्द्योरारुः ( पा० ३, २, १७३ ] इदानीं गविष्ठिरः गवि वाचि स्थिरोऽप्रच्याव्यो होता नमसान्नेन युतं स्तोमं स्तुतिमग्नौ आहवनीये अश्रेत् । अन्तर्भूतण्यर्थः श्रयतिः लङ् लडर्थे छन्दसि लुङ्लङ्लिट इति वचनात् बहुलं छन्दसीति ( पा० २, ४, ७३ ) शपो लुक् गुणः । होताग्नौ स्तोममापयिष्यति आसञ्जयिष्यति याज्यानुवाक्याभिरन्नमग्निसम्बद्धं करिष्यतीत्यर्थः । तत्र दृष्टान्तः । दिवीव रुक्ममुत्प्रेक्षते दिवि द्युलोके रुक्मं रोचमानमादित्यम् । सन्ध्यावन्दनसूर्योपस्थानादिषु विप्रयुक्ताः उरवो बहवो व्यञ्चाः स्तुतयो गतयो वा यस्येति तमिवेत्युत्प्रेक्षा । स्तोमः सूर्येणोपमीयते । गवियुधिभ्यां स्थिर इति षत्वम् ॥ २५ ॥

**अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे-विशे ॥ २६ ॥**

अयमिह । जागतस्त्र्यृचः । प्रथमा व्याख्याता ॥ २६ ॥

का० ( १७, १२, ८ ) जगतीश्च पश्चादयमिहेति । तिसृभिः पश्चाद्रेतः सिग्वेलायां तिस्रो जगतीसञ्ज्ञेष्टका दक्षिणामुख उपदधातीति सूत्रार्थः ॥ तिस्रो जगत्य आग्नेय्यः । आद्या व्याख्याता ( ३ अध्या० १५ क० ) ॥ २६ ॥

**जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे । घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः ॥ २७ ॥**

जनस्य गोपाः । योऽयं जनस्य यजमानस्य गोपाः गोपायिता अजनिष्ट जातः जागृविः जागरणशीलः अक्लिष्टज्ञानः अग्निः । सुदक्षः शोभनोत्साहः । सुविताय नव्यसे । सुप्रभूताय । कर्मणे नवतराय । सः घृतप्रतीकः घृतमुखः । बृहता महता भानुना । दिविस्पृशा । दिविस्पृशतीति ' दिविस्पृक् तेन दिविस्पृशा । द्युमद्विभाति । द्युतिमद्विविधं दीप्यते । भरतेभ्यः ऋत्विग्भ्योऽर्थाय । शुचिः । बहून्यपि हवींषि भक्षन्नुच्छिष्टो न भवति । शोधको वा । यद्वा । योऽसौ यजमानस्य गोपायिता अजनिष्ट भरतेभ्यः ऋषिभ्यः सकाशात् । ऋत्विग्यजमानेभ्यो वा । जागृविः अग्निः सुदक्षः सुप्रभूताय कर्मणे नवतराय । सोऽयं घृतमुखो महता भानुना दिविस्पृशा । द्युतिमद्विभाति । शुचिः शोचते ज्वलति कर्मणः । यद्वा । मनुष्येभ्यो विजायमानो मनुष्यसम्बद्धैर्दोषैर्न लिप्यते ॥ २७ ॥

योऽग्निर्भरतेभ्यः ऋत्विग्भ्यः सकाशादजनिष्ट जातः तैर्मथितत्वात्तेभ्यो जात इत्युच्यते । भरता इति ऋत्विङ्नामसु पठितम् ( निघ० ३, १८, १ ) । किमर्थं जातः । नव्यसे नवीयसे नवतराय सुविताय सूताय प्रसूताय कर्मणे यागाय सूतेरिडागम आर्षः अभिनवं नवीयस्तस्मै ईलोप आर्षः । सोऽग्निर्दिविस्पृशा द्युलोकस्पर्शिना बृहता ज्वालासमूहेन द्युमत् कान्तिमद्यथा तथा विभाति विविधं दीप्यते । कीदृशोऽग्निः । जनस्य यजमानस्य गोपाः । गोपायति रक्षतीति गोपाः क्विप् लोपो व्योर्वलि यलोपः । जागृविः जागरणशीलः कर्मणि सावधानः । सुदक्षः शोभनो दक्ष उत्साहो यस्य अतिकुशलो वा । घृतप्रतीकः घृतं प्रतीके मुखे यस्य । शुचिः शुद्धः बहूनि हवींषि भक्षयन्नपि उच्छिष्टो न स्यात् शोधको वा ॥ २७ ॥

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने । स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥ २८ ॥

त्वामग्ने । यं त्वाम् । हे अग्ने अङ्गिरसः ऋषयः । गुहाहितं निगूढे प्रदेशेऽवस्थितम् । अप्सु अग्निर्देवेभ्य उदक्रामत्सोऽपः प्राविशदित्येवमादि अभिधानमस्य मन्त्रस्य । अन्वविन्दन् लब्धवन्तः । पुनरपि नष्टं सन्तम् । शिश्रियाणं वने वने अवस्थितम् । ओषधिवनस्पतिषु । अन्वविन्दन्नङ्गिरस इति वर्तते स त्वमिदानीमपि जायसे अरणिकाष्ठेभ्यो मथ्यमानः । सहो महत् । सहसा बलेन महता इति विभक्तिव्यत्ययः । अतश्च कारणात् त्वाम् आहुः ऋषयः सहसः पुत्रम् । बलस्य पुत्रम् । अङ्गिरः । अङ्गिर इत्यग्नेः सम्बोधनम् । हे अङ्गिरः ॥ २८ ॥

हे अग्ने ! अङ्गिरसः अङ्गिरोवंशोद्भवा ऋषयस्त्वामन्वविन्दन् लेभिरे अन्विष्य प्रापुरित्यर्थः । किम्भूतं त्वां गुहा गुहायां निगूढे प्रदेशे हितं स्थितमप्सु प्रविष्टमित्यर्थः । अग्निर्देवेभ्य उदक्रामत्सोऽप आविशादित्यादि श्रुतेः । सुपां सुलुगिति गुहाशब्दात्सप्तमीलोपः । हे अग्ने ! पुनर्नष्टं त्वां वने वने शिश्रियाणं नानावनस्पतिषु श्रितमाङ्गिरसोऽन्वविन्दन् । नित्यवीप्सयोरिति वनेपदस्य द्वित्वम् । श्रयतेः शानचि बहुलं छन्दसीति ( पा० २, ४, ७६ ) शपः श्लुः द्वित्वं च । यं त्वामाङ्गिरसोऽलभन्त स त्वं जायसेऽधुनाप्यरणिभ्य उत्पद्यसे । कीदृशः । महत्सहः महता बहुना सहसा बलेन मथ्यमानः । महत्सहः शब्दाभ्यां तृतीयालोपः । मथ्यमानो जायस इत्यर्थः । हे अङ्गिरः ! अग्ने ! अत एव सहसो बलस्य पुत्रं त्वामाहुः वदन्ति मुनयः बलेन मन्थनाज्जायमानत्वाद् बलपुत्रं वदन्तीत्यर्थः॥२८॥

**सखा॑यः॒ सं वः॑ स॒म्यञ्च॒मिष॒ꣳस्तोमं॑ चा॒ग्नये॑ । वर्षि॑ष्ठाय क्षिती॒नामू॒र्जो नप्त्रे॒ सह॑स्वते ॥ २९ ॥**

सखायः सम् । आनुष्टुभः त्र्यृचः । यजमान ऋत्विजः सम्बोधयाति । हे सखायः सङ्गत्य शृणुत वः युष्मान् ब्रवीमि । सम्यञ्चम् । सङ्गतम् । एकीभूतम् । इषम् । हविर्लक्षणमन्नम् । स्तोमं च त्रिवृत्पञ्चदशादि । अग्नये भरत । कथं भूतायाग्नये ।

वर्षिष्ठाय क्षितीनाम् । पृथुतमाय मनुष्याणाम् । ऊर्ज्जो नप्त्रे । अपां पौत्राय । अद्भ्य ओषधि वनस्पतयो जायन्ते ताभ्यः अ-ग्निः । सहस्वते बलवते ॥ २९ ॥

का० ( १७, १२, ९ अपरास्ताभ्योऽनुष्टुभः सखायः सामिति । जगतीभ्योऽपरास्तिस्रोऽनुष्टुप्संज्ञेष्टकाः प्राङ्मुख उपदधाति स-खाय इत्यृक्त्रयेणेति सूत्रार्थः ॥ तिस्रोऽनुष्टुभः । ऋत्विजः प्रति य-जमानो ब्रूते हे सखायः ! ऋत्विजः सम्यञ्चं समीचीनमिषं हवि-र्लक्षणमन्नं समीचीनं स्तोमं चाग्नये वः यूयं सम्पादयत अभ्यर्थं हविः कुरुत त्रिवृत्पञ्चदशादिस्तोमं च वदतेत्यर्थः । व्यत्ययेन प्र-थमास्थाने द्वितीयाबहुवचनं कृत्वा वसादेशो व इति । सामित्युप-सर्गस्यापेक्षितः क्रियाशेषोऽध्याहर्तव्यः । कीदृशायाग्नये क्षितीनां मनुष्यणां वर्षिष्ठाय श्रेष्ठाय वृद्धतमाय । प्रियस्थिरेत्यादिना वृद्धस्य वर्षादेश इष्ठनि । क्षियन्ति निवसन्ति भूमाविति क्षितयो नराः क-र्तरि क्तिन् । सर्वपूज्यायेत्यर्थः । तथा ऊर्जो जलस्य नप्त्रे पौत्राय । अद्भ्यो वनस्पतयो जायन्ते तेभ्योऽग्निरित्यपां पौत्रोऽग्निः । तथा सहस्वते बलवते सहो बलमस्यास्तीति ॥ २९ ॥

**सᳬसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्प-देसमिध्यसे स नो वसून्याभर ॥ ३० ॥**

सᳬसमित् । समुपोदः पादपूरण इत्युपसर्गाभ्यासः । इदिति पादपूरणः । युवस इति विकरणव्यत्ययः । यस्त्वम् । संयोषि सङ्गमयासि हे वृषन् वर्षितः अग्ने । विश्वानि वसूनि । अर्य्य ईश्वरः सन् आलोच्यालोच्य । यजमानानाम् इडायाश्च पदे कर्दमार्थं सामिध्यसे । यद्वा । इडायाः पृथिव्याः पदे उत्तर-वेदौ संदीप्यसे । स नः अस्मभ्यम् वसूनि धनानि आभर आभर आहर देहि ॥ ३० ॥

हे वृषन् ! वर्षितः सेक्तः ! हे अग्ने ! अर्य्यः स्वामी त्वं विश्वा-नि सर्वाणि फलानि आ समन्तात्सं युवसे संयौषि यजमानेन स-

ङ्गमयसि । यौत्रेर्विकरणपदव्यत्ययः । अर्य्यः स्वामिवैश्ययोरिति निपातः । इडः इडायाः गोः पृथिव्या वा पदे स्थाने उत्तरवेद्यां समिध्यसे कर्मार्थं दीप्यसे स ईदृशस्त्वं नोऽस्मभ्यं वसूनि धनानि आभर आहर देहीत्यर्थः हरतेर्भकारः ॥ ३० ॥

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे ॥ ३१ ॥

त्वां चित्रश्रवस्तम । हे अग्ने चित्रश्रवस्तम । चित्रं नानारूपं श्रवो धनमतिशयेन यस्य स चित्रश्रवस्तमः तस्य सम्बोधनम् । हे चित्रश्रवस्तम । त्वां हवन्ते त्वामाह्वयन्ति । विक्षु मनुष्येषु मध्ये व्यवस्थितम् जन्तवो मनुष्याः । कथम्भूतम् शोचिष्केशम् शोचन्ति दीप्यन्ते ज्वालाः केशसंस्थानीयाः अस्येति शोचिष्केशः । हे पुरुप्रिय । बहवो यजमानाः प्रिया अस्य । बहूनां यजमानानां वा प्रियः । बहु वा हविः प्रियमस्येति समासविशेषाः । तस्य सम्बोधनं हे पुरुप्रिय । किमर्थमाह्वयन्ति। हव्याय वोढवे । हवींषि वोढुम् परिणामः ॥ ३१ ॥

चित्रं नानाविधं श्रवो धनं कीर्तिर्वा यस्य स चित्रश्रवाः अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमस्तत्सम्बुद्धिः । हे पुरुप्रिय ! पुरूणां बहूनां यजमानानां प्रियः यद्वा पुरवः प्रिया यस्य पुरु बहु हविः प्रियं यस्येति वा हे पुरुप्रिय ! हे अग्ने ! विक्षु प्रजासु ऋत्विग्यजमानाः त्वां हवन्ते आह्वयन्ति । ह्वेञ् आह्वाने ह्वः सम्प्रसारणमिति शपि सम्प्रसारणं गुणश्च । किं कर्तुम् । हव्याय वोढवे । विभक्तिव्यत्ययः । हव्यं वोढुं प्राप्तुम् । तुमर्थे सेसेनिति तुमर्थे तवेप्रत्ययः ॥ ३१ ॥

एना वो अग्निं नमसोर्जो नपातमाहुवे । प्रियं चेतिष्ठमरतिꣳस्वध्वरं विश्वस्य दूतममृतम् ॥ ३२ ॥

विश्वस्य दूतममृतं विश्वस्य दूतममृतम् । स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः ॥ ३३ ॥

**स दुद्रवत् स्वाहुतः स दुद्रवत् स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानाम् ॥३४॥**

एना वः । प्रगाथोऽयम् । तत्र बृहती पूर्वा सती बृहत्युत्तरा । तत्र प्रगथनधर्मेण तिस्रो बृहत्यः सम्पादिताः द्वयोस्तु व्याख्यानम् नहि शास्त्रे व्यूढानां मन्त्राणामर्थान्तरं विद्यत इति तथा च आ त्वा जिघर्मीति श्रुतिव्यतिषिक्ताभ्यां होममुक्त्वा प्रगुणाभ्यामेव व्याख्यानं करोति अतः प्रगुणो व्याख्यायते । एना अनेन नमसा अन्नेन । व इति पादपूरणार्थः सम्भवात् । अग्निम् ऊर्जो नपातम् अपाम्पौत्रम् आहुवे आह्वयामि । सर्वजनप्रियम् ! चेतिष्ठम् । आहुतिशयेन चेतनायुक्तम् । अरतिम् अलंमतिं पर्य्याप्तमतिम् । स्वध्वरम् शोभना यज्ञा अस्य विद्यन्त इति स्वध्वरः । विश्वस्य सर्वस्य यजमानजनस्य दूतम् । अमृतम् अमरणधर्माणम् ॥ ३२ ॥

स योजते । स एवाग्निः योजते युनक्ति । अरुषा अक्रोधनावश्वौ रथो । विश्वभोजसा सर्वस्य भोक्तारौ । द्वितीया द्विवचनस्य स्थाने द्वयोः प्रातिपदिकयोराकारः । स एव च दुद्रवत् द्रवति गच्छति । स्वाहुतः शोभनप्रकारेण हुतः सन् ॥३३॥

क्क गच्छतीत्यत आह । यत्र सुब्रह्मा यज्ञः । सुब्रह्मग्रहणं सर्वर्त्विगुपलक्षणार्थम् । शोभनर्त्विग्यज्ञः । सुशमी च । शमीति कर्मनाम । शोभनानि कर्माणि यस्मिन्यज्ञे स सुशमी । वसूनांदेवम् । वसूनां रुद्राणामादित्यानां देवानां यस्मिन्यज्ञे क्लृप्तानि सवनानि । एवमध्याहारेण विभक्तिव्यत्ययेन च वाक्यसामञ्जस्यम् । राधो जनानाम् राधो धनञ्च यत्र जनानामुपक्लृप्तम् तत्र स योजत इति संबन्धः ॥ ३४ ॥

का० ( १७, १२, १० ) आप ह्वेलायाः पुरस्ताद् बृहतीरेना व

इति । आषाढवेलायाः पुरस्तात्तिस्रो बृहतीष्टका एना व इति तिसृभिरुपदधातीत्यर्थः ॥ तिस्रो बृहत्यः प्रगाथः ऋग्द्वयग्रन्थनेन ऋक्त्रयसम्पादनं प्रगाथः तत्र बृहतीसतोबृहतीभ्यां तिस्रो बृहत्यः कृताः यस्यास्तृतीयो द्वादशाक्षरोऽन्ये त्रयोऽष्टार्णाः सा बृहती एना वोऽग्निं नमसोर्जो नपातमाहुवे । प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतमिति ॥ यस्याः प्रथमद्वितीयौ द्वादशार्णौ तृतीयतुर्यावष्टार्णौ सा सतोबृहती स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः । सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानामिति ॥ तत्र बृहत्यास्तुरीयं पादं द्विरावर्त्य सतोबृहत्याः पूर्वार्धेन सह द्वितीया बृहती कृता सतोबृहत्या द्वितीयपादं द्विरावर्त्य तस्या एवोत्तरार्धेन सह तृतीया बृहती कृता एवं तिस्रो बृहत्यः संहितायां पठिताः तत्रावर्तितपादानामर्थान्तराभावाद् द्वे ऋचौ व्याख्यायेते ॥ एना वः । विभक्तेराकारः । हे ऋत्विग्यजमानाः ! वो युष्माकं सम्बन्धिना एना एनेन नमसान्नेन हाविर्लक्षणेनाग्निमहमाहुवे आह्वयामि । वो युष्माकमेनमग्निं नमसाहुव इति वा । कीदृशमग्निमूर्जो नपातमपां पौत्रम् प्रियं यजमानानां प्रीतिहेतुम् चेतिष्ठमतिशयेन चेतयितारम् तुरिष्ठेमेयःस्विति इष्ठनि परे तृचो लोपः । अरतिमलमतिं पर्याप्तमतिं यद्वा रतिरुपरमस्तद्रहितम् सदोद्यमयुतमित्यर्थः । स्वध्वरं शोभना अध्वरा यज्ञा यस्य तम् । विश्वस्य दूतं सर्वस्य यजमानजनस्य सर्वस्य जगतो वा दूतवत्कार्यकारिणम् सर्वस्य हि गृहे दाहपाकादिकार्यकरत्वात् । अमृतं मरणरहितम् ॥ अथ सतोबृहती व्याख्यायते । स योजते । यमग्निमाह्वयामि सोऽग्निः अरुषा अरुषौ रोषरहितौ साधू विश्वभोजसा विश्वं भुञ्जते तौ विश्वभोजसौ सर्वस्य भोक्तारौ द्वितीयाद्विवचनस्थाने आकारः भुजेरसुन् एवं विधावश्वौ रथे योजते युनक्ति विशेषणाभ्यां विशेष्यमश्वपदं रथपदं चाध्याहार्यम् । स एवाग्निः रथारूढः सन् स्वाहुतः शोभनप्रकारेणाहुतः सन् दुद्रवत् द्रवति गच्छति द्रु गतौ णिश्रिद्रुस्रुभ्य इति लुङि चङ् द्वित्वम् अडभावगुणाभावावार्षौ । कुत्र गच्छतीत्यत आह सुब्रह्मेति वसूनामिति वसुशब्दो रुद्रादित्ययोरुपलक्षकः वसूनां रुद्राणामादित्यानां सवनत्रयदेवानां यत्र यज्ञः यत्र च जनानां

यजमानानां देवं दीप्यमानं राधो धनं हविर्लक्षणं चास्ति तत्राग्निर्गच्छतीति । सुब्रह्मा ब्रह्मपदं सर्वर्त्विगुपलक्षणं शोभनो ब्रह्मा ऋत्विग्यत्र शुभर्त्विग्युक्तः । सुशमी शमीति कर्मनाम ( निघ० २, १, २३ ) । शोभनानि कर्माणि यत्रेति सुशमी शोभनकर्मवान् । अग्निराहुतो रथेऽश्वान्नियुज्य यज्ञे हविर्भोक्तुमश्वा गच्छन्तीति सर्वार्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥

**अग्ने॒ वाज॑स्य॒ गोम॑त॒ ईशा॑नः सहसो यहो । अ॒स्मे धे॑हि जातवेदो॒ महि॒ श्रवः॑ ॥ ३५ ॥**

अग्ने वाजस्य । औष्णिहः त्र्यृचः । हे अग्ने यस्त्वं वाजस्यान्नस्य गोमतः । गोभिः संयुक्तस्य ईशानः ईश्वरः । हे सहसो यहो बलस्य पुत्र । सह इति बलनाम । यहुरिति पुत्रस्य नाम । मथ्यमानो जायते तस्मादेवमाह सहसस्पुत्रमित्यादि । स त्वम् अस्मे धेहि । अस्मभ्यं देहि । हे जातवेदः । महि महत् श्रवोऽन्नलक्षणम् धनं गोभिः संयुक्तम् ॥ ३५ ॥

का० ( १७, १२, १३ ) अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति । गायत्रीभ्योऽपरास्तिस्र उष्णिक्संज्ञा इष्टका अग्न इति ऋक्त्रयेणोपदधातीति सूत्रार्थः ॥ तिस्र उष्णिहः हे अग्ने ! हे सहसो ! यहो बलस्य पुत्र ! सह इति बलनाम ( निघ० २, ९, १७ ) । यहुरिति पुत्रनाम ( निघ० २, २, ११ ) मन्थनाज्जायमानत्वाद्बलस्य पुत्रत्वम् सहस्पुत्रमित्युक्तं च । हे जातवदः उत्पन्नज्ञान ! अस्मे अस्मभ्यं महि महत् श्रवः धनं धेहि देहि । कीदृशस्त्वं गोमतः धेनुयुक्तस्य वाजस्यान्नस्येशानः ईश्वरः अत एव धनं गाश्च देहीत्यर्थः ॥ ३५ ॥

**स इ॑धा॒नो वसु॑ष्क॒विर॒ग्निरी॒डेन्यो॑ गि॒रा । रे॒वद॒स्मभ्यं॑ पुर्वणीक दीदिहि ॥ ३६ ॥**

स इधानः । स उक्तगुणः इधानो दीप्यमानः । वसुः । उपकारभूतः वासयिता वा । कविः । मेधावी । अग्निः । इडेन्यः स्तुत्यः । गिरा वाचा त्रयीलक्षणया । तत्रार्थवादः प्रत्य-

क्षकृतः ततो भिन्नं वाक्यं नेयम् । रेवत् धनवत् । अस्मभ्यम् अस्मदर्थम् । हे पुर्वनीक । बहुमुख । अनीकं मुखम् पुरु बहुनाम । यतो ह्येव कुतश्चाग्रावभ्यादधाति तत एव प्रदहतीति श्रुतिः । दीदिहि दीप्यस्व । एकं वाक्यं कृत्वा व्याख्यायते । यत्तदोर्व्यत्ययेन । वसुः धनं तापपाकप्रकाशैरुपकारकः । कविः क्रान्तदर्शनः । अग्निः । ईडेन्यः स्तुत्यः ऋषिभिः । गिरा वाचा । तं त्वां ब्रवीमि । रेवत् धनवत् अस्मदर्थं पुर्वणीक दीप्यस्व ॥ ३६ ॥

हे पुर्वणीक ! पुरु बहु अनीकं मुखं यस्य तत्सम्बुद्धिः सर्वदाहकत्वात् । यतो ह्येव कुतश्चाग्नावभ्यादधाति तत एव प्रदहतीति श्रुतेः । हे बहुमुखाग्ने ! अस्मभ्यमस्मदर्थं रेवत् रयिमत् धनवद् यथा तथा स त्वं दीदिहि दीप्यस्व । दिवेः शपः श्लुः द्वित्वम् तुजादीनां दीर्घोऽभ्यासस्येति अभ्यासदीर्घः लोपो व्योर्वलीति वलोपः । रयिर्विद्यते यत्र कर्मणि रेवत् रयेर्मताविति ( पा० ६, १, ३७ वा० ४ । सम्प्रसारणम् । तथा त्वया हविर्ग्राह्यं यथास्माकं धनाप्तिर्भवतीत्यर्थः । स पूर्वोक्तः । कीदृशस्त्वमिधानः दीप्यमानः : वसुः निवासहेतुः । कविः क्रान्तदर्शी । अग्निः अग्रे नयतीत्यग्रणीः प्रथमं यज्ञप्रवर्त्तक इत्यर्थः । गिरा त्रयीलक्षणया वाचा ईडेन्यः ईडितुं योग्यः स्तुत्यः औणादिक एन्यः ॥ ३६ ॥

**क्षपो॑ राज॑न्नु॒त त्मनाग्ने॒ वस्तो॑रु॒तोषसः॑ । स ति॑ग्मजम्भ र॒क्षसो॑ दह॒ प्रति॑ ॥ ३७ ॥**

क्षपो राजन् । यस्त्वं क्षपः क्षपयिता । हे राजन् । रक्षसाम् । उत त्मना । अप्यात्मनैव स्वभावत एव । हे अग्ने वस्तोः सहसम्बन्धिनां रक्षसाम् उत उषसः अपि उषसः सम्बन्धिनाम् सः । हे तिग्मजम्भ । वज्रदंष्ट्र । तिग्ममिति वज्रनाम । जम्भेति दंष्ट्रानाम । रक्षसो दह । प्रतीत्य ॥ ३७ ॥

हे राजन् दीप्यमान ! हे तिग्मजम्भ ! तिग्मा तीक्ष्णा जम्भा दं-

ष्ट्रा यस्य यद्वा तिग्ममिति वज्रनाम ( निघ० २, २०, १३ ) हे वज्रदंष्ट्र अग्ने ! वस्तोः अयः सम्बन्धिन उतापि उषसः कालसम्बन्धिनो रक्षसो रक्षांसि राक्षसान् स त्वं प्रतिदह प्रत्येकं भस्मीकुरु लिङ्गव्यत्ययेन रक्षःशब्दस्य पुंस्त्वम्। छन्दसि परेऽपीति प्रत्युपसर्गस्य क्रियापदात् परत्वम् । कीदृशस्त्वम् त्मना उप आत्मनापि स्वभावतोऽपि क्षपः क्षपयतीति क्षपः क्षप क्षेपे चुरादिः पचाद्यच् स्वभावतो रसक्षां क्षपयिता । मन्त्रेष्वाङ्यादेरात्मन इति आत्मन आकारलोपस्तृतीयैकवचने ॥ ३७ ॥

**भद्रो नो॑ अ॒ग्निरा॑हु॒तो भ॒द्रा रा॒तिः सु॑भग भ॒द्रो अ॑ध्व॒रः । भ॒द्रा उ॒त प्रश॑स्तयः ॥ ३८ ॥**

**भ॒द्रा उ॒त प्रश॑स्तयो भ॒द्रं मनः॑ कृणुष्व वृत्र॒तूर्य॑ । येना॑ स॒मत्सु॑ सा॒सहः॑ ॥ ३९ ॥**

**येना॑ स॒मत्सु॑ सा॒सहो॑ऽव॑ स्थि॒रा त॑नुहि॒ भूरि॒ शर्ध॑ताम् । व॒नेमा॑ ते अ॒भिष्टि॑भिः ॥ ४० ॥**

भद्रो नः । द्वे ऋचौ । पूर्वा ककुप्सतो बृहत्युत्तरा । तिस्रः ककुभः सम्पादिताः । सुभग इति चित्यमग्निं सम्बोध्य प्रार्थयति । भद्रः भन्दनीयः नोऽस्माकम् अग्निः आहुतः अभिहुतः भवत्विति शेषः । भद्रा रातिः । रा दाने । रातिः दानं भवतु । हे सुभग महदैश्वर्ययुक्त । ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना । भद्रश्चाध्वरो यज्ञो भवतु । किञ्च । भद्रा उत अपि प्रशस्तयः । प्रशंसनानि भवन्तु अस्माकम् ॥ ३८ ॥

भद्रं मनः । भद्रं स्तुत्यं मनः । कुरुष्व वृत्रतूर्ये । शत्रुवधाय तूर्य्यतिर्वधकर्मा । येन मनसा समत्सु संग्रामेषु । साहस । षह मर्षणे । छन्दस्यभिभवे । अभिभवसि ॥ ३९ ॥

किञ्च । अवास्थिरा तनुहि । अवतारय स्थिराणि कठि-

नानि धनूंषि। भूरि शर्द्धताम्। बहुप्रकारं बलमात्मानि कुर्वताम्। शर्द्ध इति बलनाम। अभिवलायमानानाम्। ततो वयं शत्रुभिरप्रतिबध्यमानाः। वनेम सम्भवेमहि तानेव शत्रून् ते तव अभिष्टिभिः अभीष्टयागैः ॥ ४० ॥

का० (१७, १२, ११) भद्रो न इति ककुभस्ताभ्यः। बृहतीभ्यः पुरस्तात्तिस्रः ककुबिष्टका भद्रो न इत्यृक्त्रयेणोपदधातीति सूत्रार्थः ॥ प्रगाथः ककुप्सतोबृहतीभ्यां तिस्रः ककुभः पादावृत्त्या कृताः आवृत्तस्य नार्थान्तरम्। भद्रो नोऽग्निरा० प्रशस्तय इति ककुप् मध्यः पादो द्वादशक आद्यतृतीयावष्टकाविति तल्लक्षणम्। भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहोऽत्र स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टिभिरिति सतोबृहती आद्यतृतीयौ द्वादशकौ द्वितीयतुर्यावष्टकाविति तल्लक्षणम् ॥ तत्र ककुब् व्याख्यायते। यजमानश्चित्यमग्निं सम्बोध्य प्रार्थयते। हे सुभग ! शोभनभग ! शोभनं भगमैश्वर्यं यस्य। ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेत्युक्तेः। हे षड्विधैश्वर्ययुक्त ! आहुतः ऋत्विग्भिराहुतोऽग्निर्नो ऽस्माकं भद्रः भन्दनीयः कल्याणो भवत्विति शेषः। किञ्च रातिः त्वदीयं दानं भद्रास्तु कल्याणो भवत्विति शेषः। किञ्च रातिः त्वदीयं दानं भद्रास्तु कल्याणकार्यस्तु। अध्वरः यज्ञो भद्रः श्रेयस्कार्य्यस्तु। उतापि च प्रशस्तयः कीर्तयो भद्रा सुखदायिन्यः सन्तु ॥ अथ द्वितीया। हे अग्ने ! येन मनसा समत्सु संग्रामेषु त्वं ससहः अभिभवसि शत्रून् षह मर्षणे छन्दस्याभिभवे च लङ् द्वित्वाडभावौ छान्दसौ संहितायामभ्यासदीर्घः। तन्मनः वृत्रतूर्ये पापनाशाय भद्रं कल्याणं कुरुष्व तूर्यतिर्बधकर्मा। वृत्रः पापम् पाप्मा वै वृत्र इति श्रुतेः। किञ्च भूरि बहु शर्धतां बलं कुर्वतां सम्बन्धीनि स्थिरा स्थिराणि धनूंषि अवतनुहि अवतारय ज्यारहितानि कुरु। शर्ध इति बलनाम (निघ० २, ९, ७) शर्धं बलं कुर्वन्ति शर्धन्ति लुपः क्विप् ततः शतृप्रत्ययः शर्धन्तीति शर्धन्तस्तेषाम्। किञ्च ते तवाभिष्टिभिर्मार्गैर्वयं वनेम सम्भजेम भोग्यानि वसूनि सेवेमहि। वनेमा येनेति पदयोः संहितायां दीर्घः ॥ ३८ ॥ ३९ ॥ ४० ॥

अ॒ग्निं तं म॑न्ये॒ यो वसु॒रस्तं॒ यं यन्ति॑ धे॒नवः॑ । अ॒स्तमर्व॑न्त आ॒शवोऽस्तं॒ नित्या॑सो वा॒जिन॒ इषं॑ᳫ स्तो॒तृभ्य॒ आभ॑र ॥ ४१ ॥

अग्निं तं मन्ये । पाङ्क्तः त्र्यृचः तमहमग्निं मन्ये जाने । यो वसुः धनम् । तापपाकप्रकाशैरुपकुर्वन् धनमित्युच्यते । यद्वा । वसुर्वासयिता । अस्तं यं यन्ति धेनवः । यञ्चाग्निमुद्धृतं ज्ञात्वा प्राप्तोऽस्माकं दोहनकाल इति अस्तं गृहं यन्ति धेनवः । अस्तं गृहमर्वन्तः अश्वाः । आशवः शीघ्राः यन्ति । स्वामी हि पशूनामग्निः । यत्तज्जातः पशूनविन्दतेत्युपक्रम्य तस्मात्सर्वानृतून्पशवोऽग्निमभि सप्यन्तीति श्रुतिः । अस्तं च नित्यासः शाश्वतिकाः वाजिनः सुहयाः । सैन्धवाभिप्रायमेतत् । य उपास्यमान एतत्सर्वं यजमानस्योत्पादयति तमग्निं मन्ये । अधस्तनाश्चत्वारः पादाः परोक्षकृताः अयन्तु प्रत्यक्षकृतः । अध्याहारेण परिपूर्त्तिः । यदि सत्त्वमग्निः इषमन्नं स्तोतृभ्य आभर देहि ॥४१॥

का० ( १७, १२, १४ ) अनूकान्ते दक्षिणे पङ्क्तीरग्निं तमिति । दक्षिणेऽनूकान्ते तिस्रः पङ्क्तिसंज्ञा इष्टका अग्निन्तामिति तिसृभिरुपदधातीति सूत्रार्थः ॥ तिस्रः पङ्क्तयः यस्य द्वौ पादावष्टकौ सा पङ्क्तिः । यो वसुः तापपाकप्रकाशैरुपकुर्वन् धेनुरूपो वसुरित्युच्यते वसुर्वासयिता वा यः तमग्निं मन्ये जानामि । धेनवो गावो यमग्निमुद्धृतं ज्ञात्वा अस्तं गृहं यन्ति गच्छन्ति दोहकालोऽस्माकं होमार्थं प्राप्त इति । आशवः शीघ्रगामिनोऽर्वन्तोऽश्वा यं दृष्ट्वास्तं यजमान गृहं यन्ति गच्छन्ति । नित्यासः नित्याः शाश्वताः सर्वकालभाविनो वाजिनो बलवन्तोऽश्वाः सैन्धवाश्वाभिप्रायेण पुनर्वचनम् यं दृष्ट्वास्तं यन्ति । यमुपास्य गवाश्वादिकं लभ्यते इत्यर्थः तादृश हे अग्ने ! स्तोतृभ्यः स्तुतिकारिभ्यो यजमानेभ्य इषमन्नमाभर आहर देहि ॥ ४१ ॥

सो अ॒ग्निर्यो वसु॑र्गृ॒णे सं यमा॒यन्ति॑ धे॒नवः॑ । स-

**मर्वन्तो रघुद्रुवः सᳬं सुजातासः सूरय इषᳬं स्तोतृभ्य आभर ॥ ४२ ॥**

सोऽग्निः । स एवाग्निः यो वसुरिति गीयते स्तोतृभिः । संयमायन्ति धेनवः । समायन्ति च यं धेनवः । समर्वन्तो रघुद्रुवः । समायन्ति च अर्वन्तोऽश्वाः । लघुद्रवणाः । समागच्छन्ति च । सुजातासः । कल्याणजन्मानः । सूरयः पण्डिताः । एतदुक्तम्भवति । किन्तेनाग्निना य एतत्सर्वमात्मद्वारा यजमानस्य नोपनयति । स चेतृत्त्वम् । इषं स्तोतृभ्य आभर ॥ ४२ ॥

योऽग्निर्वसुर्वासयिता स अग्निः विभक्तिव्यत्ययः तमग्निं गृणे स्तौमि गृ शब्दे स्वादिः लटि तङ्युत्तमैकवचनम् स्वादित्वाद्ध्रस्वः ( पा० ७, ३, ८० ) । यद्वा सोऽग्निः गृणे स्तूयतेऽस्माभिः कर्तृप्रत्ययस्य कर्मत्वं विधेयम् । धेनवो यमग्निं समायन्ति समागच्छन्ति । अर्वन्तोऽश्वा यं समायन्ति कीदृशा अर्वन्तः रघुद्रुवः रलयोरैक्यम् लघु क्षिप्रमरं द्रुतम् लघु शीघ्रं द्रुणन्ति गच्छन्ति लघुद्रुवः द्रू बधगत्योः स्वादिः क्र्यादिश्च क्विप् । सूरयः विद्वांसो योग्या ऋत्विजो यं समायन्ति यदुपासकं सर्वे भजन्ते इत्यर्थः । कीदृशाः सूरयः सुजातासः शोभनं जातं जन्म येषां ते सुजातासः सुजाताः आज्जसेरिति असुक् तादृश हे अग्ने ! त्वं स्तोतृभ्य इषमन्नमाभर ॥ ४२ ॥

**उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषᳬं स्तोतृभ्य आभर ॥ ४३ ॥**

उभे सुश्चन्द्र । हे अग्ने सुचन्द्र । शोभनचन्द्र इव धनानामुत्पादक । शोभने हि चन्द्रमसि धनान्युत्पद्यन्त इति ज्योतिःशास्त्रविदः प्रतिजानन्ति । यद्वा । कल्याणह्लादज । उभे दर्वी । उभौ हस्तौ दर्व्याकारौ कृत्वा श्रीणीषे श्रयसि । आश्लेषसि आसनि आस्ये मुखे । सर्पिषः पानाय । उतो न उत्पुपूर्या अपि च त्वं ब्रूषे

यदि नाम उत्क्षिप सर्पिषो भाण्डमत्यर्थमञ्जालिम्पूरयेरस्माकं साधु कृतं स्यात् । उक्थेषु हे शवसस्पते बलस्य पते यद्येवम् । इषं स्तोतृभ्य आभर ॥ ४३ ॥

चन्द्रे सु शकारेणेति संहितायां चन्द्रे परे सुशब्दस्य शागमः हे सुचन्द्र ! चन्द्रमिति हिरण्यनाम ( निघ० १, २, २ ) शोभनं चन्द्रं हिरण्यं यस्मात् यद्वा शोभनश्चन्द्रः इव चन्द्रो धनदाता शोभने चन्द्रे धनप्राप्तिर्भवतीति ज्योतिः शास्त्रे उक्तम् । यद्वा शोभनं चन्दत्याह्लादयति सुचन्द्रः हे सुचन्द्र ! आसनि आस्ये मुखे सर्पिषः पानायेति शेषः घृतस्य पानाय उभे दर्वी दर्व्याकारौ हस्तौ श्रीणीषे आश्रयसि सेवसे श्री पाके क्र्यादिः अत्राश्रयार्थः । उतो अपि च हे शवसः पते ! बलस्याधिपते ! उक्थेषु शास्त्रवत्सु यज्ञेषु नोऽस्मानुत्पुपूर्याः उत्कर्षेण पूरय धनैरिति शेषः । स्तोतृभ्य इषमन्नमाहर ॥ ४३ ॥

**अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ओहैः ॥ ४४ ॥**

अग्ने तमद्य । पदपाङ्क्तः त्र्यृचः । हे अग्ने तं तावकं यज्ञम् । अद्य ऋध्याम समर्द्धयेमहि । कथमिव । अश्वं न स्तोमैः । यथा अश्वमाश्वमेधिकं स्तुतिभिः समर्द्धयेयुः एवं समर्धयेमहि । क्रतुन्न भद्रम् । क्रतुं सङ्कल्पमिव च । भद्रं हृदिस्पृशम् । हृदि आत्मना स्पृश्यते । बहुकालाभिध्यातं यथा समर्द्धयेयुः एवं समर्द्धयेमहि। ते तव सम्बन्धिभिः ओहैः । वहेरेतद्रूपम् प्रापणैः । त्वं नामबन्धुकर्मरूपसंयुक्ताभिः स्तुतिभिर्दक्षिणाभिश्च यज्ञं समर्द्धयेमहीति समस्तार्थः ॥ ४४ ॥

का० ( १७, १२ १५ ) उत्तरे पदपङ्क्ती रग्ने तमिति । उत्तरानूकान्ते तिस्रः पदपङ्क्तीष्टका अग्ने तमिति तिसृभिरुपदधातीति सूत्रार्थः ॥ तिस्रः पदपङ्क्तयः । यस्याः पञ्चाक्षराश्चत्वारः पादा एकः षडर्णः सा पदपङ्क्तिः । यद्वा त्रयः पञ्चार्णाश्चतुर्थश्चतुरर्णः पञ्चमः षडर्ण इति ।

पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिरित्युक्तेः । तत्राद्यायाश्चतुर्थश्चतुष्कः । हे अग्ने ! ते तव तं क्रतुं तावकम्प्रसिद्धं यज्ञमद्यास्मिन् दिने वयमृध्याम समर्धयाम । समृद्धङ्करवामेत्यर्थः । आशिषि लोट् । संहितायां दीर्घः । कैः स्तोमैः स्तुतिभिः सामसमूहैः । कीदृशैः स्तोमैः । ओहैः । वहे रूपं वहन्ति फलं प्रापयन्तीत्योहाः तैः वहन्ति प्रतिपादयन्ति त्वत्कर्मरूपनामानीति वा । तत्रैको दृष्टान्तः । अश्वं न स्तोमैः । न इवार्थे । यथा स्तोमैः स्तुतिभिरश्वमाश्वमेधिकं विप्राः समर्द्धयन्ति । द्वितीयो दृष्टान्तः । क्रतुं न हृदिस्पृशम् हृदि स्पृशति हृदिस्पृक् । हलदन्तादित्यलुक् अतिप्रियं चिरं मनसि स्थितं भद्रं कल्याणं क्रतुं सङ्कल्पं यथा समर्द्धयन्ति । क्रतुर्यज्ञः सङ्कल्पश्चेति दृष्टान्तदार्ष्टान्तिकयोरस्य सम्बन्धः । चिराभिलषितं यथा सन्तः सम्पादयन्तीत्यर्थः ॥ ४४ ॥

**अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥ ४५ ॥**

अधा ह्यग्ने । अधा समनन्तरमेव । हिः पादपूरणः । हे अग्ने क्रतोः भद्रस्य सङ्कल्पस्य भन्दनीयस्य । दक्षस्य । तस्यैव समृद्धोऽसङ्कल्पो दक्ष उच्यते । साधोरतिशययुक्तस्य । रथीः रथीः इव बभूवथ । भव । ऋतस्य यज्ञस्य च । बृहतो महतः बभूवथ भव । अथवा यज्ञ एवोच्यते । अथ अग्नेः क्रतोः यज्ञस्य भन्दनीयस्य । दक्षस्य ऊत्साहयुक्तस्य दक्षिणाभिः समृद्धस्य । साधोरथीरिव ऋतस्य यज्ञस्य बृहतो भव ॥ ४५ ॥

अथेत्यर्थेऽधेत्यव्ययम् । निपातस्य चेति संहितायां दीर्घः । हि पादपूरणः । हे अग्ने ! अथ समनन्तरमेव क्रतोः अस्मद्यज्ञस्य रथीः सारथिरिव बभूथ भव बभूथाततन्थेत्यादिना इडभावः । रथोऽस्यास्तीति रथीः सारथीरथादीरन्नीरचावित्यस्त्यर्थे ईरच्प्रत्ययः । सारथिर्यथा रथनिर्वाहं करोति तथा यज्ञनिर्वाहको भवेत्यर्थः । कीदृशस्य क्रतोः भद्रस्य कल्याणरूपस्य । दक्षस्य समृद्धस्य स्वफलदानसमर्थस्येति वा । साधोः साध्यते निष्पाद्यत इति साधुस्त-

स्यातिशययुक्तस्येत्यर्थः । ऋतस्य अमोघफलस्य । बृहतो महतः प्रौढस्य ॥ ४५ ॥

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्ण ज्योतिः । अग्ने विश्वेभिः सुमना अनीकैः ॥ ४६ ॥

एभिर्नः । एभिः अर्कैः मन्त्रैः नः अस्माकं सम्बन्धिभिः स्तूयमान इति शेषः भव नः अस्मान् अर्वाङ् अभिमुखाञ्चनः । कथमिव स्वर्णज्योतिः यथा स्वराख्यं ज्योतिरुदयादारभ्यार्वागञ्चनं सर्वप्राणिनोऽनुगृह्णाति । एवम्भवार्वागञ्चनोऽनुग्रहपरतया । हे अग्ने विश्वेभिः अनीकैः सर्वैर्मुखैः । अनीकम् मुखम् । सुमनाः शोभनमनस्कः सन् ॥ ४६ ॥

हे अग्ने ! विश्वेभिः विश्वैः सर्वैरनीकैः मुखैः कृत्वा नोऽस्मान् प्रति अर्वाङ् अभिमुखो भव । अवरं समीपदेशमञ्चतीत्यर्वाङ् । अनुगृहाणेत्यर्थः । कीदृशः एभिरस्मत्पठितैरर्कैरर्चनीयैर्मन्त्रैः कृत्वा सुमनाः शोभनमनस्कः । प्रसन्नः सन्नस्मत्संमुखो भवेत्यर्थः । तत्र दृष्टान्तः स्वः न ज्योतिः स्वःशब्देन सूर्यः न इवार्थे यथा स्वरादित्यरूपं ज्योतिः अर्कैः स्तुतमुदयादारभ्य सर्वप्राणिसंमुखं भवति । द्व्यचोऽतस्तिङ इति भवेत्यस्य दीर्घः ॥ ४६ ॥

अग्निँ होतारं मन्ये दास्वन्तं वसुँ सूनुँ सहसो जातवेदसं विप्रं न जातवेदसम् ॥ य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ॥ घृतस्य विभ्राष्टिमनुवष्टि शोचिषाजुह्वानस्य सर्पिषः ॥ ४७ ॥

अग्निं होतारम् । अतिच्छन्दाः । अष्टिरत्यष्टिर्वा । तमहमग्निं होतारम्मन्ये जानामि । दास्वन्तं दानवन्तं वसुं वासयितारं सूनुं शहसः बलस्य पुत्रम् । जातवेदं सञ्जातप्रज्ञानम् । विप्रन्न जातवेदसम् । विप्रमिव जातप्रज्ञानम् । यः देवो दानादिगुणयुक्तः ऊर्ध्वया ज्वालया स्वध्वरः साधुयज्ञः । देवाच्याकृपा ।

देवान् प्रत्याचया देवान्प्रतिगतया । कृपाकल्पितया । घृतस्य विभ्राष्टिमनु वष्टि शोचिषा । घृतस्य विभ्राष्टिं सपातम् । अनुकामयते दीप्त्या आजुह्वानस्य । आहूयमानस्य । सर्पिषो घृतस्य । तमहमग्निं होतारं मन्य इति सम्बन्धः ॥ ४७ ॥

का० ( १७, १२, १६ ) पुरीषवत्याः पूर्वामतिच्छन्दसं प्राच्यौ पुरीषसहिते भद्रा रातिर्वृत्रतूर्येऽवस्थिराग्निꣳ होतारमिति । अग्नेः! पुरीषमसीति पुरीषशब्दवता मन्त्रेणोपहिता पञ्चम्यसपत्ना पुरीषवती ( १५, ३ ) तस्याः पूर्वामतिच्छन्दसमिष्टकामुपदधाति भद्रा रात्रिः वृत्रतूर्ये अवस्थिरेति ककुभां ( १५, ३८—४० ) चतुश्चतुरक्षरसहितयाग्निꣳ होतारमित्यृचा । पुरीषवत्यतिच्छन्द इष्टके प्राग्लक्षणे पुरीषयुक्ते च भवतः अनयोरन्तः पुरीषावापः कार्य इति सूत्रार्थः ॥ अतिच्छन्दाः अवसानत्रिकोपेताः । छन्दांसि गायत्र्यादीनि सप्तातिक्रान्तातिच्छन्दाः । चतुःषष्ट्यक्षरत्वादष्टिः । ककुभामक्षरैः सहातिधृतिः ॥ यो देवः दानादिगुणयुक्तो ऽग्निरूर्ध्वयोन्नतया देवाच्या देवान् प्रत्यञ्चति गच्छति देवाची तया देवान् प्रति गतया कृपा कृप्यत इति कृप् तया क्लृप्तया समर्थया शोचिषा ज्वालया घृतस्य विभ्राष्टिं विभ्रंशपातमनुवष्टि अन्विच्छति । शोचिःशब्दस्य स्त्रीत्वमार्षम् । किम्भूतस्य घृतस्य आजुह्वानस्य समन्ताद् धूयमानस्य सर्पिषः सर्पतीति सर्पिस्तस्य अग्न्यङ्गेषु प्रसरणशीलस्य । य एतादृशः तमग्निं मन्ये जानामि । कीदृशं होतारं देवानामाह्वातारम् दास्वन्तं दासृ दाने दातारम् वसुं वासयितारम् सहसो बलस्य सूनुं पुत्रं बलेन मथ्यमानत्वात् जातवेदसमुत्पन्नप्रज्ञम् न इवार्थे जातवेदसं जातसर्वशास्त्रज्ञानं विप्रं ब्रह्माणमिव स्थितम् ॥ ४७ ॥

अग्ने॒ त्वं नो॒ अन्त॑म उ॒त त्रा॒ता शि॒वो भ॑वा वरू॒थ्य॑ः ॥ वसु॑र॒ग्निर्वसु॑श्रवा॒ अच्छा॑ नक्षि द्यु॒मत्त॑मꣳ र॒यिं दाः॑ ॥ तं त्वा॑ शोचिष्ठ दीदिवः सु॒म्नाय॑ नू॒नमी॑महे॒ सखि॑भ्यः ॥ ४८ ॥

अग्ने त्वम् । द्विपदः त्र्यचो व्याख्याताः ॥ ४८ ॥

का० ( १७, १२, १७ ) अग्ने त्वामित्यनूकान्तेऽपरे द्विपदाः । अग्ने ! त्वम् वसुरग्निः तं त्वा इति तिसृभिरपरेऽनूक्रान्ते द्विपदेष्टका उपदधातीत्यर्थः ॥ तिस्रो द्विपदा आग्नेय्यः ॥ व्याख्याताः ( ३, २५—२६ ) ॥ ४८ ॥

**येन॒ ऋष॑य॒स्तप॑सा स॒त्रमाय॒न्निन्धा॑ना अ॒ग्नि१ँ स्व॑रा॒भर॑न्तः । तस्मि॑न्न॒हं नि द॑धे॒ नाके॑ अ॒ग्निं यमा॒हुर्मन॑व स्ती॒र्णब॑र्हिषम् ॥ ४९ ॥**

येन ऋषयः । अष्टाभि र्ऋग्भिः पुनश्चितिश्चीयते । तत्र षट्त्रिष्टुभः द्वे अनुष्टुभौ । येन तपसा ऋषयो वसिष्ठप्रभृतयः सत्रम् । आयन् आगतवन्तः । इन्धानाः अग्निम् । आदीपयन्तः अग्निम् । उरव्यं स्वराभरन्तः । स्वर्लोकमाभरन्तः स्वीकुर्वाणाः । तेनैवाहन्तपसा सत्रमागत्याग्निं सन्दीप्य स्वर्लोकञ्च स्वीकृत्य । तस्मिन्नहं निदधे स्थापयामि । नाके अग्निम् । न विद्यते अकं यत्र गतानां स नाकः स्वर्गो लोकः । यमाहुर्मनवः मननप्रधानाः । तीर्णबर्हिषम् । सर्वैर्यज्ञसाधनैः सम्पादि सुखमित्यर्थः ॥ ४९ ॥

का० ( १७, १२, १९ ) पुनश्चितिं चोपरि तद्वयेन ऋषय इति प्रत्यृचम् । मध्योपहितस्याष्टेष्टकस्य गार्हपत्यस्योपरि गार्हपत्यवदेव पुनश्चितिमुपदधाति येनेत्यष्टर्चेन प्रत्यृचमित्यर्थः ॥ आग्नेय्योऽष्टौ षट् त्रिष्टुभः द्वे अनुष्टुभौ । ऋषयः मुनयो येन तपसा चित्तैकाग्र्येण सत्रं यज्ञमायन्नागताः यज्ञं कर्तुमुद्यता इत्यर्थः । कीदृशाः अग्निमिन्धानाः दीपयन्तः । तथा स्वः स्वर्गलोकमाभरन्तः आहरन्तः स्वीकुर्वाणा । मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तप इत्युक्तेः । तस्मिन् तपसि सति नाके स्वर्गलोकनिमित्तमग्निमहं निदधे स्थापयामि । मनवः मननप्रधाना विद्वांसो यमग्निं स्तीर्णबर्हिषमाहुर्वदन्ति स्तीर्णमाच्छादितं बर्हिर्यत्र तम् बर्हिर्यज्ञसाधनोपलक्षकम् यज्ञसाधन-

सहितमित्यर्थः । ये विद्वाꣳसस्ते मनव इति ( ८, ६, ३, १८ ) श्रुतेः ॥ ४९ ॥

**तं पत्नी॑भि॒रनु॑ गच्छेम देवाः पु॒त्रैर्भ्रातृ॑भिरु॒त वा॒ हिर॑ण्यैः । नाकं॑ गृभ्णा॒नाः सु॑कृ॒तस्य॑ लो॒के तृ॒तीये॑ पृ॒ष्ठे अधि॑ रोच॒ने दि॒वः ॥ ५० ॥**

तं पत्नीभिः । तदः श्रवणाद्यदोऽध्याहारः । द्वितीयादर्धं चाव्याख्यायते । नाकङ्गृह्णानाः स्वीकुर्वन्तः ऋषयः । सुकृतस्य लोके साधुकृतस्य स्थाने । तृतीये पृष्ठे अधिरोचनेऽवस्थितादिव एकदेशीभूते यत्रादित्यस्तपतीति तं पत्नीभिः सह अनुगच्छेम । हे देवाः पुत्रैः भ्रातृभिः अपि च हिरण्यैः ॥ ५० ॥

हे देवाः दीप्यमाना ऋत्विजः ! पत्नीभिः कलत्रैः सह पुत्रैरुत पुत्रैरपि सह भ्रातृभिर्वा भ्रातृभिश्च हिरण्यैः सुवर्णादिद्रव्यैश्च सह तमग्निमनुगच्छेम वयमनुसरेम सेवेमेत्यर्थः । कीदृशा वयम् तृतीये भूमिमारस्य त्रिसंख्यापूरके दिवः पृष्ठे रविमण्डले नाकं दुःखहीनं स्थानमधिगृभ्णाना अधिकं सुखस्थानं स्वीकुर्वन्तः । कीदृशे दिवः पृष्ठे सुकृतस्य लोके शुभकर्मणः फलभूते रोचने दीप्यमाने । एतद्व तृतीयं पृष्ठꣳ रोचनं दिवो यत्रैष एतत्तपतीति ( ८, ६, ३, १९ ) श्रुतेः ॥ ५० ॥

**आ वा॒चो मध्य॑मरुहद्भुर॒ण्युर॒यम॒ग्निः सत्प॑ति॒श्चेकि॑तानः । पृ॒ष्ठे पृ॑थि॒व्या निहि॑तो॒ दवि॑द्युतदधस्प॒दं कृ॑णुतां॒ ये पृ॑त॒न्यवः॑ ॥ ५१ ॥**

आवाचो मध्यमरुहत् । अरुहत् वाचो मध्यम् । एतत् वाचां मध्यम् । यत्रैष एतच्चीयते । भुरण्युः भर्ता । अयमग्निः सत्पतिः । शोभनानाम्पतिः । चेकितानः चेतयमानः । किञ्च । पृष्ठे पृथिव्याः निहितः स्थापितः । दविद्युतत् देदीप्यमानः । अधस्पदम् । पादयोरधः कृणुतां करोतु । ये पृतन्यवः । ये पा-

प्मानस्तान्सर्वान् ॥ ५१ ॥

अयमग्निः वाचो मध्यं चयनस्थानमारुहत् चयनोपर्यारूढः । एतद्ध वाचो मध्यं यत्रैष एतच्चीयत इति ( ८, ६, ३, २० ) श्रुतेः । सोऽयमग्निः ये पृतन्यवः युद्धेप्सवः पाप्मानस्तानधस्पदं कृणुतां पादयोरधः करोतु पादयोरधोऽधस्पदम् । कस्कादित्वात्सः ( पा० ८, ३, ४८ ) । पृतनां सेनां युद्धं वा इच्छन्ति पृतन्यन्ति सुप आत्मनः क्यच् कव्यध्वरेत्यादिना पृतनायाष्टिलोपः ततः क्याच्छन्दसीति उप्रत्ययः । अधस्पदं कुरुताꣳ सर्वान् पाप्मन इति ( २० ) श्रुतेः । कीदृशोऽग्निः भुरण्युः जगद्धर्ता । भुरण्युरिति भर्तेत्येतदिति ( २० ) श्रुतेः । सत्पतिः सतां पालकः । चेकितानः । चेतयमानः । पृथिव्याः पृष्ठे भूम्युपरि निहितः स्थापितः । दाविद्युतदत्यन्तं द्योतमानः दधर्तीत्यादिना यङ्लुकि शत्रन्तो निपातः ॥ ५१ ॥

अयम॒ग्निर्वी॒रत॑मो वयो॒धाः स॑ह॒स्रियो॑ द्योतता॒मप्र॑युच्छन् । वि॒भ्राज॑मानः सरि॒रस्य॒ मध्य॒ उप॒ प्रया॑हि दि॒व्यानि॒ धाम॑ ॥ ५२ ॥

अयमग्निः । वीरतमः अतिशयेन वीरः । वयोधाः वयोऽन्नं हविर्लक्षणमस्मिन्धीयते । सहस्रियः सहस्रार्हः । द्योततान्दीप्यताम् । अप्रयुच्छन् अप्रमत्तः । विभ्राजमानः सरिरस्य मध्ये । इमे वै लोकाः सरिरम् । दीप्यमान एषु लोकेषु । उप प्रयाहि । यातु इति पुरुषव्यत्ययः परोक्षकृतत्वान्मन्त्रस्य । दिव्यानि धामानीति बहुवचनेन सन्नतिः । स्थानानीति पर्यायः ॥ ५२ ॥

अयमग्निर्द्योततां दीप्यतां दिव्यानि धाम धामानि स्थानानि उप प्रयाहि उपप्रयातु च स्वर्गं लोकं गच्छतु पुरुषव्यत्ययः । उपप्रयाहि दिव्यानि धामेत्युपप्रयाहि स्वर्गलोकमित्येतदिति ( ८, ६, २१ ) श्रुतेः । कीदृशोऽग्निः वीरतमः अतिशयेन वीरः शूरः वयोधा वयोऽन्नं हविर्लक्षणं दधातीति वयोधाः । सहस्रियः इष्टकानां सहस्रेण संमितः

सहस्रेण संमितौ घ इति घप्रत्ययः । अप्रयुच्छन् कर्मण्यप्रमाद्यन् सरिरस्य मध्ये लोकत्रयान्तर्विभ्राजमानः दीप्यमानः । इमे वै लोकाः सरिरमिति ( २१ ) श्रुतेः ॥ ५२ ॥

सम्प्रच्यवध्वमुप सम्प्रयाताग्ने पथो देवयानान् कृणुध्वम् । पुनः कृण्वाना पितरा युवानान्वताᳬंसीत्त्वयि तन्तुमेतम् ॥ ५३ ॥

सम्प्रच्यवध्वम् । ऋषीनाह मन्त्रदृक् सम्प्रच्यवध्वमेनमग्निम् । उपसम्प्रयात च त्वम् । हे अग्ने पथः देवयानानृषीणां कुरु इति वचनव्यत्ययः । किञ्च पुनरपि कृण्वानाः कुर्वाणा ऋषयः । पितरो युवाना । वाक् च मनश्च पितरो युवानेति श्रुतिः । वाङ्मनसे युवानातरुणे अयातयामे अन्योन्यं सङ्गते वा । सङ्गते हि वाक् च मनश्च यज्ञं साधयतः । अन्वाताᳬंसि त्वयि तन्तुमेतम् । अन्वातनोतु त्वयि तन्तुं यज्ञम् । एतम् । हे अग्ने ॥ ५३ ॥

मन्त्रदृगृषीनाह । हे ऋषयः । एनमग्निं यूयं सम्प्रच्यवध्वमग्निं प्रत्यागच्छत उप सम्प्रयात च आगत्य सम्यक् प्राप्नुत । सम्प्रच्यवध्वमुप सम्प्रयातेत्यमूनेतदृषीनाह । समेनं प्रच्यवध्वमुप चैनᳬं सम्प्रयातेति ( ८, ६, ३, २२ ) श्रुतेः । एवमृषीनुक्त्वाग्निमाह हे अग्ने । देवयानान् पथः कृणुध्वं कुरु वचनव्यत्ययः । देवा यान्ते प्राप्यन्ते यैस्ते देवयानास्तान् करणाधिकरणयोश्चेति ल्युट् देवलोकप्राप्तिहेतून्मार्गान् कुर्वित्यर्थः । हे अग्ने ! यत ऋषय एतं तन्तुं यज्ञं त्वयि अन्वातांसीत् अतानिषुः अनुक्रमेण विस्तारितवन्तः वचनव्यत्ययः । कीदृशा ऋषयः पुनः भूयः पितरा वाङ्मनसे युवाना तरुणौ अयातयामावन्योऽन्यसङ्गतौ कृण्वानाः कुर्वाणाः । स्वादेः कृञः शानच् । विभक्तेराकारः । संयताभ्यां वाङ्मनसाभ्यामेव यज्ञसाधनात् ते संयते कुर्वाणाः जितेन्द्रिया इत्यर्थः । पुनः कुर्वाणाः पितरा युवानेति वाक् चैव मनश्च पितरा युवानेति ( २२ ) श्रुतेः ॥ ५३ ॥

**उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सᳪसृजेथामयञ्च । अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥ ५४ ॥**

उद्बुध्यस्व । प्रतिबुद्धो भव । हे अग्ने प्रतिजागृहि च त्वम् । ततः इष्टापूर्ते च संसृजेथाम् । त्वत्प्रसादाद्यजमानेन सह । अयं च । यजमानः इष्टापूर्ताभ्यां संसृष्टो भवतु । ततः संसृष्टेष्टापूर्तो व्यपगतकल्मषः सन् । अस्मिन्सधस्थे सहस्थाने देवैः पुनरपि विशिनष्टि । अध्युत्तरस्मिन् । सर्वोत्कृष्टे आदित्यलोके । विश्वेदेवा यजमानश्च सीदतु । विश्वैर्देवैर्यजमानस्य समानलोकता प्रार्थ्यते ॥ ५४ ॥

हे अग्ने ! त्वमुद्बुध्यस्व उद्बुद्धो भव सावधानो भव । एनं यजमानं प्रतिजागृहि प्रतिदिनं यजमानं जागरूकं सावधानं कुरु । तत इष्टापूर्ते श्रौतस्मार्ते कर्मणी संसृजेथां यजमानेन सह संसृष्टे भवतां त्वत्प्रसादात् अयं च यजमान इष्टापूर्ताभ्यां संसृज्यताम् । पुरुषव्यत्ययः । किञ्च हे विश्वे देवाः ! यूयम् । कृतेष्टपूर्तो निष्पापो यजमानश्च सधस्थे देवैः सहस्थितियोग्ये अस्मिन्नुत्तरस्मिन् सर्वोत्कृष्टे रविलोके द्युलोके सीदत तिष्ठत अधि अधिकं चिरं तिष्ठतेत्यर्थः । द्यौर्वा उत्तरᳪ सधस्थमिति ( ८, ६, ३, २३ ) श्रुतेः । विश्वैर्देवैः सालोक्यं यजमानस्य प्रार्थ्यत इति भावः ॥ ५४ ॥

**येन वहसि सहस्रं येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ ५५ ॥**

येन वहसि । येन हेतुना सामर्थ्येन वा वहसि प्रापयसि सहस्रम् । येन हे अग्ने सर्ववेदसं सर्वधनम् । तेन इमं यज्ञं । नः अस्मत्सम्बन्धिनम् । नय प्रापय । स्वर्देवेषु गन्तवे । स्वर्लोकं देवेषु देवान्प्रति । गन्तवे गमनाय । यज्ञे हि स्वर्लोकं गते अस्माकमपि गमनं भवति । तदुक्तम् । सोऽस्य यज्ञो देवलोकमे-

वाभिप्रेति तदनूचीदक्षिणायां ददाति सेति दक्षिणामन्वारभ्य यजमान इति ॥ ५५ ॥

हे अग्ने ! येन सामर्थ्येन सहस्रं सहस्रदक्षिणाकं यज्ञं त्वं वहसि प्रापयसि येन च सर्ववेदसं सर्वं वेदो धनं दक्षिणा यत्र तं सर्वस्वदक्षिणाकं यज्ञं वहसि तेन सामर्थ्येन नोऽस्माकमिमं यज्ञं देवेषु गन्तवे देवान् प्रति गन्तुं स्वः स्वर्गं नय प्रापय । तुमर्थे गमेः तवेप्रत्ययः । यज्ञे स्वर्गं गतेऽस्माकमपि तत्र गमनं स्यात् । सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणायां ददाति प्रैति ( १२ ) दक्षिणामन्वारभ्य यजमान इति श्रुतेः अतो यज्ञस्य स्वर्गगमनं प्रार्थ्यते ॥ ५५ ॥

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥ ५६ ॥

अयन्त इति व्याख्यातम् ॥ ५६ ॥

इयं व्याख्याता ( ३, १४, १२, ५२ ) ॥ ५६ ॥

तपश्च तपस्यश्च शैशिरावृतू अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे शैशिरावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद् ध्रुवे सीदतम् ॥ ५७ ॥

ऋतव्ये । तपश्च तपसस्यश्चेति व्याख्यातम् ॥ ५७ ॥

एवं पुनश्चित्युपधानमुक्त्वा पञ्चमचितिशेषभूतेष्टकोपधाने मन्त्रा उच्यन्ते ॥ का० ( १७, १२, २२ ) ऋतव्ये तपश्च तपस्यश्चेति । ऋतव्ये द्वे पद्येष्टके उपदधाति ऋतुदेवत्यं यजुः उत्कृतिश्छन्दः । तपो माघः तपस्यः फाल्गुनः शैशिरौ ऋतू शिशिरर्तोरवयवौ । शिष्टं व्याख्यातम् ( १३, २५ ) ॥ ५७ ॥

परमेष्ठी त्वां सादयतु दिवस्पृष्ठे ज्योतिष्मतीम् ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥ सूर्य्यस्तेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ ५८ ॥

विश्वज्योतिषम् । परमेष्ठी त्वा इति व्याख्यातम् ॥ ५८ ॥

का० ( १७, १२, २३ ) विश्वज्योतिषं परमेष्ठी त्वेति । यजमानकृतां पद्यां विश्वज्योतिषं तृतीयोपहितायाः विश्वज्योतिष उपर्युपदधातीति सूत्रार्थः ॥ सूर्यदेवत्यं यजुः शक्करीच्छन्दः । परमेष्ठी त्वां दिवः पृष्ठे उपरि सादयतु । सूर्यस्ते तवाधिपतिः पालक इति विशेषः । अन्यद्व्याख्यातम् ( १४ अध्या० १४ क० ) ॥ ५८ ॥

लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन् ॥ ५९ ॥

ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः । जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः ॥ ६० ॥

इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥ ६१ ॥

लोकं पृण ॥ ५९ ॥

ता अस्य ॥ ६० ॥

इन्द्रं विश्वाः ॥ ६१ ॥

का० ( १७, १२, २४ ) दक्षिणाꣳसात्प्रत्यगरत्निमात्रादाधि लोकम्पृणाः पूर्ववत् । आत्मनो दक्षिणादाग्नेयकोणादपरस्यां दिश्यरत्निमात्रादाधि पद्यालोकद्वयं परित्यज्य तृतीयलोकादारभ्य प्रथमचितिवल्लोकम्पृणा उपदधातीति सूत्रार्थः ॥ तिस्रोऽपि द्वादशे ( १२, ५४–५६ ) व्याख्याताः ॥ ५९—६१ ॥

प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्

व्यस्थात् । आदस्य वातो अनुवाति शोचिरधस्म ते व्रजनं कृष्णमस्ति ॥ ६२ ॥

व्याख्याताः । विश्वकर्णीमुपदधाति । प्रोथदश्वः । आग्नेयी त्रिष्टुप् । मथ्यमानोऽग्निरत्रोच्यते । प्रोथतिः शब्दार्थः । शब्दायते अग्निः । अश्वो न यवसेऽविष्यन् । अश्व इव यवसे घासे विषयभूते अविष्यन् ग्रसिष्यन् । यदा यस्मिन्काले । महतः संवरणात् । संव्रियते अस्मिन्नग्निरिति संवरणमरणिकाष्ठमुच्यते । अरणिकाष्ठात् । व्यस्थात् व्युत्तिष्ठते प्रकाशीभवति । आत् अथानन्तरमेव । अस्याग्नेः । वातः अनुवाति । शोचिः सन्दीपनः । अध अथ समानार्थौ छन्दसि । स्म निपातोऽनर्थकः । ते । अथैतस्येत्यर्थः । नह्यत्र युष्मदः प्रयोगः परोक्षकृतत्वान्मन्त्रस्य । श्रुतिरप्यमुमर्थं दर्शयति । अथैतस्य व्रजनं कृष्णं भवतीति । व्रजति गच्छत्यनेनेति व्रजनं कृष्णं भवति ॥६२॥

का० ( १७, १२, २५ ) प्रच्छाद्य पुरीषेण विकर्णीस्वयमातृण्णे शर्करे सꣳस्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां विकर्णीम् पञ्चमीं चितिं पुरीषेण पूर्ववत् प्रच्छाद्य शर्करामय्यौ परस्परसंलग्ने सच्छिद्रे विकर्णीस्वयमातृण्णासंज्ञे इष्टके उपधेये । तयोर्मध्ये उत्तरदिश्यनूकरेखामध्ये प्रोथदश्व इति विकर्णीष्टकामुपदधातीति सूत्रार्थः ॥ वसिष्ठदृष्टाग्नेयी त्रिष्टुप् । मथ्यमानोऽग्निः कथ्यते । यदा यस्मिन् काले मह्यः महतः संवरणात् संव्रियतेऽस्मिन्नग्निरिति संवरणमरणिकाष्ठं तस्मात् व्यस्थात् वितिष्ठते प्रकाशो भवति तदा प्रोथत् प्रोथयति शब्दायते प्रोथतिः शब्दार्थः इतश्च लोपः परस्मैपदेष्विति तिप इकारलोपः । तत्र दृष्टान्तः अश्वो न । न इवार्थे अश्व इव यथा यवसे अविष्यन् यवसं घासं भक्षयिष्यन्नश्वः प्रोथति । आत् अस्य अनन्तरं वह्निज्वलनशब्दानन्तरं वातो वायुरस्याग्नेरनुलक्ष्य प्रसरति वाय्वग्न्योः सख्यादिति भावः । कीदृशो वायुः शोचिः शोचयति ज्वलयति शोचिः । अग्नेः सन्दीपनः शोचिरिति

ज्वलन्नामसु ( निघ० १, १७ , ६ ) पठितम् । यद्वास्य शोचिर्ज्वालामनुलक्ष्य वातो वाति । अधेति निपातोऽथार्थः । अथ वातेनाग्नौ ज्वलिते सति ते एतस्याग्नेः व्रजनं गमनस्थानं कृष्णमस्ति श्यामं भवति कृष्णवर्त्मा हुताशन इत्युक्तेः । स्मेति निपातः पादपूरणः । श्रुत्या ते इति पदमेतस्येति व्याख्यातं परोक्षत्वान्मन्त्रस्य । अथैतस्य व्रजनं कृष्णं भवतीति ( ८, ७, ३, १२ ) श्रुतेः । अविष्यन्नित्यात्तिकर्मसु ( निघ० २, ८, ६ ) पठितम् ॥ ६२ ॥

आयो॑ष्ट्वा॒ सद॑ने सादयाम्यव॒तश्छा॒याया॑ᳪं समु॒द्रस्य॒ हृद॑ये । र॒श्मी॒वतीं॒ भास्व॑ती॒मा या द्यां भास्या पृ॑थि॒वीमोर्व॒न्तरि॑क्षम् ॥ ६३ ॥

स्वयमातृण्णामुपदधाति । अयोष्ट्वा । आ या द्याम्भासीत्याद्यारम्भः यच्छब्दप्रयोगात् । अयाद्याम्भासि । द्युलोकसंस्तवोऽस्याः स्वयमातृण्णायाः । आभासि प्रकाशयसि या त्वं द्यां द्युलोकम् । आपृथिवीम् । आभासि च पृथिवीम् । आभासि च उरू विस्तीर्णमन्तरिक्षम् । तां त्वां रश्मीवतीं रश्मिसंयुक्ताम् । आयोः अयनस्य आदित्यस्य त्वां सदने अवस्थाने सादयामि । अवतः अवनस्य पालयितुः दीप्यतो वा । छायायाम् । आश्रये । समुद्रस्य समुन्दनस्यादित्यस्य । हृदये प्रधानप्रदेशे । आदित्यो हि सर्वं समुन्दतीति समुद्र उच्यते ॥६३॥

का० ( १७, १२, २५ ) आयोष्ट्वेति स्वयमातृण्णाम् । आयोरिति कण्डिकाद्वयेन विकर्णीदक्षिणां स्वयमातृण्णामुपदधातीत्यर्थः ॥ आयोः परमेष्ठीति द्वे यजुषी स्वयमातृण्णादेवत्ये आद्यं ब्राह्म्युष्णिक् द्वितीयमाकृतिश्छन्दः हे स्वयमातृण्णे । आयोः आदित्यस्य सदने स्थाने तां त्वा त्वां सादयामि स्थापयामि । एति निरन्तरं गच्छतीत्यायुरादित्यः । कीदृशस्यायोः अवतः जगत्पालयितुः दीप्यमानस्य वा । तथा समुद्रस्य समुनत्तीति समुद्रस्तस्य आदित्यो वृष्ट्या जगदार्द्रीकुर्वन् समुद्र उच्यते । किम्भूते सदने छायायामाश्रयभूते

हृदये प्रधानभूते । कीदृशीं त्वां रश्मिवतीं किरणयुतामत एव भास्वतीं शोभमानाम् । तां काम् । या त्वं द्यां द्युलोकमाभासि प्रकाशयसि पृथिवीमाभांसि उरु विस्तीर्णमन्तरिक्षं चाभासि । रश्मिपदस्य संहितायां दीर्घः ॥ ६३ ॥

परमेष्ठी त्वा सादयतु दिवस्पृष्ठे व्यचस्वतीं प्रथस्वतीं दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीः ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥ सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ६४ ॥

परमेष्ठी त्वा सादयत्वेति व्याख्यातम् ॥ ६४ ॥

व्याख्यातम् ( १४, १२, १५, ५८ ) ॥ ६४ ॥

सहस्रस्य प्रमासि । सहस्रस्य प्रतिमासि । सहस्रस्योन्मासि । साहस्रोऽसि । सहस्राय त्वा ॥ ६५ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
पञ्चदशोऽध्यायः ॥ १५ ॥

---

अश्मिम्प्रोक्षति । हिरण्यशकलसहश्रणे शते द्वे द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रम् । सहस्रस्य प्रमा प्रमाणं भवसि । सहस्रस्य प्रतिमा प्रतिमानम्भवसि । सहस्रस्योन्मा उन्मानं तुलामानं भवसि । साहस्रोऽसि सहस्रार्होऽसि । यतः अतः । सहस्राय त्वां प्रोक्षामि ॥ ६५ ॥

इति उव्वटकृतौ मन्त्रभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

का० ( १७, १२, २७ ) तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रम् । इष्टकाचितं सपक्षपुच्छमग्निं पश्चादुत्तरपूर्वदक्षिणपश्चिमेषु शतद्वयं द्वयं सोदकस्तिष्ठन् प्रकिरतीत्यर्थः ॥ पञ्चाग्नेयानि यजूंषि । हे अग्ने ! सहस्रस्येष्टकानां प्रमा प्रमाणं त्वमसि । सहस्रस्य प्रतिमा प्रतिनिधिरसि । सहस्रस्योन्मानं तुलासि । साहस्रः सहस्राहोऽसि । सहस्रायानन्तफलाप्त्यै त्वा त्वां प्रोक्षामि ॥ ६५ ॥

श्रीमन्महीधरकृते वेददीपे मनोरमे ।
अस्मिन् पञ्चदशाध्याये कथिता पञ्चमी चितिः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

**नमस्ते रुद्र मन्यव उतो त इषवे नमः । बाहुभ्यामुत ते नमः ॥ १ ॥**

शतरुद्रियहोमः । अथातः शतरुद्रियं जुहोति इत्युपक्रम्य स एषोऽत्राग्निश्चितो बुभुक्षमाणो रुद्ररूपेणावतिष्ठते । तस्य तर्पणं देवैः कृतम् । द्वितीयन्दर्शनम् । यद्वै शतरुद्रियं जुहोतीत्युपक्रम्य प्रजापतेर्विस्रस्तादित्यभिधाय मन्त्रार्थानुगुण्येन श्रुतिर्भवति । स एव शतशीर्षो रुद्रः समभवदिति नमस्ते रुद्रमन्यवे रौद्रोऽध्यायः परमेष्ठिन आर्षन्देवानां वा प्रजापतेर्वा आद्योऽनुवाकः षोडशभिर्ऋग्भिः । तत्र एको रुद्रो देवता एका गायत्री तिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्तानुष्टुभो द्वे जगत्यौ । नमोऽस्तु ते । हे रुद्र तव सम्बन्धिने मन्यवे क्रोधाय । उत अपि च । ते तव सम्बन्धिने इषवे काण्डाय नमोऽस्तु बाहुभ्याम् । उत । अपि ते तव सम्बन्धिभ्यां नमोऽस्तु ॥ १ ॥

पञ्चदशे अध्याये चयनमन्त्रान् समाप्य षोडशे शतरुद्रियाख्य-

होममन्त्रा उच्यन्ते ॥ का० ( १८, १, १—५ ) शतरुद्रियहोम उत्तरपक्षस्यापरस्याᳬ स्रक्त्यां परिश्रित् स्वर्कपर्णेनार्ककाष्ठेन शातयन् सन्ततं जर्तिलमिश्रान् गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ्नमस्त इत्यध्यायेन त्र्यनुवाकान्ते स्वाहाकारी जानुमात्रे पश्चान्ते च नाभिमात्रे प्राक् च प्रत्यवरोहेभ्यो मुखमात्रे प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम् ॥ अस्यार्थः । हिरण्यशकलैरग्निप्रोक्षणानन्तरं शतरुद्रियसंज्ञो होमः । तस्याहवनीये प्राप्तावपवादमाह । उत्तरपक्षपश्चिमकोणे याः परिश्रितो जङ्घामात्र्यादयः पूर्वं निखातास्तासु होमः । तत्र विधिः । जर्तिलैरारण्यतिलैर्मिश्रान् गवेधुकासक्तूनर्कपत्रेण जुहोति । किं कुर्वन् । अर्ककाष्ठेन सन्ततं क्षारयन् परिश्रित्सु पातयन् अर्कपत्रं दक्षिणकरेणादायार्ककाष्ठं वामेनादाय तेन पातनीयम् । वक्तुस्थाने अजादुग्धमिति केचित् । उदङ्मुखो नमस्त इत्यध्यायेन । तत्रानुवाकत्रयान्तेऽर्भकेभ्यश्च वो नमः इत्यत्र ( २६ क० ) जानुमात्रे परिश्रिति स्वाहाकारो विधेयः । पश्चानुवाकान्ते सुधन्वने चेत्यत्र ( ३६ क० ) नाभिमात्रे परिश्रिति स्वाहाकारः । नमोऽस्तु रुद्रेभ्य इति ( ६३ क० ) प्रत्यवरोहमन्त्राः तेभ्यः प्राक् मुखमात्रापरिश्रिति स्वाहाकारः । नमोऽस्त्विति कण्डिकात्रयेण प्रतिलोमं होमः ये दिवीति ( ६४ क० ) मुखमात्रे । येऽन्तरिक्षमिति ( ६५ क० ) नाभिमात्रे । ये पृथिव्यामिति ( ६६ क० ) जानुमात्रे । इति सूत्रार्थः ॥ नमस्ते । षोडशर्चोऽनुवाकः एकरुद्रदैवत्यः आद्या गायत्री तिस्रोऽनुष्टुभः तिस्रः पङ्क्तयः सप्तानुष्टुभः द्वे जगत्यौ । अध्यायस्य परमेष्ठिदेवप्रजापतय ऋषयः मा न इति द्वयोः [ १५—१६ क० ) कुत्सोऽपि ऋषिः ॥ हे रुद्र ! रुत् दुःखं द्रावयति रुद्रः यद्वा रु गतौ ये गत्यर्थास्ते ज्ञानार्थाः रवणं रुत् ज्ञानं राति ददाति रुद्रः ज्ञानम् भावे क्विप् तुगागमः रुत ज्ञानप्रदः यद्वा पापिनो नराम् दुःखभोगेन रोदयति रुद्रः । हे रुद्र ! ते तव मन्यवे क्रोधाय नमः नमो नमस्कारोऽस्तु उतो अपि च ते तवेषवे बाणाय नमः उतापि च ते तव बाहुभ्यां नमः । तव क्रोधबाणहस्ता अस्मद्वैरिष्वेव प्रसरन्तु नास्मास्वित्यर्थः ॥ १ ॥

**या ते॑ रुद्र शि॒वा त॒नूरघो॒राऽपा॑पकाशिनी । तया॑ नस्त॒न्वा॒ शन्त॑मया॒ गिरि॑शन्ता॒भि चा॑कशीहि ॥ २ ॥**

या ते या तव हे रुद्र शिवा शान्ता तनूः शरीरम् । अघोरा अविषमा । अपापकाशिनी । न पापकाशिनी अपापकाशिनी । पापमसुखं या प्रकाशयति सा पापप्रकाशिनी न पापप्रकाशिनी । तया नः अस्मान् तन्वा शन्तमया । सुखतमया सुखयितृतमया । अतिशयेन सुखयित्र्या । गिरिशन्त । गिरौ पर्वते कैलाशाख्ये अवस्थितः शं सुखन्तनोतीति गिरिशन्तः । यद्वा गिरिवाच्यवस्थितः सुखन्तनोतीति । यद्वा गिरौ मेघेऽवस्थितो वृष्टिद्वारेण सुखन्तनोतीति । तस्य सम्बोधनं हे गिरिशन्त । अभिचाकशीहि । अभिपश्य । सुखयितुमिति शेषः । चाकशीतिः पश्यतिकर्मा ॥ २ ॥

हे रुद्र ! या ते तवेदृशी तनूः शरीरं हे गिरिशन्त ! तया तन्वा नोऽस्मानभिचाकशीहि अधिपश्य । चाकशीतिः पश्यतिकर्मा ( निघ० ३, ११, ८ ) । कीदृशी तनूः शिवा शान्ता मङ्गलरूपा । यतोऽघोरा अविषमा सौम्या अत एवापापकाशिनी पापमसुखं काशयति प्रकाशयति पापकाशिनी न पापकाशिनी अपापकाशिनी या पुण्यफलमेव ददाति न पापफलमित्यर्थः । गिरौ कैलाशे स्थितः शं सुखं प्राणिनां तनोति विस्तारयति गिरिशन्तः गिरि वाचि स्थितः शं तनोतीति वा गिरौ मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा गिरौ शेते गिरिशः अमति गच्छति जानातीत्यन्तः सर्वज्ञः अम गतौ भजने शब्दे कर्त्तरि क्तः गिरिशश्चासावन्तश्च गिरिशन्तस्तत्सम्बुद्धिः शकन्ध्वादित्वात् पररूपम् । ( पा० ६, १, ९४ वा० २ ) । कीदृश्या तन्वा शन्तमया सुखतमया ॥ २ ॥

**यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत् ॥ ३ ॥**

यामिषुम् । याम् । इषुं काण्डम् । हे गिरिशन्त । गिरौ पर्वते ऽवस्थितः कैलाशाख्ये सुखन्तनोतीति गिरिशन्तः तस्य सम्बोधनम् । हे गिरिशन्त । हस्ते बिभर्षि धारयसि । अस्तवे

असितुं क्षेप्तुमित्यर्थः । शिवाङ्गिरित्र । गिरौ कैलाशे ऽवस्थितः त्रायते भक्तानिति गिरित्रः तस्य सम्बोधनं हे गिरित्र । तां कुरु । किञ्च । मा हिंसीः मा बधीः पुरुषम् । जगत् जङ्गमञ्च गवादि ॥ ३ ॥

हे गिरिशन्त ! त्वं यामिषुं बाणं हस्ते बिभर्षि धारयसि किं कर्तुम् । अस्तवे असु क्षेपणे तुमर्थे तवेपत्ययः असितुं शत्रून् क्षेप्तुमित्यर्थः । हे गिरित्र ! गिरौ कैलाशे स्थितो भूतानि त्रायत इति गिरित्रः तामिषुं शिवां कल्याणकारिणीं कुरु । किञ्च पुरुषं पुत्रपौत्रादिकं जगत् जङ्गममन्यदपि गवाश्वादिकं मा हिंसीः मा बधीः ॥ ३ ॥

**शिवेन वचसा त्वा गिरिशाच्छावदामसि । यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥ ४ ॥**

शिवेन वचसा । शिवेन वचनेन त्वा त्वां । गिरिश । गिरौ पर्वते कैलाशाख्ये शेते इति गिरिशः तस्य सम्बोधनम् हे गिरिश । अच्छावदामसि । अच्छाभेराप्तुमिति शाकपूणिः । इदन्तो मसि । तथा अभिवदाम । यथा येन प्रकारेण नः अस्माकं सर्वम् इत् । इच्छब्द एवार्थे । सर्वमेव जगत् जङ्गमादि । अयक्ष्मम् । यक्ष्मा व्याधिः । व्याधिरहितम् । सुमनाश्च शोभनमनस्कश्च असत् भूयात् ॥ ४ ॥

गिरौ कैलाशे शेते गिरिशः हे गिरिश ! शिवेन वचसा मङ्गलेन स्तुतिरूपेण वचनेन त्वा अच्छ त्वां प्राप्तुं वयं वदामसि वदामः प्रार्थयामहे । अच्छाभेराप्तुमिति शाकपूणिः ( निरु० ५, २८ ) संहितायां निपातस्य चेति दीर्घः । इदन्तो मसि । किं वदाम इत्यत आह नोऽस्माकं सर्वमित् सर्वमेव जगत् जङ्गमं नराः पश्वादि यथा येन प्रकारेण अयक्ष्मं नीरोगं सुमनाः शोभनमनस्कं च असत् भवति तथा कुर्विति शेषः । सुमनः । सुमनःशब्दे पुंस्त्वमार्षं जगद्विशेषणत्वात् । असादित्यत्र लेटोऽडाटावित्यट् इलोपः ॥ ४ ॥

**अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहीꣳश्च**

**सर्वाँन् जम्भयन् सर्वाश्च यातुधान्योऽधराचीः परा-सुव ॥ ५ ॥**

अध्यवोचत् । अधीत्युपरिभावमैश्वर्य्यं वा । अधिवदतु कश्चित्स्वकीयं पुरुषम् भगवान् रुद्रः । अधिवक्ता । ऐश्वर्य्येणैव यो वदितुं जानाति । प्रथमो दैव्योऽभिषक् । मुख्यो देवसम्बन्धी भिषक् वैद्यः । किमधिवदत्वित्यत आह । अहींश्च सर्वान् जम्भयन् । जभ जृभी गात्रविनामे सर्वान् सर्वप्रकारान् नाशयन् । सर्वाश्च यातुधान्यः । यातनाः दुःखं कष्टं तत्प्राणिषु धारयन्तीति यातुधान्यः राक्षसीः जम्भयन् अधराचीः अतोऽञ्चनाः कृत्वा । परासुव पराक्षिप । यद्वा । रुद्र एवोच्यते । अध्यवोचदधिवक्ता अधिवदतु ईश्वरो वक्ता । प्रथमो देवसम्बन्धी भिषक् वैद्यः । अहींश्च सर्वान् । जम्भयन् सर्वाश्च यातुधान्यः अधराचीः कृत्वा परासुव क्षिपतु ॥ ५ ॥

रुद्रो मामध्यवोचत् अधिवक्तु मां सर्वाधिकं वदतु तेनोक्ते मम सर्वाधिक्यं भवत्येवेत्यर्थः । कीदृशः अधिवक्ता आधिकवदनशीलः प्रथमः सर्वेषां मुख्यः पूज्यत्वात् । दैव्यः देवेभ्यो हितः । भिषक् रोगनाशकः स्मरणेनैव रोगनाशाद्भिषक्त्वम् । एवं परोक्षमुक्त्वा प्रत्यक्षमाह हे रुद्र ! सर्वा यातुधान्यः यातुधानीः राक्षसीः त्वं परासुव पराक्षिप अस्मभ्यो दूरीकुरु । किं कुर्वन् सर्वानहीन् सर्पव्याघ्रादीन् जम्भयन् विनाशयन् । कीदृशीर्यातुधान्यः अधराचीः अधरेऽधोदेशेऽञ्चन्ति ता अधराच्यः ताः अधोऽधोगमनशीलाः । चौ समुच्चये सर्पनाशराक्षसीक्षेपौ सदैव कुर्वित्यर्थः ॥ ५ ॥

**असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चैनᳪं रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाᳪं हेड ईमहे ॥ ६ ॥**

असौ यः आदित्यरूपेणात्र रुद्रः स्तूयते । अभिनवेन द-

न्दसः । पश्यन्ति च उदकहार्यः कुम्भदास्यः । आगोपालाङ्गनादिप्रसिद्ध इत्यर्थः । स दृष्टो दृष्टमात्रो मृडयाति । मृड सुखने । सुखयति । नः अस्मान् । अत्यन्तं मृदुहृदयतम इत्यभिप्रायः । यद्वा रुद्र एवोच्यते । ऋषिराह । असौ यः अवार्चीनं सर्पति अभिमुखं गच्छति । नीलग्रीवो नीलकण्ठः विलोहितः विगतकलुषभावः । उतैनं गोपा अदृश्रन्नुदहार्य इति गोपालाङ्गनादिप्रसिद्धिं दर्शयति । समञ्जसमन्यत् ॥ ७ ॥

योऽसावादित्यरूपोऽवसर्पति उदयास्तमयौ कुर्वन्निरन्तरं गच्छति । एनं गोपा उत गोपाला अपि वेदोक्तसंस्कारहीनाः अदृश्रन् पश्यन्ति । उदहार्यः उदकं हरन्ति ता उदहार्यः मन्थौदनेत्यादिना उदकस्योदादेशः जलहारिण्यो योषितोऽप्येनमदृश्रन् पश्यन्ति । आगोपालाङ्गनादिप्रसिद्ध इत्यर्थः । दृशो लुङि इरितो वेति च्लेरङ् रुगागमश्छान्दसः । कीदृशः नीलग्रीवः विषधारणेन नीला ग्रीवा कण्ठो यस्य अस्तमये नीलकण्ठ इव लक्ष्यः । विलोहितः विशेषेण रक्तः । स रुद्रो दृष्टः सन्नोऽस्मान्मृडयाति सुखयतु असौ मण्डलवर्ती रुद्र एव तपतीति ज्ञातः सुखं करोत्वित्यर्थः ॥ ७ ॥

नमो॑ऽस्तु नील॑ग्रीवाय सहस्राक्षाय॑ मी॒ढुषे॑ । अथो॒ ये अ॑स्य॒ सत्वा॑नो॒ऽहं तेभ्यो॑ऽकरं॒ नम॑ः ॥ ८ ॥

नमोऽस्तु । नमस्कारोऽस्तु नीलग्रीवाय नीलकण्ठाय सहस्राक्षाय बह्वक्षाय । मीढुषे मिह सेचने । सेक्त्रे तरुणाय । अविपरिणामीति स्तूयते । अथो अपि च सत्वानः सत्त्वभूता रुद्राः अहन्तेभ्यः अकरम् अकरवं करोति । नमस्कारम् ॥ ८ ॥

नीलग्रीवाय नीलकण्ठाय रुद्राय नमोऽस्तु नमस्कारो भवतु । कीदृशाय सहस्राक्षाय सहस्रमक्षीणि यस्य इन्द्रस्वरूपिणे । मीढुषे मिमेहेति मीढ्वान् तस्मै मिहि सेचने दाश्वान्साह्वान्मीढ्वांश्चेति क्वसन्तो निपातः सेक्त्रे वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः तरुणाय वा । अथो अपि चास्य रुद्रस्य ये सत्वानः प्राणिनो भृत्यास्तेभ्योऽहं नमो

नमस्कारमकरं करोमि कृञ् कृतौ शप् लङि उत्तमैकवचनम् ॥ ८ ॥

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ॥ ९ ॥

प्रमुञ्च । धन्वनः धनुषः त्वमुभयोः आर्त्न्योर्धनुरन्तयोः ज्यां गुणम् । याश्च ते तव हस्ते इषवः । परा ता भगवो वप । परावप । पराक्षिप । ताः हे भगवन् महदैश्वर्ययुक्त ॥ ९ ॥

हे भगवः ! भगं षड्विधमैश्वर्यमस्यास्तीति भगवान् । मतुवसो रुः सम्बुद्धौ छन्दसीति रुत्वम् । ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणेत्युक्तेः । हे भगवन् ! धन्वनः धनुष उभयोरार्त्न्योः द्वयोः कोट्योः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च दूरीकुरु याश्च ते तव हस्ते इषवः बाणाः ता इषूः परावप पराक्षिप ॥ ९ ॥

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ २॥ उत । अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ॥ १० ॥

विज्यं धनुः । विगतगुणं धनुः । कपर्दोऽस्यास्तीति कपर्दी । कपर्दोऽस्य जटाबन्धः । विशल्यः शल्यरहितः । बाणवान् इषुधिः । उत अपि च । अनेशन् णश अदर्शने । नष्टा । अस्य । या इषवः आभुः रिक्तः । अस्य निषङ्गधिः खड्गनिक्षेपः । निषज्यत इति निषङ्गः खड्ग उच्यते तद्यस्मिन् धीयते सनिषङ्गधिः । न्यस्तसर्वशस्त्र इत्यभिप्रायः ॥ १० ॥

कपर्दो जटाजूटोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुः विज्यं मौर्वीरहितमस्तु विगता ज्या यस्य तत् । उतापि बाणवान् बाणा अस्मिन् सन्तीति बाणवान् इषुधिः विशल्यो विफलोऽस्तु बाणाग्रगतो लोहभागः शल्यम् इषुधिर्निरस्त्रबाणोऽस्तु । अस्य रुद्रस्य या इषवः ता अनेशन् नश्यन्तु णश अदर्शने नशेरत एत्वम् सङि वेऽयेश्यम् पुषादित्वात् च्लेरङ् । अस्य रुद्रस्य निषङ्गधिः नि·

षज्यत इति निषङ्गः खड्गः स धीयतेऽस्मिन्निति निषङ्गधिः कोशः स आभुः रिक्तः खड्गरहितोऽस्तु । रुद्र अस्मान् प्रति न्यस्तसर्वशस्त्रोऽस्त्वित्यर्थः ॥ १० ॥

**या ते॑ हे॒तिर्मी॑ढुष्टम॒ हस्ते॑ ब॒भूव॑ ते॒ धनुः॑ । तया॒ऽस्मान् वि॒श्वत॒स्त्वम॑य॒क्ष्मया॒ परि॑ भुज ॥ ११ ॥**

या ते या तव हेतिरायुधम् हे मीढुष्टम मिह सेचने । सेक्तृतम युवतम परिणामानिषेधद्वारेण स्तुतिः । अस्मात्सर्वम्भवति । हस्ते बभूव । भूता । ते इति निरर्थकः । धनुरिति हेतिविशेषणम् । तया हेत्या अस्मान्विश्वतः सर्वतः त्वम् अयक्ष्मया यक्ष्मा व्याधिः व्याधिरहितया परिभुज परिपालय ॥११॥

अतिशयेन मीढ्वान्मीढुष्टमः तसौ मत्वर्थे इति भसंज्ञायां वसोः सम्प्रसारणम् षत्वष्टुत्वे हे मीढुष्टम सेक्तृतम वर्षुक । ते तव हस्ते या धनुः हेतिः धनूरूपमायुधं बभूव आस्ते एकं ते पदं पादपूरणाय । तया धनूरूपया हेत्या विश्वतः सर्वतोऽस्मान् परिभुज परिपालय भुजेर्विकरणव्यत्यये शप्रत्ययः । कीदृश्या तया अयक्ष्मया नास्ति यक्ष्मा रोगो यस्यास्तया निरुपद्रवया दृढया अनुपद्रव कारिण्या वा ॥ ११ ॥

**परि॑ ते॒ धन्व॑नो हे॒तिर॒स्मान् वृ॑णक्तु वि॒श्वतः॑ । अथो॒ य इ॑षु॒धिस्तवा॒रे अ॒स्मन्नि धे॑हि॒ तम् ॥ १२ ॥**

परि ते । परिवृणक्तु परिवर्जयतु । ते तव धन्वनः धनुषः सन्धिना हेतिः । आयुधं काण्डलक्षणम् अस्मान् विश्वतः सर्वतः । अथो अपिच । य इषुधिर्बाणवान् तव आरे दूरे अस्मत् असमत्तः निधेहि स्थापय तम् इषुधिम् ॥ १२ ॥

हे रुद्र ! ते तव धन्वनो हेतिः धनुः सम्बन्धि आयुधं विश्वतः सर्वतोऽस्मान् परिवृणक्तु त्यजतु मा हन्त्वित्यर्थः । वृजी वर्जने रुधादित्वात् । अथो अपि च यस्तव इषुधिस्तमस्मत्सकाशात् आरे

दूरे निधेहि अस्मत्तो दूरे स्थापय ॥ १२ ॥

**अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे । निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव ॥ १३ ॥**

अवतत्य । अवतार्यधनुः त्वं हे सहस्राक्ष । शतेषुधे । शतशब्दो बहुपर्यायः । निशीर्य्यशल्यानां मुखा । शातयित्वा फलानां मुखानि । शिवः शान्तः नः अस्माकं सुमनाः शोभनमनस्कश्च भव ॥ १३ ॥

सहस्रमक्षीणि यस्य शतमिषुधयो यस्य हे सहस्राक्ष ! हे शतेषुधे ! त्वं नोऽस्मान् प्रति शिवः शान्तः सुमनाः शोभनचित्तश्च भव अनुगृहाणेत्यर्थः । किं कृत्वा धनुरवतत्य अपज्यार्कं कृत्वा शल्यानां मुखा मुखानि बाणफलाग्राणि निशीर्य्य शीर्णानि कृत्वा शृ हिंसायाम् समासेऽनञ्पूर्वे क्त्वो ल्यप् ऋत इद्धातोः ॥ १३ ॥

**नमस्त आयुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ १४ ॥**

नमस्ते । नमोऽस्तु ते तव आयुधाय अनातताय अवतारिताय । धृष्णवे धर्षणशीलाय प्रगल्भाय । उभाभ्याम् । उत अपिच । ते तव नमोऽस्तु । बाहुभ्यां तव धन्वने । धनुषे नम इत्यनुवर्त्तते ॥ १४ ॥

हे रुद्र ! ते तवायुधाय नमोऽस्तु बाणाय नतिरस्तु । कीदृशाय अनातताय धनुष्यनारोपिताय ! धृष्णवे धर्षणशीलाय । धृषेः क्नुप्रत्ययः । रिपून् हन्तुं प्रगल्भाय । उतापि च ते तवोभाभ्यां बाहुभ्यां नमः । तव धन्वने धनुषेऽपि नमोऽस्तु तस्यापि विशेषणम् अनातताय अवतारितमौर्वीकाय ॥ १४ ॥

**मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ १५ ॥**

मा नः मा बधीः नः अस्माकम्महान्तं वृद्धः वयःप्रभृतिभिः । उत मानो अर्भकम् । अपिच मा बधीः नः अस्माकमर्भकमल्पम् । मा न उक्षन्तम् । मा बधीः नः अस्माकमुक्षन्तम् । उक्ष सेचने । सिञ्चन्तं तरुणमिति यावत् । उत मा न उक्षितम् । अपि च मा बधीः न अस्माकमुक्षितं सिक्तं गर्भस्थमित्यर्थः । मा नो बधीः पितरम् । मा बधीः नः अस्माकं पितरम् । आदरार्थं पुनर्वचनं महान्तमिति सिद्धत्वात् । मोत मातरम् । मा बधीः अपिच मातरम् । मा नः प्रियास्तन्वः रुद्र रीरिषः । रिषतिर्हिंसार्थः । मा रीरिषः मा हिंसीः नः अस्माकं प्रियास्तन्वः प्रियाणि शरीराणि पुत्रपौत्रलक्षणानि । हे रुद्र ॥ १५ ॥

हे रुद्र ! नोऽस्माकं महान्तं वृद्धं गुरुपितृव्यादिकं मा बधीः मा हिंसीः उतापि नोऽस्माकमर्भकं बालं मा बधीः नोऽस्माकमुक्षन्तं सिञ्चन्तं तरुणं मा बधीः उतापि नोऽस्माकमुक्षितं सिक्तं गर्भस्थं च मा बधीः नः पितरं जनकं मा बधीः उतापि नो मातरं जननीं मा बधीः महान्तमित्यनेन सिद्धयोर्मातापित्रोः पुनरादानमादरार्थम् । नोऽस्माकं प्रियाः वल्लभाः तन्वः तनूः शरीराणि मा रीरिषः मा हिंसीः रिषतिर्हिंसाकर्मा ॥ १५ ॥

**मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । मा नो वीरान् रुद्र भामिनो बधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६ ॥**

मा नः । मा रीरिषः । रिषतिर्हिंसाकर्मा । मा हिंसीः नः अस्माकम् तोके पुत्रविषये । मा हिंसीः तनये पौत्रविषये । मा हिंसीः नः अस्माकम् आयुषि विषयभूते । मा नो गोषु । मा हिंसीः नः अस्माकं गोषु विषयभूतासु । मा नो अश्वेषु । मा हिंसीः नः अस्माकमश्वेषु विषयभूतेषु । यद्वा विभक्तिव्यत्ययेन व्याख्यानम् । मा रीरिषः अस्माकं तोकं तनय-

मायुर्गा अश्वानिति । मा नो वीरान् रुद्रभामिनो बधीः । मा बधीः नः अस्माकं वीरान् हे रुद्रभामिनः । भामः क्रोधः । क्रोधसंयुक्तान् कः प्रत्युपकार इति चेत् । हविष्मन्तः । हविषा संयुक्ताः सदं सदाकालम् इच्छब्द एवार्थे । त्वामेवाह्वयाहे । आह्वयामो यागार्थम् । अनन्यशरणा वयमित्यभिप्रायः ॥ १६ ॥

हे रुद्र ! नोऽस्माकं तोके पुत्रे तनये पौत्रे मा रीरिषः मा हिंसीः न आयुषि जीवने मा हिंसीः नो गोषु धेनुषु मा रीरिषः नोऽश्वेषु तुरगेषु मा रीरिषः विभक्तिव्यत्ययो वा तोकं तनयमायुर्गा अश्वान्मा हिंसीः । भाम क्रोधे । भामिनः क्रोधयुतानपि नोऽस्माकं वीरान् भृत्यान्मा बधीः । क उपकार इति चेत् हविष्मन्तः हविर्युक्ताः सदमित् सदैव त्वां वयं हवा महे यागायाह्वयामः त्वदेकशरणा वयमिति भावः ॥ १६ ॥

**नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः ॥ १७ ॥**

नमो हिरण्यबाहवे । इत उत्तरं यजूंषि द्रापे अन्धसस्पते इति यावत् द्वयोर्द्वयोरुद्रयोश्च स्तुतिः । तिस्रोऽशीतयो रुद्राणाम् कण्डिकायां कण्डिकायामष्टावष्टौ रुद्राः । तेषां चोभयतो नमस्कारः अन्ये अन्यतरतो नमस्कारा अन्ये रुद्रास्ते वीरतरा अशान्ततरा यत उभयतो नमस्कारा इति । नमोऽस्तु हिरण्यालङ्कारभूषितबाहवे सेनान्ये च । सेनां नयतीति सेनानीः दिशां च पतये नमः । नमो वृक्षेभ्यो हरिकेशेभ्यः वृक्षरूपेभ्यो रुद्रेभ्यो नमस्कार इति । हरितानि पर्णानि केशा इव येषां लक्ष्यन्ते । पशूनाम्पतये नमः । नमः । शष्पिञ्जराय । नवप्ररू-

द्वानि तृणानि शष्पम् तद्वर्णाय । त्विषीमते । त्विषिर्दीप्तिः । पथीनां पतये नमः पथामिति प्राप्ते छान्दसम् । नमो हरिकेशाय लोहितकेशाय । उपवीतिने । यज्ञोपवीतिने पुष्टानां समृद्धानां पतये नमः ॥ १७ ॥

नमो हिरण्यबाहव इत्युत्तरं द्रापे इति ( ४७क० ) ऋक्पर्यन्तं सर्वाणि यजूंषि । तत्र नमो हिरण्यबाहव इत्यादीनां धनुष्कृद्भ्यश्च वो नम इत्यन्तानां ( ४६क० ) चत्वारिंशदधिकद्विशतसंख्याकानां यजुषां तावन्तो रुद्रा देवताः नमो वः किरिकेभ्य इत्यादिचतुर्णां ) ४६ क० ) अग्निवायुसूर्य्या देवताः रुद्राणां प्रधानभूताः ॥ छन्दांसि तु । चतुरक्षरं दैवी बृहती पञ्चाक्षरं दैवो पङ्क्तिः षडक्षरं यजुर्गायत्री सप्ताक्षरं यजुरुष्णिक् अष्टाक्षरं यजुरनुष्टुप् नवाक्षरं यजुर्बृहती दशाक्षरं यजुः पङ्क्तिः एकादशाक्षरं यजुस्त्रिष्टुप् द्वादशाक्षरं यजुर्जगती चतुर्दशाक्षरं सामोष्णिगेकमेव किरिकेभ्य इति । एतान्येवात्र छन्दांसि ॥ तद्रुद्रमध्ये केचनोभयतो नमस्काराः । पदद्वयात्पूर्वमेव पदोच्चारणात्पश्चाच्च नमः पदं येषां ते उभयतोनमस्काराः हिरण्यबाहवे इत्यादि श्वपतिभ्यश्च नम इत्यन्ताः । ( २८ क० ) ततोऽन्यतरतो नमस्काराः अन्यतरत आदावेव यजुर्द्वयस्य नमस्कारो येषां ते नमो भवायेत्यादि ( २८ क० ) प्रखिदते चेत्यन्ताः ( ४६ क० ) । इषुमद्भ्य इत्यादि ( २२ क० ) श्वपतिभ्यश्च इत्यन्ताः ( २८ क० ) प्रत्यक्षाः व इति युष्मच्छब्दयोगात् । इषुकृद्भ्य इति ( ४६ क० ) उभयतो नमस्काराः सभाभ्य इति ( २४ क० ) जातसंज्ञा रुद्राः । उभयतो नमस्काराः शान्ततमाः अन्यतरतो नमस्कारा घोरतराः ॥ तेषां मन्त्राणामर्थ उच्यते एकैकस्यां कण्डिकायामष्टावष्टौ रुद्राः । हिरण्यमाभरणरूपं बाह्वोर्यस्य स हिरण्यबाहुः स च सेनां नयतीति सेनानीः तस्मै रुद्राय नमः ॥ दिशां पतये पालकाय रुद्राय नमः ॥ हरयो हरितवर्णाः केशाः पर्णरूपा येषां ते हरिकेशास्तेभ्यो वृक्षेभ्यो वृक्षरूपरुद्रेभ्यो नमः ॥ पशूनां जीवानां पतये पालकाय रुद्राय नमः ॥ शष्पिञ्जराय शष्पं बालतृणं तद्वत्पिञ्जराय पीतरक्तवर्णाय टिलोपश्छान्दसः । त्विषिर्दीप्तिरस्यास्ति त्विषिमान् संहितायां त्विषिशब्दस्य दीर्घः । ईदृशाय रुद्राय नमः ॥ पथीनां मार्गाणां पा-

ळंकाय नमः पथिशब्दो मार्गवाची उत्तरदक्षिणतृतीया मार्गाः श्रुतावुक्ताः ॥ हरिकेशाय नीलवर्णकेशाय जरारहितायोपवीतिने मङ्गलार्थयज्ञोपवीतधारिणे रुद्राय नमः ॥ पुष्टानां गुणपूर्णानां नराणां पतये स्वामिने नमः ॥ १७ ॥

**नमो॑ बभ्लु॒शाय॑ व्या॒धिनेऽन्ना॑नां॒ पत॑ये॒ नमो॒ नमो॑ भ॒वस्य॑ हे॒त्यै जग॑तां॒ पत॑ये॒ नमो॒ नमो॑ रु॒द्राया॑तता॒यि॒ने॒ क्षेत्रा॑णां॒ पत॑ये॒ नमो॒ नमः॑ सू॒ताया॑हन्त्यै॒ वना॑नां॒ पत॑ये॒ नमः॑ ॥ १८ ॥**

नमो बभ्लुशाय बभ्रुवर्णाय । बभ्रुः कपिलः । व्याधिने व्यध्यतीति व्याधी । अन्नानां पतये नमः । नमो भवस्य हेत्यै । भवः संसारः हेतिरायुधम् । संसारस्य छेत्रे । जगतां पतये नमः जगतां जङ्गमानाम् । नमो रुद्राय आततायिने । आततेन धनुषा एतीत्याततायी । उद्यतायुधाय । क्षेत्राणां पतये नमः सूताय सूतोऽश्वसारथिः । अहन्त्यै अहन्त्रे नहि सूतः किञ्चिदपि हन्ति । वनानां पतये नमः ॥ १८ ॥

बभ्लुशः कपिलवर्णः यद्वा बिभर्त्ति रुद्रमिति बभ्लुर्वृषभस्तस्मिन् शेते स बभ्लुशः । विध्यति शत्रूनिति व्याधी तस्मै रुद्राय नमः ॥ अन्नानां पालकाय नमः ॥ भवस्य संसारस्य हेत्यै आयुधाय संसारनिवर्त्तकाय रुद्राय नमः ॥ जगतां पालकाय रुद्राय नमः ॥ आततेन विस्तृतेन धनुषा सह एति गच्छति आततायी उद्यतायुधस्तस्मै रुद्राय नमः ॥ क्षेत्राणां देहानां पालकाय नमः ॥ न हन्तीत्यहन्तिस्तस्मै अहन्त्रे सूताय सारथये तद्रूपाय रुद्राय नमः । सारथिर्नहन्ति ॥ वनानां पालकाय नमः ॥ १८ ॥

**नमो॒ रोहि॑ताय स्थ॒पत॑ये वृ॒क्षाणां॒ पत॑ये॒ नमो॒ नमो॑ भुव॒न्तये॑ वारिवस्कृ॒ताया॒ौष॑धीनां॒ पत॑ये॒ नमो॒ नमो॑ म॒न्त्रिणे॑ वाणि॒जाय॒ कक्षा॑णां॒ पत॑ये॒ नमो॒ नम॑ उ॒च्चैर्घो॑षायाक्र॒न्दय॑ते पत्ती॒नां पत॑ये॒ नमः॑ ॥ १९ ॥**

नमो रोहिताय । वर्णतो निर्देशः । स्थपतये । स्थपतिर्गृहादीनां चेता । चयनं करोति विश्वकर्मरूपेण वृक्षाणां पतये नमः । नमो भुवन्तये भुवं पृथिवीं तनोति विस्तारयतीति भुवन्तिः । वारिवस्कृताय । वरिवो धनं तत्कृतं येन स वारिवस्कृतः दीर्घत्वं छान्दसम् । ओषधीनां पतये नमः । नमो मान्त्रिणे । प्रसिद्ध एव मन्त्री वाणिजः । वाणिगेव वाणिजः कक्षाणां पतये नमः । नदीकक्षः पर्वतकक्षो वा नम उच्चैर्घोषाय महाशकाय । आक्रन्दयते आक्रन्दः प्रसिद्धः । पत्तीनां पतये नमः । हस्त्यश्वरथपदातिसंख्या पत्तिः ॥ १९ ॥

रोहितो लोहितवर्णः स्थपतिर्गृहादिकर्ता विश्वकर्मरूपेण तस्मै नमः ॥ वृक्षाणां पालकाय नमः ॥ भुवं तनोतीति भुवन्तिर्भूमण्डलविस्तारकः । वरिवो धनं करोतीति वरिवस्कृत् स एव वारिवस्कृतः स्वार्थेऽण् स्थानभोग्यकराय नमः ॥ ओषधीनां ग्राम्यारण्यानां पालकाय नमः ॥ आलोचनकुशलो मन्त्री वणिगेव वाणिजः व्यापारकर्ता तद्रूपाय नमः ॥ वनगता गुल्मवीरुधादयः कक्षास्तेषां पालकाय नमः ॥ उच्चैर्घोषो ध्वनिर्यस्य स उच्चैर्घोषः आक्रन्दयति रोदयतीत्याक्रन्दयन् युद्धे महाशब्दाय रिपुरोदकाय नमः ॥ पत्तीनां सेनाविशेषाणां पदातीनां वा पालकाय नमः । एको रथो गजश्चाश्वास्त्रयः पञ्च पदातयः । एष सेनाविशेषोऽयं पत्तिरित्यभिधीयत इति व्यासोक्तेः [ महाभार० १, २८९ ) ॥ १९ ॥

**नमः॑ कृत्स्नाय॒तया॒ धाव॑ते॒ सत्व॑नां॒ पत॑ये॒ नमो॒ नमः॒ सह॑मानाय निव्या॒धिन॑ आव्या॒धिनी॑नां॒ पत॑ये॒ नमो॒ नमो॑ निष॒ङ्गिणे॑ ककु॒भाय॑ स्ते॒नानां॒ पत॑ये॒ नमो॒ नमो॑ निचे॒रवे॑ परिच॒राया॑रण्यानां॒ पत॑ये॒ नमः॑ ॥ २० ॥**

नमः कृत्स्नायतया । कृत्स्नायततयेति प्राप्ते तकारलोपश्छान्दसः । कृत्स्नश्चासावायतश्च कृत्स्नायतं पूरितधनुः

तस्य भावः कृत्स्नायतता तया हेतुभूतया धावते । आकर्णपूरितधनुषेत्यर्थः । सत्वनां सत्वानां पतये नमः । सहमानाय अभिभवनशीलाय निव्याधिने । नितरां विध्यतीति निव्याधी आव्याधिनीनां पतये नमः आविध्यन्ति याः सेनारता आव्याधिन्यः । नमो निषङ्गिणे निषङ्गः खड्गम् । ककुभाय ककुभ इति महन्नामसु पठितम् । स्तेनानां पतये नमः स्तेनश्चौरः । नमो निचेरवे नितरां चेरतीति निचेरुः । परिचराय सर्वतो गन्त्रे । अरण्यानां पतये नमः ॥ २० ॥

कृत्स्नं समग्रमायतं विस्तृतम् अर्थाद्धनुः यस्य स कृत्स्नायतस्तस्य भावः कृत्स्नायतता तया आकर्णपूर्णधनुष्केन धावते युद्धे शीघ्रं गच्छते रुद्राय नमः शीघ्रगतो सरतेर्धावादेशः तलोपश्छान्दसः यद्वा कृत्स्नः सर्व आयो लाभो यस्य कृत्स्नायस्तस्य भावः कृत्स्नायता तया धावते सर्वलाभप्रापकत्वेन धावते यत्र गच्छति तत्र सर्वेष्टं लाभं प्राप्नोतीत्यर्थः ॥ सत्वन् शब्दः प्राणिवाची सत्वानः सात्विकाः शरणागताः प्राणिनस्तेषां पालकाय नमः ॥ सहतेऽरीनभिभवतीति सहमानः नितरां विध्यति हन्ति शत्रूनिति निव्याधी तस्मै नमः ॥ आ समन्ताद्विध्यन्तीत्याव्याधिन्यः शूरसेनास्तासां पालकाय नमः ॥ निषङ्गः खङ्गः सोऽस्यास्तीति निषङ्गी ककुभा महान् तस्मै रुद्राय नमः । ककुभ इति महन्नामसु ( निघ० ३, ३, १९ ) पठितम् ॥ स्तेना गुप्तचोरास्तेषां पालकाय नमः ॥ अपहारबुद्ध्या निरन्तरं चरतीति निचेरुः परित आपणवाटिकादौ हरणेच्छया चरतीति परिचरः तस्मै नमः ॥ अरण्यानां वनानां पतये नमः ॥ रुद्रो लीलया चोरादिरूपं धत्ते यद्वा रुद्रस्य जगदात्मकत्वाच्चोरादयो रुद्रा एव ध्येयाः यद्वा स्तेनादिशरीरे जीवेश्वररूपेण रुद्रो द्विधा तिष्ठति तत्र जीवरूपं स्तेनादिशब्दवाच्यं तदीश्वररुद्ररूपं लक्षयति यथा शाखाग्रं चन्द्रस्य लक्षकम् किं बहुना लक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुक्ताः ॥ २० ॥

नमो॒ वञ्च॑ते परि॒वञ्च॑ते स्ताय॒नां पत॑ये॒ नमो॒ नमो॑

निषङ्गिणं इषुधिमते तस्कराणां पतये नमो नमः सृकायिभ्यो जिघांꣳसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्योनक्तं चरद्भ्यो विकृन्तानां पतये नमः ॥ २१ ॥

नमो वञ्चते वञ्चतिर्गत्यर्थः । गन्त्रे परिवञ्चते सर्वतो गन्त्रे स्तायूनां पतये नमः । स्तायुश्चौर एव । नमो निषङ्गिने षड्गिने । इषुधिमते इषुधिरस्यास्तीति इषुधिमान् । तस्कराणां पतये नमः । तस्करश्चौर एव । नमः सृकायिभ्यः । सृक इति वज्रनामसु पठितम् । सृकेण गृहीतेन एतुं शीलमेषामिति सृकायिणः । जिघांसद्भ्यः हन्तुमिच्छद्भ्यः मुष्णतां पतये नमः । मुष स्तेये नमोऽसिमद्भ्यः । असिः खड्गं तत्संयुक्तेभ्यः नक्तं चरद्भ्यः रात्रौ गच्छद्भ्यः विकृन्तानां पतये नमः । विकर्तनशीला विकृन्ताः ॥२१॥

वञ्चति प्रतारयति वञ्चन् परि सर्वतो वञ्चति परिवञ्चन् तस्मै नमः । स्वामिन आप्तो भूत्वा व्यवहारे कुत्रचित्तदीयं धनमपह्नुते तद्वञ्चनम् सर्वव्यवहारे धनापह्नवः परिवञ्चनम् ॥ गुप्तचोरा द्विविधाः । रात्रौ गृहे खातादिना द्रव्यहर्तारः । स्वीया एवाहर्निशमज्ञाता हर्तारश्च । पूर्वे स्तेनाः उत्तरे स्तायवः तेषां पतये नमः॥ निषङ्गः खड्गो बाणो वा सोऽस्यास्तीति निषङ्गी इषुधिर्बाणाधारो ऽस्यास्तीतीषुधिमान् तदुभयरूपाय नमः ॥ तस्कराः प्रकटचोरा स्तेषां पतये नमः ॥ सृक इति वज्रनाम ( निघ० २, २० , ६ ) सृकेन वज्रेण सह यन्ति गच्छन्तीत्येवंशीलाः सृकायिणः अत एव शत्रून् हन्तुमिच्छन्ति जिघांसन्ति जिघांसन्तीति जिघांसन्तः हन्तेः सन्नन्ताच्छतृप्रत्ययः तेभ्यो रुद्रेभ्यो नमः ॥ क्षेत्रादिषु धान्यापहर्तारो मुष्णन्तस्तेषां पालकाय नमः ॥ असयः खड्गाः सन्ति येषां तेऽसिमन्तः नक्तं रात्रौ चरन्ति ते नक्तं चरन्तः खड्गं धृत्वा रात्रौ वीथीनिर्गतप्राणिघातकास्तेभ्यो रुद्रेभ्यो नमः ॥ विकृन्तन्ति छिन्दन्ति ते विकृन्ताः छित्त्वापहरन्तस्तेषां पतये नमः ॥ २१ ॥

नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो

नम॑ इषुम॒द्भ्यो॑ धन्वा॒यिभ्य॑श्च वो॒ नमो॒ नम॑ आतन्वा॒नेभ्यः॑ प्रति॒दधा॑नेभ्यश्च वो॒ नमो॒ नम॑ आ॒यच्छ॑द्भ्योऽस्य॑द्भ्यश्च वो॒ नम॑: ॥ २२ ॥

नमः उष्णीषिणे उष्णीषोऽस्यास्तीत्युष्णीषी । उष्णीषः शिरोवेष्टनम् । गिरिचराय । गिरौ पर्वते चरतीति गिरिचरः । कुलुञ्चानां पतये नमः कुत्सितं लुञ्चति कुलानि वा लुञ्चतीति कुलुञ्चाः । नम इषुमद्भ्यः धन्वायिभ्यश्च वो नमः । व्याख्या-बहुवचनधर्मः प्रदृश्यते । नमोऽस्तु ये यूयमिषुमन्तस्तेभ्य इषुमद्भ्यः । धनुषा गृहीतेन एतुं शीलमेषामिति धन्वायिनः । वा-संज्ञायामिति धनुषो धन्वन् धन्वायिभ्यः । चकारः समुच्चयार्थीयः । वः युष्मभ्यं नमः । नमः आतन्वानेभ्यः । उत्क्षिप्तज्याकानि धनूंषि कुर्वाणेभ्यः । प्रतिदधानेभ्यश्च वो नमः प्रतिदधानाः सन्धानं कुर्वाणाः नमः आयच्छद्भ्यः । आकर्षद्भ्यो धनूंषि । अस्यद्भ्यश्च वो नमः । असु क्षेपणे काण्डानि क्षिपद्भ्यः ॥ २२ ॥

उष्णीषं शिरोवेष्टनमस्यास्तीत्युष्णीषी उष्णीषेण शिरः प्रावृत्य ग्रामेऽपहर्तुं प्रवृत्तः गिरौ चरति गिरिचरः अध्वन्यानां वस्त्राद्यपहर्तुं पर्वतादिविषमस्थानचारी तदुभयरूपाय रुद्राय नमः ॥ कुं भूमिक्षेत्रगृहादिरूपां लुञ्चन्ति हरन्ति कुलुञ्चाः कुत्सितं लुञ्चन्ति वा तेषां पालकाय नमः ॥ इषवो विद्यन्ते येषां ते इषुमन्तः जनान् भीषयितुं बाणधारिणस्तेभ्यो नमः धन्वना धनुषा सह यान्ति गच्छन्ति धन्वायिनः हे रुद्राः! धनुर्धारिभ्यो वो युष्मभ्यं नमः । चकारो मन्त्रभेदज्ञापनार्थः एवमग्रेऽपि ॥ आतन्वन्त्यारोपयन्ति ज्यां धनुषीत्यातन्वानास्तद्रूपेभ्यो नमः ॥ प्रतिदधते सन्दधते बाणं धनुषीति सन्दधानास्तेभ्यो वो युष्मभ्यं नमः ॥ आयच्छन्त्याकर्षन्ति धनूंषि ते आयच्छन्तः तेभ्यो नमः ॥ अस्यन्ति क्षिपन्ति बाणानित्यस्यन्तस्तेभ्यो नमः । असु क्षेपणे दिवादिः ॥ २२ ॥

**नमो॑ विसृजद्भ्यो॒ विध्य॑द्भ्यश्च वो॒ नमो॒ नमः॑ स्व॒पद्भ्यो॒ जाग्रद्भ्यश्च वो॒ नमो॒ नमः॒ शया॑नेभ्य॒ आसी॑नेभ्यश्च वो॒ नमो॒ नम॒स्तिष्ठ॑द्भ्यो॒ धाव॑द्भ्यश्च वो॒ नमः॑ ॥ २३ ॥**

नमो विसृजद्भ्यः । काण्डानि क्षिपद्भ्यः योद्धारं प्रति । विध्यद्भ्यश्च वो नमः । विध्यन्ति ताडयन्ति ये शरैस्तेभ्यो विध्यद्भ्यः । नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः । नमः शयानेभ्य आसीनेभ्यश्च वो नमः । नमः तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः । शतृशानजन्तान्येतानि पदानि ऋजून्येव ॥२३॥

विसृजन्ति विमुञ्चन्ति बाणानरिष्विति विसृजन्तः तेभ्यो नमः ॥ विध्यन्ति ताडयन्ति शत्रूनिति विध्यन्तस्तेभ्यो वो नमः मुक्तस्य लक्ष्ये प्रवेशो वेधः ॥ स्वपन्ति ते स्वपन्तः स्वप्नावस्थामनुभवन्तस्तेभ्यो नमः ॥ जाग्रति ते जाग्रतः जाग्रदवस्थावन्तस्तेभ्यो वो नमः ॥ शेरते ते शयानाः सुषुप्त्यवस्थावन्तस्तेभ्यो नमः ॥ आसते ते आसीना उपविशन्तस्तेभ्यश्च वो नमः ॥ तिष्ठन्ति ते तिष्ठन्तो गतिनिवृत्तास्तेभ्यो नमः ॥ धावन्ति ते धावन्तो वेगवद्गतयस्तेभ्यश्च वो नमः ॥ २३ ॥

**नमः॑ स॒भाभ्यः॑ स॒भाप॑तिभ्यश्च वो॒ नमो॒ नमोऽश्वे॒भ्योऽश्व॑पतिभ्यश्च वो॒ नमो॒ नम॑ आव्या॒धिनी॑भ्यो वि॒विध्य॑न्तीभ्यश्च वो॒ नमो॒ नम॒ उग॑णाभ्यस्तृꣳह॒तीभ्यश्च वो॒ नमः॑ ॥ २४ ॥**

इत उत्तरं जातेभ्यो जुहोति । जाता जातिविशेषाः त इहोच्यन्ते रुद्राद्वैतप्रतिपादनाय । रुद्रलोके किलेत्थम्भूता रुद्राः सन्ति । तदुक्तम् । अथो एवꣳ हैतानि रुद्राणां जातानि । नमः सभाभ्यः सभादिभ्यः रुद्रदृष्टिः कर्त्तव्येति तात्पर्यार्थः । सभापतिभ्यश्च वो नमः । नमः अश्वेभ्यः अश्वपतिभ्यश्च वो नमः ।

नमः आव्याधिनीभ्यः आविध्यन्तीत्याव्याधिन्यः सेनाः विविध्यन्तीभ्यश्च वो नमः। विविधं विध्यन्तीति विग्रहे सेना एवाभिधेया। नम उगणाभ्यः। उदुपसर्गस्यान्त्यलोपः। उद्गूर्णगणा समूहा यासु सेनासु ता एवमुच्यन्ते। तृꣳहतीभ्यश्च वो नमः। तृंहतिर्हिंसाकर्मा। हिंसन्तीभ्यः॥ २४॥

अथ जातसंज्ञा रुद्रा रुद्रलोके सन्ति ते कथ्यन्ते रुद्राद्वैतप्रतिपादनाय। अथो एवꣳहैतानि रुद्राणां जातानीति (९, १, १, १९,) श्रुतेः। सभारूपेभ्यो रुद्रेभ्यो नमः सभादिषु रुद्रदृष्टिः कर्त्तव्येति तात्पर्य्यम्॥ सभायाः पतिभ्यो वो नमः॥ अश्वास्तुरगास्तेभ्यो नमः॥ अश्वानां पतिभ्यो वो नमः॥ आ समन्ताद्विध्यन्तीत्याव्याधिभ्यो देव्यः सेना वा ताभ्यो नमः॥ विशेषेण विध्यन्ति विविध्यन्त्यस्ताभ्यो वो नमः॥ उत्कृष्टा गणा भृत्यसमूहा यासां ता उगणाः उपसर्गान्त्यलोपः पृषोदरादित्वात् ( पा० ६, ३, १०९ ) ब्राह्मयाद्या मातरस्ताभ्यो नमः॥ तृंहन्ति घ्नन्ति तृंहत्यः तृहि हिंसायां हन्तुं समर्था दुर्गादयस्ताभ्यो वो नमः॥ २४॥

नमो॑ ग॒णेभ्यो॑ ग॒णप॑तिभ्यश्च॒ वो॒ नमो॒ नमो॒ व्राते॑भ्यो॒ व्रात॑पतिभ्यश्च॒ वो॒ नमो॒ नमो॒ गृत्से॑भ्यो॒ गृत्स॑पतिभ्यश्च॒ वो॒ नमो॒ नमो॒ विरू॑पेभ्यो॒ वि॒श्वरू॑पेभ्यश्च॒ वो॒ नमः॑॥ २५॥

नमो गणेभ्यः। गणः समूहः। गणपतिभ्यश्च वो नमः। नमो व्रातेभ्यः। व्रातमर्हन्ति व्राता गणविशेषाः। व्रातपतिभ्यश्च वो नमः नमो गृत्सेभ्यः। गृत्सो मेधावी। गृत्सपतिभ्यश्च वो नमः। नमो विरूपेभ्यः निकृष्टरूपेभ्यः नानारूपेभ्यो वा। विश्वरूपेभ्यश्च वो नमः। विश्वरूपाः सर्वरूपाः॥ २५॥

देवानुचरा भूतविशेषा गणास्तेभ्यो नमः॥ गणानां पालका गणपतयस्तेभ्यो वो नमः॥ व्राता नानाजातीयानां सङ्घास्तेभ्यो नमः॥ व्रातपालका व्रातपतयस्तेभ्यो वो नमः॥ गृध्यन्ति वाञ्छन्ति

गृत्सा विषयलम्पटाः गृत्सा मेधाविनो वा तेभ्यो नमः ॥ गृत्सपतयस्तत्पालकास्तेभ्यो वो नमः विकृतं रूपं येषां ते विरूपा नग्नमुण्डजटिलादयस्तेभ्यो नमः । विश्वं सर्वं नानाविधं रूपं येषां ते विश्वरूपास्तुरङ्गवदनहयग्रीवादयस्तेभ्यो वो नमः ॥ २५ ॥

**नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्यो अरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमो महद्भ्यो अर्भकेभ्यश्च वो नमः॥२६॥**

नमः सेनाभ्यः । सेना चमूः सेनानिभ्यश्च वो नमः । सेनां नयतीति सेनानीः नमो रथिभ्यः । रथा येषां सन्ति ते रथिनः । अरथेभ्यश्च वो नमः अरथा रथवर्जिता योद्धारः । नमः क्षत्तृभ्यः रथानामधिष्ठातारः क्षत्तारः । संग्रहीतृभ्यश्च वो नमः संग्रहीतारः सारथयः । नमो महद्भ्यः महान्तो जातिविद्यादिभिरुत्कृष्टाः । अर्भकेभ्यश्च वो नमः अर्भका अल्पकाः प्रमाणादिभिः ॥ २६ ॥

सेनारूपेभ्यो नमः॥ सेनां नयन्ति ते सेनान्यः सेनापतयस्तद्रूपेभ्यो वो नमः । ह्रस्वश्छान्दसः॥ रथाः सन्ति येषां ते रथिनः तेभ्यो नमः ॥ नास्ति रथो येषां ते अरथास्तेभ्यो वो नमः । क्षि निवासगत्योः तुदादिः क्षियन्ति निवसन्ति रथेष्विति क्षत्तारः यद्वा क्षिप प्रेरणे क्षिपन्ति प्रेरयन्ति सारथीनिति क्षत्तारः रथाधिष्ठातारः नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृमातृजामातृपितृदुहितृ इत्यौणादिकसूत्रेण तृच्प्रत्ययान्तो निपातः तेभ्यो नमः ॥ संगृह्णन्त्यश्वानिति संग्रहीतारः सारथयः ण्वुल्तृचाविति तृच् । तेभ्यो नमः ॥ महान्तो जातिविद्यादिभिरुत्कृष्टास्तेभ्यो नमः ॥ अर्भकाः प्रमाणादिभिरल्पाः तेभ्यो नमः ॥ २६ ॥

**नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः पु-**

**ञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥ २७ ॥**

नमः तक्षभ्यो रथकारेभ्यश्च वो नमः। रथकारो रथं करोतीति तक्ष्णो विशेष एव। नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः कुलालाः कुम्भकाराः कर्मारा लोहकाराः। नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमः। निषादा मात्सिकाः पुञ्जिष्ठा जात्यन्तरसम्बद्धाः पुल्कसादयः नमः श्वनिभ्यः। शुनो नयन्तीति श्वन्यः तेभ्यः श्वनिभ्यः। नयतेर्ह्रस्वत्वं छान्दसम् श्वगणिका उच्यन्ते। मृगयुभ्यश्च वो नमः इदंयुरिदङ्कामयमान इति यास्कः। मृगान् कामयन्तीति मृगयवः पापर्द्धिकाः तेभ्यो मृगयुभ्यः ॥ २७ ॥

तक्षाणः शिल्पजातयस्तेभ्यो नमः॥ रथं कुर्वन्तीति रथकाराः सूत्रधारविशेषास्तेभ्यो वो नमः॥कुलालाः कुम्भकारास्तेभ्यो नमः॥ कर्मारा लोहकारास्तेभ्यो वो नमोऽस्तु॥ निषादा गिरिचरा मांसाशिनो भिल्लास्तेभ्यो नमः॥ पुञ्जिष्ठाः पक्षिपुञ्जघातकाः पुक्कसादयस्तेभ्यो वो नमः॥ शुनो नयन्ति ते श्वन्यः श्वकण्ठबद्धरज्जुधारकाः श्वगणिनः नयतेर्ह्रस्व आर्षः तेभ्यो नमः॥ मृगान् कामयन्ते ते मृगयवः। इदंयुरिदंकामयमान इति यास्कोक्तेः ( निरु० ६, ३१ ) सुप आत्मनः क्यजिति क्यच् क्याच्चि चेति प्राप्तस्येत्वस्य न छन्दस्यपुत्रस्येति निषेधः। मृगयवो लुब्धकास्तेभ्यो वो नमः॥२७॥

**नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च ॥ २८ ॥**

नमः श्वभ्यः श्वपतिभ्यश्च वो नमः इत्युभयतो नमस्काराः समाप्ताः। नम इषुमद्भ्यो धन्वायिभ्यश्च वो नम इत्यारभ्य ये वः शब्दा अतिक्रान्ताः ते पूजात्वचना वा न युष्मदादेशाः।

इत उत्तरं रुद्रनामानि नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च । नमो नीलग्रीवाय च शितिकण्ठायच नीलग्रीवः कृष्णग्रीवः । शितिकण्ठः श्वेतकण्ठः ॥ २८ ॥

श्वानः कुक्कुरास्तद्रूपेभ्यो नमः ॥ शुनां पतयः श्वपतयः श्वपाकास्तेभ्यो वो युष्मभ्यं नमः । श्वपतयः किरातवेषस्य रुद्रस्यानुचराः ॥ नम इषुमद्भ्यो धन्वायिभ्य इत्यारभ्य ( २२ क० ) ये वः शब्दास्ते पूजावाचका वा न युष्मदादेशाः ॥ इत्युभयतो नमस्कारमन्त्राः समाप्ताः । अथ नमस्कारोपक्रमा नाम मन्त्रा उच्यन्ते ॥ भवन्त्युत्पद्यन्ते जन्तवोऽस्मादिति भवस्तस्मै नमः ॥ रुत् दुःखं द्रावयति नाशयति रुद्रस्तस्मै नमः ॥ शृणाति हिनस्ति पापमिति शर्वस्तस्मै नमः ॥ पशून् अज्ञान् पाति रक्षतीति पशुपतिस्तस्मै नमः ॥ विषभक्षणेन नीला नीलवर्णा ग्रीवा कण्ठैकदेशो यस्य स नीलग्रीवस्तस्मै नमः ॥ शितिः श्वेतः कण्ठो नीलातिरिक्तभागो यस्य स शितिकण्ठस्तस्मै नमः । शिती धवलमेचकौ ॥ २८ ॥

नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥ २९ ॥

नमः कपर्दिने च व्युप्तकेशाय च । कपर्दी जटामुकुटधारी व्युप्ता मुण्डिताः केशा यस्य व्युप्तकेशः नमः सहस्राक्षाय च शतधन्वने च बह्वक्षाय बहुधनुष्काय च । नमो गिरिशयाय च शिपिविष्टाय च गिरौ शेत इति गिरिशयः । शिपिविष्टः शिप इव निर्वेष्टितः खलतिरित्यभिधेयः प्रजननवत् वेष्टनरहितः । यद्वा उदितमात्र आदित्य उच्यते शिपिशब्देन च बालरश्मय उच्यन्ते । नमो मीढुष्टमाय चेषुमते च । मीढुष्टमः सेक्तृतमः युवा परिणामरहित इत्यर्थः । इषुमान् इषुसंयुक्तः ॥ २९ ॥

कपर्दो जटाजूटोऽस्यास्तीति कपर्दी तस्मै नमः ॥ पाशुपतादिवेषेण ॥ चकाराः सर्वे समुच्चयार्था ज्ञेयाः । व्युप्ताः मुण्डिताः केशा

यस्य स व्युप्तकेशस्तस्मै नमः । यत्यादिरूपेण मुण्डितत्वम् ॥ सहस्रमक्षीणि यस्य सहस्राक्षस्तस्मै इन्द्ररूपाय नमः ॥ शतं धनूंषि यस्य शतधन्वा धनुषश्चेत्यनङ् तस्मै बहुधनुर्धारिणे नमः ॥ गिरौ कैलाशे शेतेऽसौ गिरिशयस्तस्मै नमः ॥ शिपिविष्टाय विष्णुरूपाय विष्णुः शिपिविष्ट इति श्रुतेः यद्वा शिपिषु पशुषु विष्टः प्रविष्टः पशवो वै शिपिरिति श्रुतेः सर्वप्राणिष्वन्तर्यामितया स्थित इत्यर्थः यद्वा यज्ञो वै शिपिः यज्ञेऽधिदेवतात्वेन प्रविष्टः शिपिरादित्यो वा मण्डलाधिष्ठातेत्यर्थः तस्मै नमः । शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवतीति यास्कोक्तेः ( निरु० ५, ८ ) ॥ अतिशयेन मीढ्वान् मेघरूपेण सेक्ता मीढुष्टमः तस्मै नमः ॥ इषवो बाणाः सन्त्यस्येतीषुमान् तस्मै नमः ॥ २९ ॥

**नमो॑ ह्रस्वाय॑ च वाम॒नाय॑ च नमो॑ बृह॒ते च॒ वर्षी॑यसे च॒ नमो॑ वृ॒द्धाय॑ च स॒वृधे॑ च॒ नमोऽग्र्या॑य च प्रथ॒माय॑ च ॥ ३० ॥**

नमो ह्रस्वाय च वामनाय च । रूपतो नमस्काराः । ह्रस्वो लघुप्रमाणः वामनः सङ्कुचितावयवः । नमो बृहते च वर्षीयसे च । बृहते महते वर्षीयसे वृद्धतराय च । नमो वृद्धाय च सवृद्धे च वृद्धः प्रसिद्धः सवृधः तेन समानवयाः नमोऽग्र्याय च प्रथमाय च अग्र्ये भवोऽग्र्यः प्रथमो मुख्यः ॥ ३० ॥

रूपतो नमस्काराः ॥ ह्रस्वोऽल्पशरीरस्तस्मै नमः ॥ वामनः सङ्कुचितावयवस्तस्मै नमः ॥ बृहन् प्रौढाङ्गस्तस्मै नमः ॥ वर्षीयानतिशयेन वृद्धः प्रस्थस्फेत्यादिना वर्षादेशः तस्मै नमः ॥ वृद्धो वयसाधिकस्तस्मै नमः ॥ वर्धन्ते विद्याविनयादिगुणैस्ते वृधः पण्डिताः क्विप् तैः सह वर्त्तत इति सवृत् तस्मै नमः ॥ जगतामग्रे भवोऽग्र्यस्तस्मै नमः ॥ अग्राद्यत् ॥ सर्वत्र मुख्यः प्रथमस्तस्मै नमः ॥ ३० ॥

**नम॑ आ॒शवे॑ चाजि॒राय॑ च॒ नमः॒ शीघ्र्या॑य च॒ शीभ्या॑य च॒ नम॑ ऊ॒र्म्या॑य चावस्व॒न्या॑य च॒ नमो॑ नादे॒याय॑ च द्वी॒प्याय॑ च ॥ ३१ ॥**

नम आशवे चाजिराय च शीघ्रनामनी । आशुरध्वनो व्यापारः । अजिरः । अज गतिक्षेपणयोः । अजतीत्याजिरः । नमः शीघ्र्याय च शीभ्याय च । शीघ्रशीभशब्दौ क्षिप्रनामनी एवं तत्र भव इति छान्दसो यत्प्रत्ययः अधिष्ठातृदेवतावचनः । उपरितनेष्वेवमेव योज्यम् । नम ऊर्म्याय चावस्वन्याय च । ऊर्मिर्जलकल्लोलः । अवाचीनमुदकस्य गच्छतः । स्वनो ध्वनिः अवस्वनः नमो नादेयाय च द्वीप्याय च । नद्यां भवः द्वीपे भवः द्वीपो नद्या मध्ये उदकरहितः प्रदेशः ॥ ३१ ॥

अश्नुते जगद्व्याप्नोतीत्याशुस्तस्मै नमः । अजति गच्छतीत्यजिरो गतिशीलस्तस्मै नमः । शीघ्रे वेगवद्वस्तुनि भवः शीघ्र्यः । तत्र भव इति यत्सर्वत्र ॥ शीभृ कत्थने शीभते कथ्यते इति शीभ आत्मश्लाघी पचाद्यच् तत्र भवः शीभ्यः शीभो जलप्रवाहो वा शीभः क्षिप्रो वा तत्र भवाय नमः ॥ ऊर्मिषु कल्लोलेषु भव ऊर्म्यः तस्मै नमः ॥ अवगतः स्वनो यस्मात्तदवस्वनं स्थिरजलम् यद्वा अव नीचैर्गर्तादौ स्वनोऽवस्वनस्तत्र भवाय ॥ नद्यां भवो नादेयस्तस्मै नमः । स्त्रीभ्यो ढक् ॥ द्वीपे जलान्तर्वर्त्तिनिर्जलभूमौ भवो द्वीप्यस्तस्मै नमः ॥ ३१ ॥

**नमो॑ ज्ये॒ष्ठाय॑ च कनि॒ष्ठाय॑ च॒ नम॑: पूर्व॒जाय॑ चापर॒जाय॑ च॒ नमो॑ मध्य॒माय॑ चापग॒ल्भाय॑ च॒ नमो॑ जघ॒न्या॒य च बुध्न्या॒य च॒ ॥ ३२ ॥**

नमो ज्येष्ठाय च कनिष्ठाय च वयोऽवस्थाभिप्रायाः षट् नमस्काराः । नमः पूर्वजाय चापरजाय च । पूर्वो जातः पूर्वजः अपरो जातः अपरजः । नमो मध्यमाय चापगल्भाय च मध्ये भवो मध्यमः अपगतगर्भः अपगल्भः । एकगर्भान्तरितः । नमो जघन्याय च बुध्न्याय च । जघनः पश्चाद् भागः बुध्नमादिः तत्र भवः । इति द्वादश यत्प्रत्ययान्ता रुद्राः ॥ ३२ ॥

वयोऽवस्थाविशेषाभिधायकाः षट् नमस्काराः ॥ अत्यन्तं प्रशस्यो ज्येष्ठस्तस्मै नमः । ज्य चेति प्रशस्यशब्दस्येष्ठनि ज्यादेशः ॥ अत्यन्तं युवाल्पो वा कनिष्ठस्तस्मै नमः । युवाल्पयोः कनन्यतरस्यामिति कनादेशः ॥ पूर्वं जगदादौ हिरण्यगर्भरूपेणोत्पन्नः पूर्वजस्तस्मै नमः ॥ अपरस्मिन् काले प्रलये कालाग्निरूपेण जातोऽपरजस्तस्मै नमः ॥ मध्ये सृष्टिसंहारान्तर्देवतिर्यगादिरूपेण भवो मध्यमस्तस्मै नमः मध्यान्मः ॥ गल्भ धार्ष्ट्ये गल्भनं गल्भो धार्ष्ट्यम् अपगतो गल्भो यस्यासावपगल्भोऽप्रगल्भोऽव्युत्पन्नेन्द्रियस्तद्रूपाय नमः । एकगर्भान्तरितोऽपगल्भो वा ॥ जघनं गवादीनां पश्चाद्भागस्तत्र भवो जघन्यस्तस्मै नमः ॥ बुध्ने वृक्षादिमूले भवो बुध्न्यस्तस्मै नमः ॥ ३२ ॥

**नमः सोभ्याय च प्रतिसर्य्याय च नमो याम्याय च क्षेम्याय च नमः श्लोक्याय चावसान्याय च नम उर्वर्य्याय च खल्याय च ॥ ३३ ॥**

नमः सोभ्याय च प्रतिसर्य्याय च । सोभ इति गन्धर्वनगरं सुभमिति वा । अभिचारकर्मसरः प्रतिसरः प्रत्याभिचारः । नमो याम्याय च क्षेम्याय च । नमः श्लोक्याय चावसान्याय च श्लोकःशब्दः । अवसानं समाप्तिः नम उर्वर्य्याय खल्याय च । उर्वरःसीतयोरन्तरं सर्वसस्याढ्याय । सीतयोर्लाङ्गलमार्गद्वयोरन्तरम् । खलो धान्यखलः ॥ ३३ ॥

सोभं गन्धर्वनगरं तत्र भवः सोभ्यः यद्वा उभाभ्यां पुण्यपापाभ्यां सहितः सोभो मनुष्यलोकः । पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकमित्याथर्वणश्रुतेः ( प्रश्नोपनिष० २, १ ) । तत्र भवः सोभ्यस्तस्मै नमः ॥ प्रतिसरो विवाहोचितं हस्तसूत्रमभिचारो वा तत्र भवः प्रतिसर्य्यः तस्मै नमः ॥ आहुः प्रतिसरं हस्तसूत्रे माल्यस्य मण्डने । व्रणशुद्धौ चमूपृष्ठे नियोज्यारक्षके कर्णे । मन्त्रभेदेऽपीति विश्वः ॥ यमे भवो याम्यः पापिनां नरकार्त्तिदाता तस्मै नमः ॥ क्षेमे कुशले भवः क्षेम्यस्तस्मै नमः ॥

श्लोका वैदिकमन्त्रा यशो वा तत्र भवः श्लोक्यस्तस्मै नमः ॥ अवसानं समाप्तिर्वेदान्तो वा तत्र भवोऽवसान्यस्तस्मै नमः ॥ उर्वरा सर्वशस्याढ्या भूः तत्र धान्यरूपेण भव उर्वर्यस्तस्मै नमः ॥ खलो धान्यविवेचनदेशः तत्र भवः खल्यस्तस्मै नमः । खलः कल्के भुवि धाने क्रूरे कर्णे जयेऽधमे इत्युक्तेः ॥ ३३ ॥

**नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च ॥ ३४ ॥**

नमो वन्याय च कक्ष्याय च । वनं वृक्षसमूहः उदकं वा कक्षो नदीकक्षः पर्वतकक्षो वा । नमः श्रवाय च प्रतिश्रवाय च । श्रवःशब्दः प्रतिश्रवः प्रतिशब्दः । नमः आशुषेणाय चाशुरथाय च । आशुसेनः शीघ्रसेनः आशुरथः शीघ्ररथः । नमः शूराय चावभेदिने च । शूरः शवतेः । अवाचीनं भेत्तुं शीलमस्येत्यवभेदी ॥ ३४ ॥

वने वृक्षादिरूपेण भवो वन्यस्तस्मै नमः। वनं वृक्षौघो जलं वा । वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने ॥ कक्षं तृणं वल्ली वा तत्र भवः कक्ष्यस्तस्मै नमः। कक्षो वीरुधि दोर्मूले कच्छे शुष्कवने तृणे ॥ श्रूयत इति श्रवः शब्दस्तद्रूपाय नमः ॥ प्रतिश्रवः प्रतिशब्दस्तद्रूपाय नमः ॥ आशुः शीघ्रा सेना यस्य स आशुषेणः तस्मै नमः ॥ आशु शीघ्रो रथो यस्यासावाशुरथस्तस्मै नमः ॥ शूराय युद्धवीराय नमः ॥ अवभिनत्ति रिपून्नीचैर्विदारयतीत्यवभेदी तस्मै नमः ॥ ३४ ॥

**नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च ॥ ३५ ॥**

नमो बिल्मिने च कवचिने च । बिल्ममस्यास्तीति बिल्मी । बिल्मं भासनम् उत्तराङ्गमुच्यते । कवचं पट्टस्यूतं कर्पा-

सगर्भम् । नमो वर्मिणे च वरूथिने च वर्म लौहं वरूथं हस्तिन उपरि गृहाकारः । कोष्ठकः नमः श्रुताय च श्रुतसेनाय च । श्रुताय सर्वलोकविदिताय । श्रुतसेना प्रसिद्धा च सूर्यस्य । नमो दुन्दुभ्याय च हनन्याय च । दुन्दभौ भवः दुन्दुभ्यः आहनने भव आहनन्यः ॥ ३५ ॥

विल्मं शिरस्त्राणमस्यास्ति विल्मी तस्मै नमः ॥ पटस्यूतं कर्पासगर्भं देहरक्षकं कवचं तदस्यास्तीति कवची तस्मै नमः ॥ लोहमयं शरीररक्षकं वर्म तदस्यास्तीति वर्मी तस्मै नमः ॥ गजोपरिस्थो गजाकारः कोष्ठो वरूथः रथगुप्तिर्वा सोऽस्यास्ति वरूथी तस्मै नमः । वरूथं तु तनुत्राणे रथगोपनवेश्मनोः ॥ श्रुताय प्रसिद्धाय नमः । श्रुता प्रसिद्धा सेना यस्य स श्रुतसेनः तस्मै ॥ दुन्दुभौ भेर्यां भवो दुन्दुभ्यः तस्मै । दुन्दुभिस्तु भेर्यां दितिसुते विषे ॥ आहन्यते ताड्यतेऽनेनेत्याहननं वाद्यसाधनं दण्डादि तत्र भव आहनन्यः तस्मै ॥३५॥

नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च॒ नमो॑ निष॒ङ्गिणे॑ चेषु॒धि॒मते॑ च॒ नम॑ स्ती॒क्ष्णेष॑वे चायु॒धिने॑ च॒ नम॑: स्वायु॒धाय॑ च सु॒धन्व॑ने च॒ ॥ ३६ ॥

नमो धृष्णवे च प्रमृशाय च । धृष्णुः प्रगल्भः प्रमृशः सर्वं परिमृशति पण्डित इत्यर्थः । नमो निषङ्गिणे चेषुधिमते च । निषङ्ग खड्गं तदस्यास्तीति निषङ्गी इषुधिमान् इषवः धीयन्ते अस्मिन्निति इषुधिः । नमः तीक्ष्णेषवे चायुधिने च । तीक्ष्णा इषवोऽस्य विद्यन्त इति तीक्ष्णेषुः आयुधमस्यास्तीत्यायुधी । नमः स्वायुधाय च सुधन्वने च । शोभनायुधः स्वाधः शोभनधनुः सुधन्वा ॥ ३६ ॥

धृष्णोतीत्येवंशीलो धृष्णुः प्रगल्भः त० ॥ प्रमृशति विचारयति प्रमृशः पण्डितः त० । इगुपधेति कः निषङ्गिणे खड्गयुताय नमः ॥ इषुधिमते तूणयुताय नमः ॥ तीक्ष्णा असह्या इषवो बाणा यस्य स तीक्ष्णेषुः त० ॥ आयुधान्यन्यान्यपि सन्ति आयुधी त० ॥ शोभन-

मायुधं त्रिशूलं यस्य स स्वायुधः त० ॥ शोभनं धनुः पिनाकं यस्य स सुधन्वा त० ॥ ३६ ॥

**नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥ ३७ ॥**

नमः स्रुत्याय च पथ्याय च । नद्या एकदिशोदकवाहिनी स्रुतिस्तत्र भवः स्रुत्यः । पथिभवः पथ्यः नमः काट्याय च नीप्याय च । काटेभवः काट्यः । काटः कूपः । नीचैर्यन्ति यत्रापः स नीपः तत्र भवो नीप्यः । नमः कुल्याय च । सरस्याय च । कुल्यायां भवः कुल्यः सरसि भवः सरस्यः नमो नादेयाय च वैशन्ताय च । नद्यां भवो नादेयः । स्त्रीभ्यो ढक् । वेशन्तः तडागः तत्र भवो वैशन्तः ॥ ३७ ॥

स्रुतिः क्षुद्रः प्रवाहः क्षुद्रमार्गो वा तत्र भवः स्रुत्यः त० ॥ पन्था रथाश्वादियोग्यो मार्गस्तत्र भवः पथ्यः त० ॥ कुत्सितमटति जनो यत्रेति काटो विषममार्गः तत्र भवः काट्यः त० । काटः कुल्याप्रदेशो वा ॥ नीचैः पतन्त्यापो यत्रेति नीपो गिर्यधोभागः । ऋक्पूरब्धूः पथामिति अप्रत्ययः द्व्यन्तरुपसर्गेभ्योऽप ईदिति अप्शब्दस्येकारः तत्र भवो नीप्यः त० ॥ कुल्या कृत्रिमा सरित्तत्र भवः कुल्यः कुलेषु देहेषु वान्तर्यामिरूपेण भवः कुल्यः त० । कुलं देहेऽन्वये गणे ॥ सरसि भवः सरस्यः त० ॥ नद्यां भवो नादेयः तस्मै नदीजलरूपाय नमः ॥ वेशन्तोऽल्पसरः तत्र भवो वेशन्तः त० ॥ ३७ ॥

**नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च ॥ ३८ ॥**

नमः कूप्याय चावट्याय च । कूपे भवः कूप्यः अवटे भवः अवट्यः । अवटो गर्तः । नमो वीध्र्याय चातप्याय च । इन्धी

दीप्तौ विगतदीप्तिर्वीध्रः घनागमः तत्र भवो वीध्र्यः। आतपे भव आतप्यः। नमो मेघ्याय च विद्युत्याय च। निगदव्याख्यानम् नमो वर्ष्याय चावर्ष्याय च। वर्षे भवः वर्ष्यः अवर्षे भवोऽवर्ष्यः॥ ३८॥

कूपे भवः कूप्यः त०॥ अवटो गर्तस्तत्र भवोऽवट्यः त०॥ इन्धी दीप्तौ विशेषेण इध्रं वीध्रं निर्मलं शरदभ्रं तत्र भवो वीध्र्यः यद्वा विगत इध्रो दीप्तिर्यस्मात्स वीध्रो घनागमः तत्र भवाय नमः॥ आतपे भव आतप्यः त०॥ मेघे भवो मेघ्यः त०॥ विद्युति भवो विद्युत्यः त०॥ वर्षे वृष्ट्यां भवो वर्ष्यः त०॥ अवर्षे वृष्टिप्रतिबन्धे भवोऽवर्ष्यः त०॥ ३८॥

नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च॥ ३९॥

नमो वात्याय च रेष्मयाय च। वाते भवो वात्यः। रिषतिहिंसार्थः। अन्येभ्योऽपि च दृश्यन्त इति मनिन्। रेष्म। तत्र भवो रेष्मयः नमो वास्तव्याय च वास्तुपाय च वास्तु गृहं तत्र भवो वास्तव्यः वास्तुपतिर्वास्तुपः। नमः सोमाय च रुद्राय च। नामतो नमस्काराः। नमस्ताम्राय च। वर्णतो नमस्काराः॥ ३९॥

वाते भवो वात्यः त०॥ रिष्यन्ते नश्यन्ति भूतान्यत्रेति रेष्मा प्रलयकालः। अन्येभ्योऽपि दृश्यन्त इति मनिन्। तत्र भवो रेष्म्यः प्रलयेऽपि विद्यमानायेत्यर्थः॥ वास्तुनि गृहभुवि भवो वास्तव्यः। त०। वेश्मभूर्वास्तुरस्त्रियाम्॥ वास्तुं गृहभुवं पाति वास्तुपः त०॥ उमया सहितः सोमः त०। रुत् दुःखं द्रावयति रुद्रो दुःखनाशकः त०॥ ताम्रो रक्तवर्णः उदयद्रविरूपेण त०॥ अरुण ईषद्रक्त उदयोत्तरकालीनार्करूपेण॥ ३९॥

नमः शङ्गवे च पशुपतये च नम उग्राय च भीमाय

च नमो॑ऽग्रेव॒धाय॑ च दूरेव॒धाय॑ च नमो॑ ह॒न्त्रे च हनी॑यसे च नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑ स्ता॒राय॑ ॥ ४० ॥

नमः शङ्गवे च पशुपतये च । शं सुखं गवां करोतीति शंगुः । पशूनाम् पतिः । नमः उग्राय च भीमाय च उग्र उद्गूर्णः भीमो भीषणः । नमोऽग्रेवधाय च दूरेवधाय च अग्रे स्थितो हन्ति अग्रेवधः । दूरेस्थितो हन्ति दूरेवधः । नमो हन्त्रे च हनीयसे च । हन्तीति हन्ता हनीयान्हन्तृतमः । नमो वृक्षेभ्यो हरिकेशेभ्यः । हरितवर्णानि येषां वृक्षाणां पत्राणि त एवमुच्यन्ते । नमस्ताराय । तारयन्ति उत्तारयन्ति संसारात् तारः ॥ ४० ॥

शं सुखं गमयति प्रापयति शङ्गुः शं सुखरूपा गावो वाचो वेद-रूपा यस्येति वा त० ॥ पशूनां प्राणिनां पतिः पालकः त० ॥ उग्र उद्गूर्णायुधः शत्रुन् हन्तुं त० ॥ भीमः शत्रुभयोत्पादकः ॥ अग्रे पुरो वर्त्तमानो हन्तीत्यग्रेवधः : त० ॥ दूरे वर्त्तमानो हन्तीति दूरेवधः त० ॥ हन्तीति हन्ता त० । लोके यो हन्ति तद्रूपेण रुद्र एव हन्तेत्यर्थः ॥ अतिशयेन हन्ता हनीयान् त० । तुरिष्ठेमेयः स्विति तृचो लोपः प्रलये सर्वहन्तेत्यर्थः ॥ हरयो हरिताः केशाः पत्ररूपा येषां तेभ्यो वृक्षेभ्यः कल्पतरुरूपेभ्यो नमः ॥ तारयति संसारमिति तारः त० ॥ ४० ॥

नमः॑ सम्भ॒वाय॑ च मयो॒भवाय॑ च नमः॑ शङ्क॒राय॑ च मयस्क॒राय॑ च नमः॑ शि॒वाय॑ च शि॒वत॑राय च ॥ ४१ ॥

नमः शंभवाय च मयोभवाय च । शम उपशमे । अस्य शं सुखनाम । शमाद्भवतीति शंभवः । शमा सुखेन वा भावयतीति शम्भवः । यद्वा । शं च आनन्दरूपश्च । कालदेशानवच्छिन्नं भवनं तच्छक्तिश्च । आनन्दविज्ञान इत्यर्थः । इयमेव व्याख्या मयोभुवशब्दस्य । नमः शङ्कराय च । मयस्कराय च ।

शङ्करोतीति शंकरः । मयः करोतीतिमयस्करः । नमः शिवाय च शिवः शान्तो निर्विकारः । शिवतरस्ततोऽप्यधिको निरतिशयसर्वज्ञबीजः ॥ ४१ ॥

शं सुखं भवत्यस्मादिति शम्भवः यद्वा शं सुखरूपश्चासौ भवः संसाररूपश्च मुक्तिरूपो भवरूपश्च त० ॥ मयः सुखं भवत्यस्मान्मयोभवः संसारसुखप्रदः त० ॥ शं लौकिकसुखं करोति शङ्करः त० ॥ मयो मोक्षसुखं करोति मयस्करः त० । स्रक्चन्दनादिरूपेण लौकिकसुखकारित्वम् शास्त्रादिरूपेण ज्ञानप्रदत्वान्मोक्षसुखकारित्वमित्यर्थः । एताभ्यां पदाभ्यां साक्षात्सुखकारित्वम् पूर्वपदाभ्यां तद्द्वारा कारयितृत्वमिति विवेकः ॥ शिवः कल्याणरूपो निष्पापः त० ॥ शिवतरो ऽत्यन्तं शिवो भक्तानपि निष्पापान् करोति त० ॥ अस्यां कण्डिकायां षड् यजूंषि पूर्वस्यां दशोक्तेः ॥ ४१ ॥

**नमः पार्य्याय चावार्य्याय च नमः प्रतरणाय चोत्तरणाय च नम स्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च ॥ ४२ ॥**

नमः पार्याय चावार्याय च । पारे भवः पार्य्यः । अवारे भवः अवार्यः । नमः प्रतरणाय चोत्तरणाय च । प्रतरन्ति येन तत्प्रतरणम् । उदकमुच्यते । उत्तरन्ति येन तदुत्तरणम् नौरुच्यते । नमस्तीर्थ्याय च कूल्याय च । तीर्थे भवस्तीर्थ्यः कूले भवः कूल्यः । नमः शष्प्याय च फेन्याय च । प्ररूढानि तृणानि शष्पमुच्यन्ते तत्र भवः शष्प्यः फेने भवः फेन्यः ॥४२॥

पारे संसाराब्धेः परतीरे जीवन्मुक्तरूपेण भवः पार्यः त० ॥ अवारे अर्वाक्तीरे संसारमध्ये संसारित्वेन भवोऽवार्यः त० । पारावारे परार्वाची तीरे पात्रं यदन्तरामिति कोषः ॥ प्रकर्षेण मन्त्रजपादिना पापतरणहेतुः प्रतरणः त० ॥ उत्कृष्टेन तत्त्वज्ञानेन संसारोत्तरणहेतुरुत्तरणः त० ॥ तीर्थे प्रयागादौ भवः तीर्थ्यः त० ॥ कूले तटे भवः कूल्यः त० ॥ शष्पं बालतृणं गङ्गातीरोत्पन्नं कुशाङ्कुरादि तत्र

भवः शष्प्यः त० ॥ फेने डिण्डिरे भवः फेन्यः त० ॥ ४२ ॥

नमः सिकत्याय च प्रवाह्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नम इरिण्याय च प्रपथ्याय च ॥ ४३ ॥

नमः शिकत्याय च प्रवाह्याय च । सिकतासु भवः सिकत्यः प्रवाहे भवः प्रवाह्यः किꣳशिलाय च क्षयणाय च । किमेतदुदकं हिमीभूतमुत शिलेति यत्र वितर्कः स किंशिलः । यद्वा किंशिला उत कर्करः । क्षयन्त्यस्मिन्नाप इति क्षयणः । नमः कपर्दिने च पुलस्तये च । कपर्दी जटामुकुटधारी । पुरस्तिष्ठतीति पुलस्तिः । शुभाशुभदिदृक्षया । नम इरण्याय च प्रपथ्याय च । इरणे भव इरण्यः । निरुदकप्रदेश इरणम् । प्रपथे भवः प्रपथ्यः ॥ ४३ ॥

सिकतासु भवः सिकत्यः त० ॥ प्रवाहे स्रोतसि भवः प्रवाह्यः त० ॥ कुत्सिताः क्षुद्राः शिलाः शर्करारूपाः पाषाणा यत्र प्रदेशे स किंशिलः तद्रूपाय नमः ॥ क्षियन्ति निवसन्त्यापो यत्र स क्षयणः स्थिरजलप्रदेशः त० ॥ कपर्दो जटाजूटोऽस्यास्तीति कपर्दी त० ॥ पुरोऽग्रे तिष्ठति पुलस्तिः । थस्य तत्वं छान्दसं रस्य लत्वं च । यद्वा पूर्षु शरीरेषु अस्तिः सत्ता यस्य स पुलस्तिः सर्वान्तर्यामी त० ॥ इरिणमूषरं विस्तृणदेशस्तत्र भव इरिण्यः त० ॥ प्रकृष्टः पन्थाः प्रपन्थो बहुसेवितो मार्गस्तत्र भवः प्रपथ्यः त० ॥ ४३ ॥

नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च ॥ ४४ ॥

नमो व्रज्याय च गोष्ठ्याय च । व्रजे भवो व्रज्यः । गावस्तिष्ठन्त्यस्मिन्निति गोष्ठः तत्र भवो गोष्ठ्यः । नमस्तल्प्याय च गेह्याय च । तल्पः शयनम् गेहं गर्भगृहम् तत्र भव इति तद्धि-

तः । नमो हृदय्याय च निवेष्प्याय च । हृदये भवो हृदय्यः निवेष्पे भवो निवेष्प्यः । निवेष्प आवर्तः । भ्रमः । नमः काट्याय च गह्वरेष्ठाय च । काटे भवः काट्यः । काटः कूपः । गह्वरे तिष्ठति गह्वरेष्ठः गह्वरं महदुदकम् ॥ ४४ ॥

व्रजे गोसमूहे भवो व्रज्यः तस्मै । गोष्ठाध्वनिवहा व्रजाः ॥ गावस्तिष्ठन्ति यत्रेति तद् गोष्ठं तत्र भवो गोष्ठ्यस्तस्मै ॥ तल्पं शय्या तत्र भवस्तल्प्यस्तस्मै । गेहे गृहे भवो गेह्यस्तस्मै ॥ हृदये भवो हृदय्यो जीवस्तस्मै । निवेष्य आवर्तो नीहारजलं वा तत्र भवो निवेष्यः त० ॥ कुत्सितमटन्ति गच्छन्ति जना यत्र स काटो दुर्गारण्यदेशः काटः कूपो वा तत्र भवः काट्यः त० ॥ गह्वरे विषमे गिरिगुहादौ गम्भीरे जले वा तिष्ठति गह्वरेष्ठः त० । गह्वरं विलदम्भयोः ॥ ४४ ॥

नमः॑ शुष्क्या॑य च हरि॒त्या॑य च॒ नमः॑ पाᳪस॒व्या॑य च॒ रज॒स्या॑य च॒ नमो॒ लोप्या॑य चोल॒प्या॑य च॒ नम॑ ऊ॒र्व्या॑य च॒ सू॒र्व्या॑य च ॥ ४५ ॥

नमः शुष्क्याय च हरित्याय च । शुष्के भवः शुष्क्यः । हरिते भवो हरित्यः । हरितमार्द्रम् । नमः पाᳪसव्याय च रजस्याय च । पांसुषु भवः पांसव्यः रजसि भवो रजस्यः । नमो लोप्याय चोलप्याय च । लोपे भवो लोप्यः लुपचत इति लोपः । उलपे भव उलपच्यः । ऊर्ध्वं लप्यते उच्चार्यते नतु लोप इवाश्रवणमुपैति उलप्यः । नम ऊर्व्याय च । ऊर्वे भव ऊर्व्यः । ऊर्वो वडवाग्निः । स एव शोभनः सूर्वः तत्र भवः सूर्व्यः ॥ ४५ ॥

शुष्के काष्ठादौ भवः शुष्क्यः त० ॥ हरिते आर्द्रे काष्ठादौ भवः हरित्यः त० ॥ पांसुषु धूलिषु भवः पांसव्यः त० । ओर्गुणः ॥ रजसि गुणे परागे वा भवो रजस्यः त० । रजो रेणुपरागयोः स्त्रीपुष्पे गु-

णभेदे च ॥ लुप्यते नश्यति गमनादि यत्रेति लोपोऽगम्यप्रदेशस्तत्र भवो लोप्यः त० । लोपः संहारो वा ॥ उलपा बल्वजादितृणविशेषास्तत्र भव उलप्यः त० । उलपस्तु गुल्मिनीतृणभेदयोः ॥ उर्व्यां भूमौ भव उर्व्यः त० । दीर्घ आर्षः । ऊर्वो वडवानलो वा ॥ शोभन ऊर्वः कल्पानलस्तत्र भवः सूर्व्यः तस्मै ॥ ४५ ॥

**नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च नम आखिदते च प्रखिदते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानाᳬ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ॥ ४६ ॥**

नमः पर्णाय च पर्णशदाय च । पर्णं प्रसिद्धम् पर्णशब्दः पतितपर्णावस्थानवान् । नम उद्गुरमाणाय चाभिघ्नते च । उद्गुरमाण उद्यमनशीलः । अभिघ्नते अभिहननं कुर्वते । नम आखिदते च खिद दैन्ये दैन्यभावङ्कुरुते । अभक्तानाम्प्रकर्षेण दैन्यभावं कुर्वते निषिद्धसेविनाम् नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमः । इषून्येव कुर्वन्ति ते इषुकृतः तेभ्यो नमः । ये यूयं धनुष्कृतः तेभ्यो युष्मभ्यो नमः । युष्मदादेशयोगात्प्रत्यक्षा एते रुद्राः । समाप्तास्तिस्रोऽशीतयः इदानीं रुद्राणां हृदयभूतानामग्निवायुसूर्याणां सम्बन्धीनि यजूंषि उच्यन्ते । नमो वः किरिकेभ्यः नमो वः युष्मभ्यं ये यूयं किरिकाः कुर्वन्तीदं जगत् वृष्ट्याद्युपकारेण किरिकाः अग्निवायुसूर्याः देवानां हृदयेभ्यः रुद्राणां हृदयभूताः । नमो विचिन्वत्केभ्यः विचिन्वन्ति पृथक्कुर्वन्ति धर्मकारिणं पापकारिणश्च ते विचिन्वत्काः । नमो विक्षिणत्केभ्यः । विविधं क्षिण्वन्ति हिंसन्ति ये ते विक्षिणत्काः । नम आनिर्हतेभ्यः हन्तिर्गत्यर्थः । एते ह्यग्निवायुसूर्याः सर्गादावाभिमुख्येनैतेभ्यो लोकेभ्यो निर्गताः ॥४६॥

तरूणां पत्ररूपाय नमः ॥ शदूॢ शातने शदनं शदः शातनम् यद्वा पर्णानि शीर्यन्ते शात्यन्ते पक्कानि पतन्ति यत्र स पर्णशदः पतितपर्णस्थितिदेशस्तद्रूपाय नमः ॥ गुरी उद्यमे तुदादिभ्यः शः उद्गुरते उद्यमं करोति उद्गुरमाण उद्यमी तस्मै ॥ अभिहन्ति शत्रूनित्यभिघ्नन् तस्मै ॥ आ समन्तात् खिद्यते दैन्यं करोत्यभक्तानामित्याखिदन् तस्मै ॥ प्रकर्षेण खेदयति पापिन इति प्रखिदन् तस्मै ॥ इषून् बाणान् कुर्वन्ति ते इषुकृतस्तेभ्यो रुद्रेभ्यो नमः ॥ धनूंषि चापानि कुर्वन्ति ते धनुष्कृतः तेभ्यो वो युष्मभ्यं नमः । युष्मदादेशयोगात् प्रत्यक्षा एते रुद्राः ॥ तिस्रोऽशीतयो रुद्राणां समाप्ताः । एवं चत्त्वारिंशदधिकशतद्वयमन्त्रैः रुद्रस्य सर्वात्मत्वमुक्तम् ॥ अथ रुद्रेषु प्रधानभूतानामग्निवायुसूर्य्याणां सम्बन्धीनि चत्वारि यजूंष्युच्यन्ते । चतुर्णामादौ नमः शब्दाच्चत्वार्येव यजूंषि आद्यं चतुर्दशाक्षरं त्रीणि सप्ताक्षराणि तानि व्याहृतिसंज्ञानि ॥ नमो व इति । देवानां हृदयेभ्यो रुद्राणां हृदयवत्प्रधानभूतेभ्योऽग्निवायुसूर्य्येभ्यो वो युष्मभ्यं नमः । देवानां हृदयेभ्य इत्यग्निर्वायुरादित्य एतानि ह तानि देवानाᳪ हृदयानीति (९, १, १, २३) श्रुतेः । हृदयानीव हृदयानि यथाङ्गानां हृदयं प्रधानमेवमेते रुद्राणां प्रधाना इत्यर्थः । कीदृशेभ्यस्तेभ्यः किरिकेभ्यः । वृष्ट्यादिद्वारा जगत् कुर्वन्ति किरिकास्तेभ्यः एते हीदᳪ सर्वं कुर्वन्तीति (९, १, १, २३) श्रुतेः ॥ विचिन्वन्ति धर्मिष्ठं पापिष्ठं चेति विचिन्वत्कास्तेभ्योऽग्न्यादिभ्यो नमः ॥ विविधं क्षिण्वन्ति हिंसन्ति पापमिति विक्षिणत्कास्तेभ्योऽग्न्यादिभ्यो नमः । आ समन्तान्निर्हता निर्गताः सर्गादौ लोकेभ्य इत्यानिर्हतास्तेभ्यो रुद्रावतारेभ्योऽग्निवायुसूर्य्येभ्यो नमः । हन्तिर्गत्यर्थः । तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतीᳪष्यजायन्ताग्निर्योऽयं पवते सूर्य्य इति श्रुतेः ॥ ४६ ॥

**द्रापे॒ अन्ध॑सस्पते॒ दरि॑द्र॒ नील॑लोहित । आ॒सां प्र॒जाना॑मे॒षां प॑शू॒नां मा भे॒र्मा रो॒ङ्मो च॑ नः॒ किञ्च॒नाम॑मत् ॥ ४७ ॥**

द्रापे अन्धसस्पते । सप्तकण्डिका एकरुद्रस्तुतिः । उपरिष्टाद् बृहती । द्र कुत्सागतौ । द्रापयतीति द्रापिः । अयथोक्तका-

रिणं कुत्सितां गतिं नयति । हे अन्धसस्पते । सोमस्य पते । हे दरिद्र हे निष्परिग्रह । हे नीललोहित । नाना विधास्यैतानि रूपाणि चेति श्रुतिः । एवं सम्बोध्य रुद्रम् । अथेदानीमभयं याचते । आसां प्रजानाम् । अस्मदीयानाम् एषां पशूनां मा त्वं भैषीः । मा रोक् अविभ्यच्च मा त्वं रुजः मा त्वं भाङ्क्षीः मोचनः किञ्च नाममत् । मा च नः अस्माकं किञ्चन अपत्यादिकम् । आममत् । अम रोगे । मा चास्माकमपत्यादिकं रोगसंयुक्तं कृथा इत्यर्थः ॥ ४७ ॥

सप्त ऋच एकरुद्रदेवत्याः । आद्योपरिष्टाद् बृहती सप्ताष्टदशाष्टादशार्णपादा । हे द्रापे ! द्रा कुत्सायां द्रापयति कुत्सितां गतिं पापिनः प्रापयतीति द्रापिः ॥ हे अन्धसः सोमस्य पते ! पालक ! अन्धसस्पत इति सोमस्य पत इत्येतदिति ( ९, १, १, २४ ) श्रुतेः । हे दरिद्र ? निष्परिग्रह ! अद्वितीयत्वादिति भावः । हे नीललोहित ! कण्ठे नीलोऽन्यत्र लोहितः हे शिव ! नोऽस्माककमासां प्रजानां पुत्रादीनामेषां पशूनां गवादीनां त्वं मा भेः भयं मा कुरु बहुलं छन्दसीति ( पा० २, ४, ७३ ) शपो लुक् । मा रोक् रुजो भङ्गे प्रजापशूनां भङ्गं मा कार्षीः कर्मणि षष्ठ्यौ । च पुनर्नोऽस्माकं किञ्चन किमपि द्विपदचतुष्पदादिकं मो मा आममत् रुग्णं मास्तु । अम् रोगे लुङि धातोरमागम आर्षः ॥ ४७ ॥

**इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ ४८ ॥**

इमा रुद्राय । जगती । इमाः मतीः याभिः स्तूयते ता रुद्राय । तवसे । महते बलवते वा । उभयत्र हि तवःशब्दः पठ्यते । कपर्दिने । जटामुकुटधारिणे । क्षयद्वीरा । क्षयन्ति वसन्त्यस्मिन्वीरा इति क्षयद्वीरस्तस्मै क्षयद्वीराय । प्रभरामहे प्रेरयामः

तथा वयं प्रेरयामः यथा येन प्रकारेण । शमसत् द्विपदे चतुष्पदे । शं सुखम् । असत् भवति द्विपदां चतुष्पदां च । यथा विश्वं सर्वं पुष्टं समृद्धं ग्रामे अस्मिन् अनातुरम् । आपद्रहितं स्वस्थं भवति ॥ ४८ ॥

कुत्सदृष्टा जगती । वयमिमा अस्मदीया मतीः बुद्धीः रुद्राय शङ्कराय प्रभरामहे प्रहरामहे समर्पयामो रुद्रं स्मराम इत्यर्थः । हृग्रहोर्भः । कीदृशाय तवसे महते बलवते वा उभयत्र तवःशब्दः पठितः ( निघ० २, ९, ३, ३ ) । कपर्दिने जटिलाय । क्षयद्वीराय क्षयन्तो निवसन्तो वीराः शूरा यत्र स क्षयद्वीरः तस्मै शूरायेत्यर्थः । क्षयन्तो नश्यन्तो वीरा रिपवो यस्मादिति वा । द्विपदे पुत्रादये चतुष्पदे गवादिपशवे सप्तमी वा द्विपद्चतुष्पद्विषये यथा येन प्रकारेण शं सुखमसत् भवति अस्मिन् ग्रामे अस्मिन् वासस्थाने विश्वं सर्वं प्राणिजातं पुष्टं समृद्धमनातुरं निरुपद्रवं स्वस्थं च यथा असत् तथा मतिं हरे समर्पयाम इत्यर्थः ॥ ४८ ॥

या ते॑ रुद्र शि॒वा त॒नूः शि॒वा वि॒श्वाहा॑ भेष॒जी ।
शि॒वा रु॒तस्य॑ भेष॒जी तया॑ नो मृड जी॒वसे॑ ॥ ४९ ॥

याते रुद्र । अनुष्टुप् । हे रुद्र या तव शिवा शान्ता तनूः शरीरम् । शिवा । अतिशयार्थं पुनर्वचनम् । विश्वाहा भेषजी । सर्वदाभिषत्त्वेन वर्तते । शिवारुतस्य व्याधेः भेषजी । रुतशब्दो व्याधिवचनः । यद्वा । शिवारुतस्य शिवाफेत्कृतस्य शब्दस्य भेषजी । अपशकुनहन्त्रीत्यर्थः । तया तन्वानः अस्मान् मृड सुखय । जीवसे जीवनाय ॥ ४९ ॥

अनुष्टुप् । हे रुद्र ! या ते तव ईदृशी तनूः शरीरं तया तन्वा नोऽस्मान् जीवसे जीवितुं मृड सुखय । कीदृशी शिवा शान्ता अघोरा । विश्वाहा विश्वानि च तान्यहानि च विश्वाहा कालाध्वनोरत्यन्तसंयोग इति द्वितीया तस्या आकारः सर्वेष्वहःसु सर्वदा शिवा कल्याणकारिणी भेषजी औषधरूपा संसारव्याधिनिवर्त्ति-

कल्पतां क्लृप्ता भवतु । तान् परित्यज्य मामाश्रयत्वित्यर्थः । पापात्मानो हि गोत्रिणो भवन्ति । कुत्र कियन्तश्च कालमित्यत आह । अस्मिन् लोके शतं समाः । समाशब्दः संवत्सरवचनः ॥ ४६ ॥

का० ( १९, ३, २४ ) उत्तरे यज्ञोपवीत्युत्तरया । उत्तरे उत्तरवेद्याहवनीये कृतसव्यो यजमान उत्तरयाग्रिमया ऋचाज्यं जुहोतीत्यर्थः ॥ यजमानाशीः श्रीदेवत्या । जीवन्तीति जीवास्तेषु जीवेषु प्राणिषु मध्ये ये समानाः समनसः समनस्काः मामका मदीया जीवाः प्राणिनः । सपिण्डाः ये मे ते मामकाः तवकममकावेकवचन इति अस्मदो ममकादेशः । अस्मिम् लोके भूलोके शतं समाः शतवर्षपर्यन्तं तेषां मामकानां जीवानां श्रीर्मयि कल्पतां तांस्त्यक्त्वा मयि क्लृप्ता भवतु मामाश्रयतामित्यर्थः गोत्रिणो हि पापात्मानः सहजाः शत्रवोऽत एवं प्रार्थ्यते ॥ ४६ ॥

द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥ ४७ ॥

पयःसमन्वारब्धे जुहोति । द्वे सृती त्रिष्टुप् । पन्थानो ब्रवीति । ये एते शुक्लकृष्णे सृती यावेतौ देवयानपितृयानौ पन्थानौ । अहमशृणवं पितॄणां श्रुतिवाक्येभ्यः । स एव देवयानो वा पितृयानो वा पन्था इति । देवानां देवयानगामिनाम् उत अपि च मर्त्यानां मरणधर्मिणां पितृयानगामिनाम् । ताभ्यामिदं विश्वमेजत्समेति । तदः स्थाने यदो वृत्तिः । याभ्यां पथिभ्याम् इदं सर्वम् एजत् क्रियावत् समेति संगच्छते यत् अन्तरा पितरं मातरञ्च । द्यौः पिता पृथिवी माता सुहुतं ताभ्यां सृतिभ्यामस्तु ॥ ४७ ॥

का० ( १९, ३, २५ ) अन्वारब्धेषु पयो जुहोति द्वे सृती इति ।

ऋत्विग्यजमानेषु कृतान्वारम्भेषु अध्वर्युः पयो जुहोतीत्यर्थः । देवयानपितृयानमार्गदेवत्या त्रिष्टुप् । मर्त्यानां मरणधर्मिणां प्राणिनां द्वे सृती द्वौ मार्गौ अहमशृणवं श्रुतवानस्मि श्रुतितः स एष देवयानो वा पितृयानो वा पन्था इति श्रुतेः । के द्वे सृती अत आह देवानां मार्ग एकः उतापि च पितॄणाम् देवमार्गः पितृमार्गश्चेति । पितरं मातरम् द्यौः पिता पृथिवी माता । असौ वै पितेयं मातेति ( १२, ८, १, २१ ) श्रुतेः । पितरं मातरञ्च अन्तरा भूलोकद्युलोकयोर्मध्ये तत् एजत् कम्पमानं क्रियावत् विश्वं सर्वमिदं ताभ्यां सृतिभ्यां देवयानपितृयानाभ्यां समेति सङ्गच्छते ताभ्यां सृतिभ्यां सुहुतमस्तु ॥ ४७ ॥

इदं हविः प्रजननं मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ॥ ४८ ॥

शेषं यजमानो भक्षयति । इदं हविः त्र्यवसाना अष्टिर्यजमानाशीः । इदं पयोलक्षणं हविः प्रजननम् उत्पादकम् । मे मम अस्तु दशवीरम् । प्राणा वै दशवीराः सर्वगणम् । अङ्गा वै सर्वे गणाः स्वस्तये अविनाशाय । पुनरपि हविर्विशेष्यते । आत्मसनि आत्मनं यद्धविः सनोति संभजते तदात्मसनि । एवं प्रजासनि पशुसनि लोकसनि अभयसनि । अभयमपुनरावृत्तिः । अग्निः प्रजां बहुलाम् अतिवृद्धां मम करोतु । यूयं च हे ऋत्विजः । अन्नं च पयश्च रेतश्च । अस्मासु धत्त ॥ ४८ ॥

का० ( १९, ३, २६ ) शेषं यजमानो भक्षयतीदꣳ हविरिति । उखास्थितं शेषं पयो यजमानो भक्षयतीत्यर्थः ॥ यजमानाशीर्देवत्या त्र्यवसाना अष्टिः एकोः व्यूहः । इदं पयोरूपं हविर्मे मम स्वस्तये अविनाशायास्तु । कीदृशं हविः प्रजननं प्रजनयतीति प्रजननं प्रजोत्पादकम् । दशवीरं दश वीराः प्राणा यत्र तत् पीते दशानां प्रा-

णापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयसंज्ञानां प्राणानां स्वास्थ्यं भवतीत्यर्थः प्राणा वै दश वीराः प्राणानेवात्मन्धत्त इति ( १२, ८, १, २२ श्रुतेः । तथा सर्वगणं सर्वे गणा अङ्गानि यस्मिंस्तत् यत्र पीतेऽङ्गानि स्वस्थानि स्युरित्यर्थः । अङ्गानि वै सर्वे गणा अङ्गान्येवात्मन्धत्त इति ( १२, ८, १, २२ ) श्रुतेः । आत्मसनि आत्मानं सनोति सनति ददाति सम्भजते वा षणु दाने तुदादिः षण सम्भक्तौ भ्वादिः । एवमग्रेऽपि । प्रजासनि पशुसनि आत्मानमेव सनोति पशून् सनोतीत्यादिश्रुतेः ( १२, ८, १, २२ ) । लोकसनि लोकमैहिकं सनोति ऐहिकं सुखं ददातीत्यर्थः । लोकाय वै यजते तमेव जयतीति ( २२ ) श्रुतेः । अभयसनि अभयं स्वर्गं सनोति स्वर्गो वै लोकोऽभयꣳ स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठतीति ( २२ ) श्रुतेः । एवं हविः प्राश्याग्निं प्रार्थयते अग्निर्मे मम प्रजां बहुलां प्रवृद्धां करोतु । एवमग्निमुक्त्वा ऋत्विज आह हे ऋत्विजः ! अस्मासु अन्नं व्रीह्यादि पयो दुग्धं रेतो वीर्यवर्चां यूयं धत्त स्थापयत । तद्य एवेनमेते याजयन्ति तानेतदाहैतन्मयि सर्वं धत्तेति ( २२ ) श्रुतेः ॥४८॥

उदी॑रता॒मव॑र॒ उत्परा॑स॒ उन्म॑ध्य॒माः पि॒तरः॑ सो॒म्यासः॑ । असुं॒ य ई॒युर॑वृ॒का ऋ॑त॒ज्ञास्ते नो॑ऽवन्तु पि॒तरो॒ हवे॑षु ॥ ४९ ॥

उदीरताम् । त्रयोदश पैत्र्यस्त्रिष्टुभः जगत्येकादशी । यजमानवाचनम् । उदीरताम् ईर गतौ उद् उपसर्गात्परः । ऊर्ध्वं क्रमताम् । ऊर्ध्वं गच्छन्तु । अवरे येऽस्मिन् लोके ऽवस्थिताः पितरः । उत्परासः । पर एव परासः ये च परस्मिन् लोकेऽवस्थितास्तेऽपि उदीरताम् तस्मादपि स्थानाद्विशिष्टतरं स्थानं गच्छन्तु । उन्मध्यमाः । मध्ये भवा मध्यमाः । येऽपि मध्यमास्तेऽपि ततो विशिष्टतरं स्थानमुद्गच्छन्तु । पितरः सोम्यासः सोमसम्पादिनः । असुं ये ईयुः येऽपि असुं प्राणम् ईयुः समन्वीयुः वातात्मानः अवृका अनमित्राः मध्यस्थत्वमास्थिताः ।

ऋतज्ञाः सत्यज्ञा वा यज्ञज्ञा वा स्वाध्यायनिष्ठा वा । तेऽपि ततो विशिष्टतरं स्थानमुद्गच्छन्तु । एवं च स्वकीयेन कर्मणा अस्मदीयेन च ये उन्नतिं प्राप्ताः । ते नः अस्मान् अवन्तु पालयन्तु पितरः हवेषु आह्वानेषु ॥ ४९ ॥

का० ( १९, ३, २१ ) सोमवतां बर्हिषदामग्निष्वात्तानाञ्च । उदीरतामित्यादित्रयोदशर्चोऽनुवाकः तत्र उदीरताम् ( ४९ ) अङ्गिरसः ( ५० ( ये नः ( ५१ ) इति ऋक्त्रयस्याग्निष्वात्तानित्यन्त्यायाश्च ( ६१ ) विनियोगः कल्पकृतोक्तः त्वं सोमेति ( ५२ ) तृचं सोमवताम् बर्हिषद इति ( ५५ ) तृचं बर्हिषदाम् आयन्तु न इति (५८) तृचमग्निष्वात्तानाम् पुनन्तु मेति ( ३९ ) नवऽर्चवाचनान्तरं त्वं सोमेत्यादि ( ५२ ) तन्वं कल्पयातीत्यन्तं नवर्चं प्रत्यृचमध्वर्युर्यजमानेन वाचयतीत्यर्थः ॥ त्रयोदश शङ्खदृष्टाः पितृदेवत्याः एकादशी अग्निष्वात्ताः पितरः ( ५९ ) इयं जगती अन्या द्वादश त्रिष्टुभः । अवरे अस्मिन् लोकेऽवस्थिताः पितरः उदीरताम् ऊर्ध्वं क्रमन्ताम् ऊर्ध्वलोकं गच्छन्तु ईर कम्पने अदादिः लोट् । परासः पराः परस्मिन् लोके स्थिताः पितर उदीरतां तस्मादपि स्थानात् परं स्थानं गच्छन्तु । उन्मध्यमाः मध्ये भवा मध्यमाः मध्यमाः पितरः उदीरताम् । कीदृशाः पितरः सोम्यासः सोमं सम्पादयन्ति ते सोम्याः । ये च असुं प्राणमीयुः वातात्मानो वातरूपं प्राप्तास्ते पितरो हवेषु आह्वानेषु नोऽस्मानवन्तु रक्षन्तु । कीदृशाः अवृकाः नास्ति वृकः शत्रुर्येषां ते उदासीनाः ऋतज्ञा सत्यज्ञा यज्ञज्ञा वा स्वाध्यायनिष्ठा वा ॥ ४९ ॥

**अङ्गि॑रसो नः पि॒तरो॒ नव॑ग्वा॒ अथ॑र्वाणो॒ भृग॑वः सो॒म्यासः॑ । तेषां॑ व॒यꣳ सु॑म॒तौ य॒ज्ञिया॑ना॒मपि॑ भ॒द्रे सौ॑मन॒से स्या॑म ॥ ५० ॥**

अङ्गिरसो नः । अङ्गिरा ऋषिस्तस्यापत्यानि बहूनि अङ्गिरसः नः अस्माकं पितरः नवग्वाः नवगतयः पुनः पुनरपुनरुक्त्या गच्छन्ति । नवनीया स्तोतव्या वा गतिर्येषां ते तथोक्ताः ये च

अथर्वाणः बहून्यपत्यानि । अथर्वा पुनः थर्वतिश्चरतिकर्मा तत्प्रतिषेधः । ये च भृगवः भृगोर्बहून्यपत्यानि । सोम्यासः सोमसंपादिनः । तेषां पितॄणां वयं सुमतौ स्याम । यज्ञियानां यज्ञसपादिनाम् । अपि च भद्रे भन्दनीये सौमनसे कल्याणमनसे स्याम भवेम ॥ ५० ॥

ये नोऽस्माकं पितरः तेषां सुमतौ शोभनबुद्धौ वयं स्याम भवेम अस्तेर्लिङ् तेऽस्मासु सुमतिं कुर्वन्त्विवत्यर्थः तेषां भद्रे कल्याणकारिणि सौमनसे शोभनमनस्त्वेऽपि वयं स्याम सुमनसो भावः सौमनसम् अस्मासु कल्याणं मनः कुर्वन्त्विवत्यर्थः । कीदृशानां तेषां यज्ञियानां यज्ञे हिता यज्ञियाः यज्ञसम्पादिनः । कीदृशाः पितरः अङ्गिरसः अङ्गिरसो बहून्यपत्यानि अङ्गिरसः बहुत्वे तद्धितलोपः । नवा नूतना ग्वा गतिर्येषां ते नवा नवनीया स्तोतव्या ग्वा येषामिति वा । अथर्वाणः अथर्वणो मुनेर्बहून्यपत्यानि । भृगवः भृगोरपत्यानि । सोम्यासः सोममर्हति य इति यः सोमसम्पादिनः॥५०॥

**ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः । तेभिर्यमः सꣳरराणो हवीꣳष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ५१ ॥**

ये नः पूर्वे । ये नः अस्माकं पूर्वे पितरः सोम्यासः सोमसंपादिनः तेषां पितॄणाम् अनु ऊहिरे । वह प्रापणे । देवाननुप्रापितवन्तः सोमपीथं सोमपानम् । वसिष्ठाः वसिष्ठस्य बहून्यपत्यानि । वसिष्ठः पुनर्वस्तृतमः कृतास्पदो वसति । तेभिः तैर्वसिष्ठैः यमः संरराणः संप्रीयमाणः । हवींषि । कथंभूतो यमः उशन् । वश कान्तौ । अस्य कृतसंप्रसारणस्यैतद्रूपम् कामयमानः । कथंभूतैर्वसिष्ठैः उशद्भिः । कथमत्तु । प्रतिकामम् यथाकामं भक्षयतु ॥ ५१ ॥

नोऽस्मकं ये पूर्वे पितरः सोमपीथं सोमपानमनूहिर अनुवहन्ति

स्म देवान् प्रापितवन्तः । कीदृशाः सोम्यासः सोमसम्पादिनः । वसिष्ठाः वसिष्ठस्य गोत्रापत्यानि । यमः तेभिस्तैः पितृभिः संरराणः प्रीयमाणः सन् प्रतिकामं हवींषि अत्तु भक्षयतु रा दाने शानच्प्रत्ययः । कीदृशो यमः उशन् वष्टि कामयते इत्युशन् कामयमानः । कीदृशैः तैः उशद्भिः उशन्ति ते उशन्तः तैः कामयमानैः वश कान्तौ शतृप्रत्ययः ॥ ५१ ॥

**त्वꣳ सो॑म॒ प्रचि॑कितो मनी॒षा त्वꣳ रजि॑ष्ठ॒मनु॑ नेषि॒ पन्था॑म् । तव॒ प्रणी॑ती पि॒तरो॑ न इन्द्रो दे॒वेषु॒ रत्न॑मभजन्त॒ धीराः॑ ॥ ५२ ॥**

त्वं सोम । हे सोम प्रचिकितः चिकित्वान् चेतनावान् प्रकर्षेण चेतनावान् विशिष्टचैतन्ययुक्तः त्वम्मनीषा । मनस ईषा मनीषा मनस इच्छाविशिष्टतरा भवति यज्वनाम् । यद्वा । हे सोम त्वं प्रचिकितः । कित ज्ञाने प्रकर्षेण ज्ञातासि । यावत् ज्ञातव्यम् मनीषां मनीषया त्वया । त्वं च रजिष्ठम् ऋजुतरं देवयानाख्यम् अनुनेषि अनुनयासि । पन्थां पन्थानम् । किञ्च । तव प्रणीती प्रणयनेन तवाभ्यनुज्ञानेन । पितरः नः अस्माकम् हे इन्दो देवेषु मध्ये रत्नं रमणीयं यज्ञफलम् अभजन्त धीराः धीमन्तः ॥ ५२ ॥

त्वं मनीषा मनीषया स्वप्रज्ञया रजिष्ठमृजुतमं देवयानं पन्थां पन्थानमनुनेषि अनुनयासि प्रापयासि । मनीषा तृतीयैकवचने पूर्वसवर्णदीर्घः । अत्यन्तमृजुः रजिष्ठः अतिशायने तमबिष्ठनौ विभाषर्जोश्छन्दसीति ऋकारस्य र इष्ठादिषु । पन्थाम् अयस्मयादीनि छन्दसीति सर्वनामस्थानेऽपि पदसंज्ञायां नलोपः प्रातिपदिकान्तस्येति नलोपे सवर्णदीर्घे पन्थामिति रूपम् । अनुनेषि नयतेः शपि लुते गुणे लटि रूपम् । कीदृशस्त्वम् प्रचिकितः कित् ज्ञाने प्रकर्षेण चिकितः चेतनावान् विशिष्टचैतन्ययुतः । किञ्च हे इन्दो ! सोम ! नोऽस्माकं पितरः तव प्रणीती प्रणीत्या प्रणयनेनाभ्यनुज्ञानेन देवेषु विषये रत्नं रमणीयं यज्ञफलमभजन्त सिषेविरे सोमयागेनैव स्वर्गा-

न्तेः । कीदृशाः पितरः धीराः धीमन्तः यज्ञज्ञानवन्तः ॥ ५२ ॥

**त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधीँ २ ॥ रपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥ ५३ ॥**

त्वया हि नः । यस्मात्त्वया आश्रयभूतेन नः अस्माकं पितरः हे सोम पूर्वे पूर्वजाः कर्माणि चक्रुः । कृतवन्तः हे पवमान । धीराः धीमन्तः । अव अतः प्रार्थये च त्वाम् वन्वन् संभजमानः तानि तानि कर्माण्यस्मदीयानि । अवातः वाताद्युपद्रवरहितः एकचित्तः । परिधीन् सर्वतो निहितान् यज्ञोपद्रवकारिणः अपोर्णु । ऊर्णुञ् आच्छादने । अपगमय । वीरेभिः वीरैश्चाश्वैश्च सहितः । मघवा धनवान् भवा नः अस्माकम् । यो यस्य ददाति स तस्य धनवानिति मतिः ॥ ५३ ॥

हे सोम ! हे पवमान ! शोधक ! नोऽस्माकं धीरा धीमन्तः पूर्वे पूर्वजाः पितरः हि यस्मात्कारणात् त्वया कृत्वा कर्माणि यज्ञादीनि चक्रुः अतः प्रार्थये त्वं परिधीनुपद्रवकारिणः अपोर्णुहि अपगमय ऊर्णुञ् आच्छादने लोट् परिदधाति सर्वत उपद्रवाय तिष्ठन्ति ते परिधयो यज्ञोपद्रावकाः । कीदृशस्त्वं वन्वन् वनुत इति वन्वन् अस्मत्कर्माणि सम्भजमानः । तथा वातः नास्ति वातो यस्य वात उपलक्षणं वाताद्युपद्रवरहितः किञ्च वीरेभिर्वीरैः अश्वैश्च सहितः सन्नोऽस्माकं मघवा धनवान् भव मघं धनमस्तीति मघवा यो यस्य दाता स तदीयधनवानिति लोकप्रसिद्धिः । भवेत्यस्य संहितायां दीर्घः परिधीन् अपेत्यत्र दीर्घादटि समानपाद इति ( पा० ८, ३, ९ ) नकारस्य रुः ॥ ५३ ॥

**त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आततन्थ । तस्मै त इन्द्रो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥ ५४ ॥**

त्वं सोम । यस्त्वं हे सोम पितृभिः संविदानः संवादं कुर्वा-

णः । अनु द्यावापृथिवी आततन्थ । तनु विस्तारे अन्वातनोषि द्यावापृथिव्यौ दृढीकरोषि द्यावापृथिव्यौ । तस्मै तव हे इन्दो हविषा विधेम । हविर्दद्म इति वाक्यार्थः । वयं च हविःप्रदानानन्तरम्भवेम पतयो धनानां सोमवताम् पितॄणां षडृचम् ॥५४॥

हे सोम ! त्वं द्यावापृथिवी अन्वाततन्थ विस्तारितवान् तनु विस्तारे लिट् बभूथाततन्थेत्यादिना निपातः । किम्भूतस्त्वं पितृभिः संविदानः संवित्त इति संविदानः संवादं कुर्वाणः समो गमित्यादिना आत्मनेपदित्वाच्छानच् । हे इन्दो । तस्मै ते तुभ्यं वयं हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः विदधातिर्दानार्थः हविर्दानेन च वयं रयीणां धनानां पतयः स्याम भवेम ॥ ५४ ॥

**बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आगतावसा शन्तमेनाथा नः शं योररपो दधात ॥ ५५ ॥**

बर्हिषदः । तिस्र ऋचो बर्हिषदां हविर्यज्ञयाजिनो । बर्हिषदः बर्हिषि सीदन्तीति बर्हिषदः पितरः । ऊती ऊत्या अर्वाक् अर्वाञ्च आगच्छत । को हेतुरागमन इति चेत् । इमा इमानि वः युष्माकं हव्या हवींषि । चकृम । तानि जुषध्वम् सेवध्वम् । यैश्च युष्माभिरधस्तनानि हवींष्यासेवितानि । ते यूयं पुनरप्याहूयमानाः आगताः अवसा अन्नेन हविर्लक्षणेन । शन्तमेन । शमिति सुखनाम । सुखयितृतमेन हेतुभूतेन । अथ परितुष्टाः यज्ञसमाप्त्युत्तरकालम् नोऽस्माकम् शंयोः पदद्वयमेतत् । शमनञ्च रोगाणां दधात । यावनञ्च भयानां दधात । अन्यदपि यत्किञ्चित् । अपरः अपापं तदस्माकं दधात ॥ ५५ ॥

सोमवतां पितॄणां षडृचः समाप्तः अतो बर्हिषदां पितॄणां तृचः ॥ बर्हिषदः बर्हिषि दर्भे सीदन्तीति बर्हिषदः पृषोदरादित्वादन्त्यलोपः हे बर्हिषदः पितरः ! ते यूयमूत्या अवनेन निमित्तेन अर्वागागत

आगच्छत किमर्थमिति चेत् वो युष्माकमिमा इमानि हव्या हव्यानि वयं चकृम करोतेर्लिट् कृतवन्तः तानि यूयं जुषध्वं सेवध्वम्। अथानन्तरं शन्तमेन सुखयितृतमेनावसाऽऽन्नेन तर्पिताः सन्तो नोऽस्माकं शं सुखं रोगशमनं योः भयपृथक्करणमरपः पापाभावं च दधात धत्त स्थापयत तप्तनाबिति तबादेशात् श्नाभ्यस्तयोरात इति आलोपाभावः। शं योः शमनं च रोगाणां यावनं च भयानामिति (निरु० ४, २१) यास्कः। रपो रिप्रमिति पाप नामनी भवतः (निरु० ४, २१)॥ ५५॥

आहं पि॒तॄन्त्सु॑वि॒दत्राँ॑ २॥ अवि॑त्सि॒ नपा॑तं च वि॒क्रम॑णं च॒ विष्णोः॑। ब॒र्हि॒षदो॒ ये स्व॒धया॑ सु॒तस्य॒ भज॑न्त पि॒त्वस्त॑ इ॒हाग॑मिष्ठाः॥ ५६॥

आहम्। आ अवित्सि आभिमुख्येन वेद्मि विदितत्त्वात्। अहं पितॄन् सुविदत्रान्। सुविदत्रः। कल्याणदानः। कल्याणदानान्। नपातं च विक्रमणं च विष्णोः व्याप्तुर्यज्ञस्य। न विद्यते यत्रोपगतानां पातः स नपातः देवयानः पन्थाः। विविधं क्रमणं यत्र गतानां स विक्रमणाः। पितृयानः पन्थाः। तत्र हि अरघट्टघटीवत् उत्तराधरम् प्राणिनो गच्छन्ति। देवयानपितृयानौ पन्थानौ यज्ञसंबन्धिनावहं वेद्मि। तद्गतांश्च पितॄन्। यत एवमतो ब्रवीमि। बर्हिषदो ये पितरः स्वधया अन्नेन सहसवनीयलक्षणेन। सुतस्य अभिषुतस्य सोमस्य भजन्ते। पित्वः पानं सोमपानम् ते इह अस्मिन् कर्मणि आगमिष्ठाः आगच्छन्त्वित्याख्यातसङ्गतिः॥ ५६॥

अहं पितॄन् आ अवित्सि आभिमुख्येन वेद्मि विदितवान् विदेर्लुङि आत्मनेपदे उत्तमैकवचने रूपम्। कीदृशान् पितॄन् सुविदत्रान् सुष्ठु विशेषेण ददतीति सुविदत्राः तान् कल्याणदानान्। किञ्च वेवेष्टि विष्णुः तस्य विष्णोः व्यापनशीलस्य यज्ञस्य यज्ञो वै विष्णुरिति (१, १, ३, १) श्रुतेः। तस्य नपातं विक्रमणं च वेद्मि नास्ति

पातो यत्र स नपातो देवयानपथः यत्र गतानां पातो नास्ति विविधं क्रमणं गमनागमनं यत्र स विक्रमणः पितृयानपथः यत्र गतानां पुनर्भोगान्ते पतनम् यज्ञसम्बन्धिनौ देवयानपितृयानौ पन्थानौ वेद्मीत्यर्थः उदूगामिनः पितॄंश्च । अतो ब्रवीमि ये बर्हिषदः पितरः स्वधया सवनीयलक्षणेनान्नेन सह सुतस्याभिषुतस्य सोमस्य पित्वः पानं भजन्त भजन्ते सेवन्ते लङ् अडभाव आर्षः ते इह यज्ञे आगमिष्ठाः आगच्छन्तु लोडर्थे लुङ् पुरुषवचनव्यत्ययः ॥ ५६ ॥

उप॑हूताः पि॒तरः॑ सो॒म्यासो॑ बर्हि॒ष्ये॑षु नि॒धिषु॑ प्रि॒येषु॑ । त आग॑मन्तु॒ त इ॒ह श्रु॑वन्त्वधि॑ब्रुवन्तु॒ ते॑ऽवन्त्व॒स्मान् ॥ ५७ ॥

उपहूताः पितरः सोम्यासः सोमसंपादिनः । बर्हिष्येषु निधिषु प्रियेषु । हविर्विशेषणान्येतानि । बर्हिषि भवेषु बर्हिष्येषु बर्हिषि सादितेषु हविःष्वित्यर्थः । निधिभूतेषु पितॄणां प्रियेषु अभिरुचितेषु ते पितर एतत् ज्ञात्वा आगमन्तु आगच्छन्तु आगत्य च । ते इह श्रुवन्तु शृण्वन्तु आस्मदीयानि वचांसि । श्रुत्वा च अधिब्रुवन्तु यद्वक्तव्यं पितृभिः पुत्राणाम् ते च अवन्तु रक्षन्तु सर्वतः अस्मान् ॥ ५७ ॥

हे पितरः ! इह यज्ञे आगमन्तु आगच्छन्तु व्यत्ययेन शपो लुक् ते श्रुवन्तु अस्मद्वचः शृण्वन्तु श्रुत्वा च अधिब्रुवन्तु पितृभिः पुत्राणां यद्वक्तव्यं तद्वदन्तु ते अस्मानवन्तु । कीदृशाः पितरः प्रियेषु अभिरुचितेषु हविःषु उपहूताः सोम्यासः सोम्याः कीदृशेषु प्रियेषु बर्हिष्येषु बर्हिषि भवानि बर्हिष्याणि तेषु बर्हिषि सादितेषु तथा निधिषु निधिवत् स्थापनीयेषु ॥ ५७ ॥

आय॑न्तु नः पि॒तरः॑ सो॒म्यासो॑ऽग्निष्वा॒त्ताः प॒थिभि॑र्दे॒व॒यानैः॑ । अ॒स्मिन् य॒ज्ञे स्व॒धया॒ मद॒न्तोऽधि॑ब्रुवन्तु॒ ते॑ऽवन्त्व॒स्मान् ॥ ५८ ॥

आयन्तु नः । चतस्रोऽग्निष्वात्तेभ्यः । आयन्तु आगच्छन्तु

नः अस्माकं पितरः । सोम्यासः सोमसंपादिनः । अग्निष्वाताः पुनः यान् अग्निरेव स्वदयति । नहि ते श्रौतस्मार्त्तकर्मकारिणः । पथिभिर्देवयानैः । देवसहगमनैः । देवसह यायिनस्ते पितरो येषामेतत्कर्म क्रियते पुत्रपौत्रप्रपौत्रैः ।

उक्तञ्च ।

पुत्रेण लोकं जयति पौत्रेणानन्त्यमश्नुते ।

अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपमिति ।

आगत्य च । अस्मिन्यज्ञे स्वधया अन्नेन मदन्तः । तृप्यन्तः-परिपुष्टा अधिब्रुवन्तु । तेऽवन्त्वस्मानिति व्याख्यातम् ॥ ५८ ॥

चतस्र ऋचोऽग्निष्वात्तानां पितृणाम् ॥ नोऽस्माकं पितरः देवयानैः पथिभिर्मार्गैः आयन्तु आगच्छन्तु देवैः सह यान्ति पितरो येषु ते देवयाना मार्गाः तैः । कीदृशाः पितरः सोम्यासः सोम्याः सोमपानार्हाः । अग्निष्वात्ताः अग्निना स्वात्ताः स्वादिताः अग्निर्यान् दहन् स्वादयति । श्रौतस्मार्तकर्मानुष्ठायिनः । येषां पुत्रादिभिरेतत् कर्मानुष्ठीयते तदुक्तम् पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपामिति । किञ्च पितर आगत्यास्मिन् यज्ञे स्वधयान्नेन मदन्तः तृप्यन्तस्तुष्टाः सन्तो नोऽस्मानधिब्रुवन्तु अधिकान् वदन्तु तद्वाक्यात्तथैव वयमधिकाः स्यामेत्यर्थः ते पितरोऽस्मानवन्तु पालयन्तु ॥ ५८ ॥

**अग्निष्वात्ताः पितर एह गच्छत सदः-सदः सदत सुप्रणीतयः । अत्ता हवीᳬषि प्रयतानि बर्हिष्यथा रयिᳬ सर्ववीरं दधातन ॥ ५९ ॥**

अग्निष्वात्ताः पितरः आ इह गच्छत । आगच्छत इह । एत्य च । सदःसदः गृहंगृहं प्रतिसदत उपाविशत । हे सुप्रणीतयः सानुप्रणयनः । ततः सुखोपविष्टाः अत्त भक्षयत । हवींषि प्रयतानि व्यपगतरागद्वेषमोहैरभिसंस्कृतानि शुचीनि । बर्हिषि

अन्नानि । अथ तृप्ताः सन्तः रयिं धनं सर्ववीरं दधात । न । नकार उपजनः ॥ ५९ ॥

हे अग्निष्वात्ताः पितरः ! इह यज्ञे यूयमागच्छत आगत्य च सदः सदः—प्रतिगृहं सदत उपविशत नित्यवीप्सयोरिति द्वित्वम् । कीदृशा यूयं सुप्रणीतयः शोभना प्रणीतिः प्रणयनं येषां ते । ततः सदस्युपविष्टाः सन्तः हवींषि अत्त भक्षयत अत्त लोट् संहितायां दीर्घः । कीदृशानि हवींषि बर्हिषि दर्भे प्रयतानि नियमपूर्वकं स्थापितानि प्रकर्षेण यम्यन्ते नियम्यन्ते तानि प्रयतानि । अथानन्तरं तृप्ताः सन्तः सर्ववीरं रयिं दधातन स्थापयत सर्वे वीराः पुत्रा यत्र तम् । निपातस्य चेति दीर्घोऽथशब्दस्य तप्तनबिति तनबादेशः ॥ ५९ ॥

ये अ॑ग्निष्वा॒त्ता ये अन॑ग्निष्वात्ता मध्ये॑ दि॒वः स्व॒धया॑ मा॒दय॑न्ते । तेभ्यः॑ स्व॒राडसु॑नीतिमे॒तां य॑थाव॒शं त॒न्व॑ कल्पयाति ॥ ६० ॥

ये अग्निष्वात्ताः । ये पितरः अग्निष्वात्ताः अग्निना आस्वादिताः । ये च अनग्निष्वात्ताः श्मशानकर्माप्राप्ताः । मध्ये दिवः द्युलोकस्य स्वधया स्वकर्मफलोपभोगेन मादयन्ते सुखं संसेवन्ते । तेभ्यः । तेषामिति विभक्तिव्यत्ययः । स्वराट् स्वयमेव राजत इति स्वराट् । अकृतकैश्वर्यो यः स स्वराडुच्यते । असुनीतिम् एताम् आत्मनो द्वितीयं सहायं कृत्वा । असून् प्राणान्नयतीत्यसुनीतिः । एताम् एतमिति लिङ्गव्यत्ययः । यथाकामं यथारुचि तन्वं शरीरं कल्पयाति कल्पयतु ॥ ६० ॥

ये पितरः अग्निष्वात्ताः अग्निना दग्धाः विधिवदौर्ध्वदेहिकं प्राप्ताः ये चानग्निष्वात्ता न अग्निना स्वादिता अदग्धाः श्मशानकर्म न प्राप्ता सन्तः दिवः स्वर्गस्य मध्ये स्वधयान्नेन स्वकर्मोपार्जितेन मादयन्ते तृप्यन्ति सुखं सेवन्ते । स्वराट् स्वेनैव राजते स्वराट् यमः तेभ्यः पितृभ्योऽर्थे यथावशं वशोऽभिलाषः यथाकाममेतां मनुष्यसम्बन्धिनीं तन्वं शरीरं कल्पयाति कल्पयतु लेट् लेटोऽडा-

टौ तेभ्यो नरशरीरं यमो ददात्वित्यर्थः । कीदृशीं तन्वमसुनीतिम् असून् प्राणान् नयति प्राप्नोत्यसुनीतिः प्राणयुक्ता चिरकालजीविनीत्यर्थः ते यथा पुनः स्तम्भनं कुर्वन्ति ॥ ६० ॥

**अग्निष्वात्तानृतुमतो हवामहे नाराशꣳसे सोमपीथं य आशुः । ते नो विप्रासः सुहवा भवन्तु वयꣳ स्याम पतयो रयीणाम् ॥ ६१ ॥**

अग्निष्वात्तान् । अग्निष्वात्तान् पितॄन् ऋतुमतः ऋतुसंयुक्तान् हवामहे आह्वयामः । नाराशंसे चमसे । सोमपीथं सोमपानम् ये आशुः प्राप्नुयुः । नाराशंसे चमसे पितॄणां भक्षः श्रूयते । अथ यदि नाराशंसेषु सन्न इत्युक्रम्य । पितृभ्यो नाराशꣳसेभ्य इति । ते चाहूयमानाः विप्रासः मेधाविनः सुहवाः स्वाह्वाना भवन्तु । एवं कृते वयं स्याम पतयो रयीणाम् ॥ ६१ ॥

अग्निष्वात्तान् पितॄन् वयं हवामहे आह्वयामः । कीदृशानृतुमतः ऋतवो विद्यन्ते येषु ते ऋतुमन्तः तानृतुयुक्तानाह्वयामः । ये पितरो नाराशंसे चमसे सोमपीथं सोमपानमाशुः अश्नन्ति स्म अश भोजने लिट् अथ यदि नाराशꣳसेषु सन्न इत्युपक्रम्य पितृभ्यो नाराशꣳसेभ्यः स्वाहेति जुहुयादिति ( १२, ६, १, ३३ ) श्रुत्या नाराशंसे चमसे पितॄणाम् भक्षः प्रतिपादितः । ते पितरो नोऽस्माकं सुहवाः स्वाह्वाना भवन्तु अस्मदाहूताः शीघ्रमायान्त्वित्यर्थः । एवं पितृष्वाहूतेषु वयं रयीणां धनानां पतयः स्वामिनः स्याम भवेम ॥ ६१ ॥

**आच्या जानु दक्षिणतो निषद्येमं यज्ञमभिगृणीत विश्वे । मा हिꣳसिष्ट पितरः केनचिन्नो यद्व आगः पुरुषता कराम ॥ ६२ ॥**

आच्या जानु । दशर्चोऽनुवाकः । तत्र नव पित्र्या दशम्यैन्द्री गायत्री । द्वितीयातृतीये नवमी चानुष्टुभः । त्रिष्टुभ इतराः । पितर उच्यन्ते । आच्या जानु सव्यं जानु पातयित्वा । दक्षिणतो

निपद्य दक्षिणतोऽवस्थानं कृत्वा । रूपतोऽयं निर्देशः । एवं स्वभावा ह्येते । अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदिति श्रुतिः । इममस्मदीयं यज्ञम् अभिगृणीत अभिष्टुत दक्षिणामन्त्रकालकर्तृहविर्यजमानोत्कर्षैः साध्वयं यज्ञ इति । विश्वे सर्वे सोमवन्तः बर्हिषदः अग्निष्वात्ताश्च । मा च हिंसिष्ट । मा च हिंसां कुरुत । हे पितरः । केनचिदपि नः अस्मान् यत् यद्यपि वः युष्माकम् आगः अपराधः आगःशब्दः सान्तो नपुंसकलिङ्गोऽपराधवचनः । पुरुषता । विभक्तिलोपः पुरुषत्वेन चलचित्ततया । कराम कुर्मः ॥ ६२ ॥

कात्यायनेन आच्य जान्वित्यनुवाकस्य विनियोगो नोक्तः उदीरतामित्यनुवाकद्वयस्य श्राद्धेऽश्नत्सु द्विजेषु जपे विनियोगः ॥ दशर्चोऽनुवाकः आद्या नव पितृदेवत्याः । द्वे त्रिष्टुभौ । हे पितरः ! विश्वे सर्वे सोमवन्तो बर्हिषदोऽग्निष्वात्ताश्च यूयमिमं यज्ञं सौत्रामणामभिगृणीत आभिष्टुत दक्षिणामन्त्रकालकर्तृहविर्यजमानोत्कर्षैः साध्वयं यज्ञ इति स्तुतिं कुरुतेत्यर्थः । किं कृत्वा जान्वाच्य वामजानु पातयित्वा तथा दक्षिणतो निषद्य दक्षिणाभिमुखा उपविश्य स हि तेषां स्वभावः अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन्निति श्रुतेः । किञ्च हे पितरः ! केनचित् केनाप्यपराधेन नोऽस्मान् मा हिंसिष्ट हिंसां मा कुरुत हिनस्तेर्लुङ् । यत् यस्मात् पुरुषता पुरुषस्य भावः पुरुषता विभक्तिलोपः पुरुषभावेन चलचित्तत्वेन वो युष्माकमागोऽपराधं वयं कराम कुर्मः करोतेः शपि लङि रूपम् अडभावः । यद्यप्यपराधिनो वयं तथापि मास्मान् वधिष्टेत्यर्थः ॥ ६२ ॥

आसी॑नासो अरु॒णीना॑मु॒पस्थे॑ र॒यिं ध॑त्त दा॒शुषे॒ मर्त्या॑य । पु॒त्रेभ्यः॑ पितर॒स्तस्य॒ वस्वः॒ प्रय॑च्छत॒ त इ॒होर्जं॑ दधात ॥ ६३ ॥

आसीनासः । ये यूयमासीनाः अरुणीनाम् अरुणवर्णानाम् अरुणवर्णा हि ता ऊर्णा भवन्ति याभिः कुतपाः क्रियन्ते ।

कुतपप्रियाश्च पितरः । कुतपञ्चासने दद्यादिति स्मृतिः । यद्वा अरुणवर्णानाम् रश्मीनाम् उपस्थे उत्सङ्गे आसीना आदित्यलोकजितः पितर उच्यन्ते । रयिं धनम् धत्त दत्त । दाशुषे हवींषि दत्तवते यजमानाय मर्त्याय मनुष्याय । पुत्रेभ्यश्च हे पितरः । यजमानार्थं पुत्रवचनम् । सर्वे हि पितॄणां पुत्रा यजमानाः । तस्य यजमानस्य वस्वः प्रयच्छत दत्त । यदभिप्रेतं वसुनो धनस्य च इह अस्मदीये यज्ञे ऊर्जं दधात स्थापयत ॥ ६३॥

हे पितरः ! दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय यूयं धनं धत्त दत्त । कीदृशा यूयम् अरुणीनामरुणवर्णानामूर्णानामुपस्थे उपरिभागे असीनासः आसीनाः उपविष्टाः याभिः कुतपा क्रियन्ते ता ऊर्णा अरुणा भवन्ति कुतपं वासने दद्यादिति स्मृतेः कुतपप्रियाः पितरः । यद्वा अरुणीनामरुणवर्णानां रश्मीनामुपस्थे उत्सङ्गे आसीना आदित्यलोकस्था इत्यर्थः । किञ्च हे पितरः । पुत्रेभ्यो यजमानेभ्यः तस्य वस्वः वसुनो धनस्य प्रयच्छत दत्त कर्मणि षष्ठी यदभीष्टं धनं तद् दत्त । पितृणां पुत्रा एव ययमानाः । ते यूयमिहास्मदीये यज्ञे ऊर्जं रसं दधात स्थापयत ॥ ६३ ॥

यमग्ने कव्यवाहन् त्वं चिन्मन्यसे रयिम् । तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥ ६४ ॥

यमग्ने कव्यवाहन । स्विष्टकृदग्निरुच्यते । चतसृभिर्ऋग्भिः । हे अग्ने कव्यवाहन । कव्यं वोढव्यमेतयमधिकारो यस्य स एवं संबोध्यते । यं रयिं हविर्लक्षणं धनम् त्वं चित् त्वमपि मन्यसे अवगच्छसि । साधु शक्यते तेन श्रेयः प्राप्तुमिति । तं हविर्लक्षणं रयिं धनम् नः अस्माकं स्वभूतम् गीर्भिः वाग्भिः पुरोनुवाक्यायाज्यावषट्कारलक्षणाभिः श्रवाय्यम् हविर्विशेषणमेतत् श्रवणीयम् देवत्रा देवेभ्यः पनय देहि । पनतिर्दानकर्मा । युजं यथायोगम् ॥ ६४ ॥

द्वे अनुष्टुभौ । कव्यं पितृभ्यो देयमन्नं वहतीति कव्यवाहनः कव्यपुरीषपुरीष्येषु ञ्युडिति ञ्युट्प्रत्ययः । हे कव्यवाहन ! हे अग्ने ! त्वं चित् त्वमपि यं रयिं हविर्लक्षणं धनं मन्यसे उत्तमं जानासि नोऽस्माकं तं रयिं देवत्रा देवेषु पनय देहि पनातिर्दानकर्मा देवमनुष्यपुरुषेत्यादिना सप्तम्यर्थे देवात् त्राप्रत्ययः । कीदृशं रयिं गीर्भिः वाग्भिः पुरोऽनुवाक्याज्यावषट्कारलक्षणाभिः श्रवाय्यं श्रोतुं योग्यम् श्रुदक्षिस्पृहिगृहिदयिभ्य आय्य इति ( उणा० ३, ९९ ) शृणोतेराय्यप्रत्ययः । तथा युजं युज्यत इति युक् तम् क्विप् चेति क्विप्प्रत्ययः योग्यम् ॥ ६४ ॥

यो अ॒ग्निः क॑व्य॒वाह॑नः पि॒तॄन्यक्ष॑दृता॒वृधः॑ । प्रेदु॑ ह॒व्यानि॑ वोचति दे॒वेभ्य॑श्च पि॒तृभ्य॒ आ ॥ ६५ ॥

यो अग्निः कव्यवाहनः कव्यं पितॄणां हविरुच्यते । यच्च हविः पितॄन् यक्षत् इष्टवान् ऋतावृधः सत्यवृधो वा यज्ञवृधो वा । द्वितीयाबहुवचनमेतत् स इदानीम् प्रेदु हव्यानि वोचति । प्रवोचति प्रब्रवीतु हव्यानि हवींषि । देवेभ्यश्च पितृभ्य आ । समुच्चयार्थीय आकारः । देवेभ्यश्च पितृभ्यश्च । इमानि देवेभ्य इमानि पितृभ्य इति ॥ ६५ ॥

यः कव्यवाहनोऽग्निः पितॄन्यक्षदिष्टवान् लेटोऽडाटौ सिब्बहुलं लेटि इतो लोपः । कीदृशान् पितॄन् ऋतावृधः ऋतं सत्यं यज्ञं वा वर्धयन्ति ते ऋतवृधः संहितायां दीर्घः तान् । सोऽग्निरिदानीं देवेभ्यः पितृभ्यश्च हव्यानि हवींषि प्रवोचाति प्रब्रवीतु इमानि देवेभ्य इमानि पितृभ्य इति वदत्वित्यर्थः । इत् उ निपातौ पादपूरणौ । आकारः समुच्चयार्थः । व्यत्ययेन वचेः शपि वच उमिति छान्दस उमागमः ॥ ६५ ॥

त्वम॑ग्न ईडि॒तः क॑व्यवाह॒नावा॑ड्ढ॒व्यानि॑ सुर॒भी॑णि कृ॒त्वी । प्रादाः॑ पि॒तृभ्यः॑ स्व॒धया॒ ते अ॑क्षन्न॒द्धि त्वं दे॑व॒ प्रय॑ता ह॒वीꣳषि॑ ॥ ६६ ॥

त्वमग्ने । यस्त्वं हे अग्ने ईडितः अध्येषितः सन् कव्यवाहन अवाट् वह प्रापणे । अस्यैतद्रूपम् । ऊढवानसि । हव्यानि हवींषि । सुरभीनि सुगन्धीनि । कृत्वी कृत्वा । कृत्वा हवींषि । प्रादाः प्रदत्तवानसि पितृभ्यः स्वधया पितृमन्त्रेण । ते च पितरः । अक्षन् अत्तवन्तो भक्षितवन्तः । अद्धि भक्षय त्वं हे देव । प्रयता प्रयतानि शुचीनि । हवींषि ॥ ६६ ॥

चतस्रस्त्रिष्टुभः । हे कव्यवाहन ! हे अग्ने । त्वं हव्यानि हवींषि सुरभीणि कृत्वी सुगन्धीनि कृत्वा अवाट् वहसि स्म । वहेर्लुङि इडागमाभाव सिचो लोपे रूपमवाट् । स्नात्व्यादयश्चेति कृत्वीति निपातः । कीदृशस्त्वम् इडितः देवैर्ऋत्विग्भिश्च । किञ्च हव्यानि ऊढा स्वधया पितृमन्त्रेण पितृभ्यः त्वं प्रादाः दत्तवानसि ददातेर्लुङि रूपम् । ते च पितरः अक्षन् भक्षयन्ति स्म घस्लृ अदने इत्यस्य रूपम् । हे देव ! त्वमपि अद्धि हवींषि भक्षय अद भक्षणे लोट् । कीदृशानि हवींषि प्रयता प्रयतानि शुद्धानि ॥ ६६ ॥

ये चे॒ह पि॒तरो॒ ये च॒ नेह याँश्च॑ वि॒द्म याँ २॥ उ॑ च॒ न प्र॑वि॒द्म । त्वं वे॑त्थ॒ यति॒ ते जा॑तवेदः स्व॒धाभि॑र्य॒ज्ञꣳ सुकृ॑तं जुषस्व ॥ ६७ ॥

ये चेह । ये पितर इहास्मिन्समीपे इह वा लोके आसते । ये च नेह । यान् च पितॄन् विद्मः अवगच्छामः यान् उ इति निपातः पादपूरणः । च न प्रविद्मः न प्रजानीमः । त्वं वेत्थ यति ते जातवेदः । तेशब्दः आदौ क्रियते द्वितीयान्तो वाक्यस्य बलीयस्त्वात् । तान्त्वं वेत्थ वेत्सि जानासि । यति । अविभक्तिको निर्देशः । यतीन् शुचीन् नित्यनैमित्तिककर्मकरणाग्निदग्धकल्मषान् । हे जातवेदः । अत एवमुच्यसे । स्वधाभिः पितृसंबद्धैर्हविर्भिः यज्ञं पितृयज्ञम् सुकृतं साधु कृतम् जुषस्व सेवस्व ॥ ६७ ॥

ये पितर इह लोके वर्त्तन्ते ये च इह लोके न सन्ति यांश्च पितॄन् वयं विद्म जानीमः उ पादपूरणः यांश्च पितॄन् वयं न प्रविद्म प्रकर्षेण जानीमः । हे जातवेदः । ते पितरो यति याचन्तो वर्तन्ते तान् त्वं वेत्थ जानासि । या संख्या येषां ते यति किमः संख्यापरिमाण इत्यादिना सूत्रेण यत्तद्भ्यामपि डतिरिति वार्त्तिकेन यत् शब्दात् डतिप्रत्ययः डति चेति तस्य षट्संज्ञत्वात् षड्भ्यो लुगिति जसो लुक् । यद्वा यतीन् शुचीन् नित्यनैमित्तिकानुष्ठानैर्निष्पापान् ते तान् त्वं वेत्थ यति विभक्तिलोपः ते इत्यत्र व्यत्ययेन जस् । किञ्च स्वधाभिः पितॄणामन्नैः सुकृतं शोभनं कृतं यज्ञं त्वं जुषस्व सेवस्व॥६७॥

**इ॒दं पि॒तृभ्यो॒ नमो॑ऽस्त्व॒द्य ये पूर्वा॑सो॒ य उप॑रास॒ ई॒युः । ये पार्थि॑वे॒ रज॒स्या निष॑त्ता॒ ये वा॑ नू॒नꣳ सु॑वृ॒जना॑सु वि॒क्षु ॥ ६८ ॥**

इदं पितृभ्यः । इदमिति प्रत्यक्षतो निर्देशः । पितृभ्यो नमः अन्नं हविर्लक्षणम् अस्तु । अद्य अद्यतनम् ये पितरः पूर्वासः पूर्वमीयुः स्वर्गम् ये च उपरासः उपरतव्यापाराः कृतकृत्याः परं ब्रह्म ईयुर्याताः । ये च पार्थिवे रजसि । पृथिव्यां भवं पार्थिवं रजः ज्योतिरग्निः तत्र आनिषत्ताः आभिमुख्येन निषण्णाः । अग्निलोकं प्राप्ता इत्यर्थः । ये वा ये च नूनं निश्चयेन सुवृजनासु । साधु वृत्तासु विक्षु यजमानेषु निषण्णाः । तेभ्य इदं पितृभ्यो नमो अस्त्वद्येति सम्बन्धः ॥ ६८ ॥

ये पितरः पूर्वासः पूर्वे ईयुः स्वर्गं जग्मुः ये च उपरासः उपराः उपरमन्ते विरमन्ति ते उपरा उपरतव्यापाराः कृतकृत्याः सन्त ईयुः परं ब्रह्म प्रापुः । ये च पार्थिवे रजसि पृथिव्यां भवं पार्थिवं रजो ज्योतिरग्निः तस्मिन्वा निषत्ताः आभिमुख्ये निषण्णाः नसत्तनिषत्तेत्यादिना निष्ठायां निपातः । ये वा वा समुच्चयार्थः ये च नूनं निश्चितं विक्षु प्रजासु यजमानलक्षणासु निषण्णाः । कीदृशीषु विक्षु सुवृजनासु शोभनं वृजनं बलं यासां ताः सुवृजनास्तासु धर्मरूपबलयु-

क्तासु । अद्यास्मिन् दिने तेभ्यश्चतुर्विधेभ्यः स्वर्गब्रह्माग्नियजमानस्थेभ्यः इदं नमोऽन्नमस्तु ॥ ६८ ॥

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः । शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरपव्रन् ॥ ६९ ॥

अधा यथा । अथैवं सति यथा येन प्रकारेण नः अस्माकं पितरः परासः परा एव परासः उत्कृष्टाः प्रत्नासः । प्रत्नशब्दः पुराणवचनः । पुराणाः हे अग्ने ऋतं यज्ञम् आशुषाणाः अश्नुवानाः व्याप्नुवन्तः । शुचि अविभक्तिको निर्देशः । शुचिन्दीप्तं भास्वरम् । इच्छब्द एवार्थे । अयन् आगताः प्राप्ताः । दीधितिम् आदित्यरश्मिम् तत आहित्यमण्डलम् एष हि देवयानः पन्थाः । उक्थशासः उक्थानि ये शंसन्ति यज्ञेषु ते उक्थशासः पितॄणां विशेषणमेतत् एवं वयमपि हे अग्ने त्वत्प्रसादात् क्षामा भिन्दन्तः । क्षामा अविभक्तिको निर्देशः । क्षामां पृथिवीं भिन्दन्तः वेदिचात्त्वालयूपावटादिखननैः । यद्वा पृथिव्याश्रयाणि यज्ञे व्रीहिपशुयूपादीनि भिन्दन्तः । यज्ञं सर्वोपकरणमनुतिष्ठन्त इत्यर्थः । अरुणीः आरोचनाः । रश्मिम् अपव्रन् अपवृणुमः अपवृत्य च रश्मीन् देवपन्थानमनुतिष्ठाम इत्यर्थः ॥ ६९ ॥

हे अग्ने ! नोऽस्माकं पितरः अध अथानन्तरं देहयात्रोत्तरकालं यथा येन प्रकारेण शुचि सुपो लोपः इदेवार्थे शुचिनिर्मलं दीधितिं रविमण्डलमेव अयन् प्राप्ताः अयन् प्राप्ताः अय गतौ लङ् आडभाव आर्षः कीदृशाः पितरः परासः परा उत्कृष्टाः प्रत्नासः प्रत्नाः पुराणाः ऋतं यज्ञमाशुषाणाः अश्नुवाना व्याप्नुवन्तः । एवम्भूताः पितरः यथा देवयानं पन्थानं प्राप्ताः तथा वयमपि अरुणी अरुणवर्णाः सूर्यदीधितिमपव्रन् अपवृणुमः सूर्यरश्मीनपवृत्य देवयानमार्गं प्रा-

प्नुम इत्यर्थः । वृञ् वरणे विकरणव्यत्ययेन शपि लुप्ते लङि रूपम् अडभावः पुरुषव्यत्ययश्छान्दसः । कीदृशा वयमुक्थशासः यज्ञेषु उक्थानि शास्त्राणि शंसन्ति वदन्ति ते उक्थशासः क्विप् संहितायां दीर्घः । तथा क्षामा क्षामां भूमिं भिन्दन्तः वेदिचात्वालयूपावटोपरवादिखननैर्विदारयन्तः सर्वोपकरणैर्यज्ञं कुर्वन्त इत्यर्थः ॥६९॥

**उ॒शन्त॑स्त्वा॒ नि धी॑मह्यु॒शन्तः॒ समि॑धीमहि । उ॒शन्नु॑श॒त आव॑ह पि॒तॄन् ह॒विषे॒ अत्त॑वे ॥ ७० ॥**

उशन्तस्त्वा । वश कान्तौ अस्य कृतसंप्रसारणस्यैतद्रूपम् । हे अग्ने यतो वयमुशन्तः कामयमानाः त्वां निधीमहि स्थापयामहे । यतश्च उशन्तः कामयमाना एव समिधीमहि संदीपयामः । यतस्त्वमपि उशन्कामयमान एव । उशतः कामयमानानेव आवह पितॄन् । किमर्थमिति चेत् । हविषे अत्तवे हविषः अदनाय ॥ ७० ॥

अनुष्टुप् । हे अग्ने ! उशन्तः कामयमाना वयं तं त्वा निधीमहि स्थापयामः । कामयमाना एव वयं त्वां समिधीमहि सन्दीपयामः । त्वं च उशन् कामयमानः सन् उशतः कामयमानान् पितॄनावह आनय किं कर्त्तुं हविषे अत्तवे हविः अत्तुं भक्षयितुम् तुमर्थे तवेप्रत्ययः विभक्तिव्यत्ययः ॥ ७० ॥

**अ॒पां फेने॑न॒ नमु॑चेः॒ शिर॑ इन्द्रोद॑वर्त्तयः । विश्वा॒ यदज॑य॒ स्पृधः॑ ॥ ७१ ॥**

अथैन्द्रो मन्त्रः सोमो राजेत्यस्य निदानभूतः पठ्यते । अपां फेनेन । तृतीयपादप्रभृतिव्याख्यानं यच्छब्दयोगात् । विश्वाः सर्वाः यत् । यदा अजयः स्पृधः । संग्रामान् । अथ तदा अपां फेनेन फेनपुञ्जेन नमुचेः असुरस्य शिरः हे इन्द्र त्वमुदवर्त्तयः । उद्वर्तितवानसि । उत्पूर्वो वृत्तिःछेदने वर्तते ॥ ७१ ॥

इन्द्रो गायत्री अग्निमानुवाकनिदानभूता ॥ हे इन्द्र । यत् यदा

त्वं विश्वाः स्पृधः सर्वान् संग्रामानजयो जितवानसि तदा अपां फेनेन जलडिण्डीरेण नमुचेरसुरस्य शिरः उदवर्त्तयः छिन्नवानसि उत्पूर्वो वृत्तिः छेदार्थः ॥ ७१ ॥

सोमो राजामृतᳬ सुत ऋजीषेणाजहान्मृत्युम् । ऋतेन सत्यमिन्द्रियं विपानᳬ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७२ ॥

इदानीमेतञ्च मन्त्रं वक्ष्यमाणं चानुवाकं श्रुतिः संबध्नाति । तस्य शीर्षे छिन्ने लोहितामिश्रः सोमोऽतिष्ठत्तस्माद्बीभत्सन्त त एतदन्धसो विपानमपश्यन् सोमो राजामृतं सुत इति तेनैनं स्वदयित्वात्मन्नदधतेति सोमो राजा । अष्टौ ग्रहोपस्थानमश्विसरस्वतीन्द्रा अपश्यत् । आद्यास्तिस्रो महाबृहत्यः पङ्क्तिश्चतुर्थी अन्ते अतिजगत्यौ शेषे अतिशक्कर्यौ । यथा एककारणानि वसूनि विविच्यमानानि दृश्यन्ते । यथा पृथग्भूतानि संसृज्यानि पुनर्विवेच्यमानानि दृश्यन्ते । एवमयमपि लोहितमिश्रः सोमः सोम एवेत्यनुवाकार्थः । सोमो राजा । सोमः राजा सुतः अभिषुतः अमृतं संपद्यते रसीभावात् स्थूलस्य हि सूक्ष्मतामृतीभावः । ऋजीषरूपेणा चाजहात् त्यजति मृत्युम्मूर्तत्वादृजीषभावस्य सत्यमेतत् अनेन च ऋतेन सत्येन सत्यमेतत्सञ्जातम् इन्द्रियं वीर्यं विपानं विविक्तं लोहितात् सोमपानं पानयोग्यं वा विपानम् शुक्रं रजोहितम् अन्धसः अन्नात्संभूतम्भूयात् । अथ इन्द्रस्य इदमिन्द्रियं पयः अमृतं मधु भवतु ॥ ७२ ॥

का० ( १९, २, २४ ) सोमो राजेत्यनुवाकेन ग्रहानुपतिष्ठते युगपत् । अष्टचैनानुवाकेन समानकालमेव पयोग्रहान् सुराग्रहांश्चाध्वर्युरुपतिष्ठते यद्वा चतुर्भिः पयोग्रहांश्चतुर्भिः सुराग्रहान् ग्रहणानन्तरतरमेवोपस्थानम् मन्त्रपाठक्रमादत्रालेखीत्यर्थः ॥ अश्विसरस्वतीन्द्रदृष्टा अष्टौ ऋचः आद्यास्तिस्रो महाबृहत्यः यस्याश्चत्वारः पादा

अष्टकाः पञ्चमो द्वादशकः सा महाबृहती । सोमो राजा सुतोऽभिषुतः सन् अमृतममृतरूपो रसरूपो भवति स्थूलस्य सूक्ष्मतापादनममृतीभावः । यत ऋजीषेण ऋजीषं नीरसं सोमलताचूर्णम् तद्रूपेण मृत्युं स्थूलभावमजहात् जहाति । ऋतेन अनेन सत्येन एतत् सत्यम् ज्ञातम् यत् अन्धसोऽन्नस्य सोमस्य विपानं विविच्य पानं शुक्रं शुक्रं शुद्धमत एव इन्द्रियं वीर्य्यप्रदं भूयात् पयश्चेन्द्रस्येदृशं भवतु । कीदृशम् इन्द्रियं वीर्य्यवत् अमृतमजरामरत्वप्रदं मधु मधुरञ्च ॥ अपां फेनेनेत्यस्य मन्त्रस्याष्टाष्टर्चानुवाकस्य च श्रुत्या सम्बन्ध उक्तः (१२, ७, ३—४) तस्य शीर्षिण च्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत् तस्मादबीभत्सन्त त एतदन्धसो विपानमश्यन् सोमो राजामृतꣳ सुत इति तेनैनꣳ स्वदयित्वात्मन्नदधतेति । तथा एककारणानि वस्तूनि विविच्यमानानि दृश्यन्ते यथा च पृथग्भूतानि संसृष्टानि पुनर्विविच्यन्ते एवमयमपि लोहितमिश्रः सोमो विविक्तः सोम एवेति सर्वानुवाकार्थः ॥ ७२ ॥

**अ॒द्भ्यः क्षी॒रं व्य॑पिबत् क्रुङ्ङा॑ङ्गिर॒सो धि॒या । ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यम् वि॒पान॑ꣳ शु॒क्रमन्ध॑स॒ इन्द्र॑स्येन्द्रि॒यमि॒दं पयो॒ऽमृत॒ं मधु॑ ॥ ७३ ॥**

अद्भ्यःक्षीरम् । क्षीरोदकयोः संसृष्टयोः अद्भ्यः सकाशात् क्षीरं वियुज्य अपिबत् पीतवान् । क्रुङ् हंसः हंसजातिमास्थाय आङ्गिरसः प्राणः । सह्यङ्गानां रसः । धिया प्रज्ञया इत्थंभूता हि तस्य प्रज्ञा तस्यां जात्यामेव स्थितस्य भवति । सत्यमेतत् । अनेन ऋतेन सत्यमिन्द्रियं विपानं शुक्रम् अन्धसः संभूतं भूयात् अथ इन्द्रस्य इन्द्रियं निपानममृतं मधु भूयात् ॥ ७३ ॥

आङ्गिरसः अङ्गानां रसः प्राणो यथा क्रुङ् हंसो भूत्वा धिया प्रज्ञया अद्भ्यः सकाशात् क्षीरं दुग्धमपिबत् पिबति संसृष्टाभ्यां क्षीरोदकाभ्यां क्षीरमेव हंसः पिबतीति जातिस्वभावः । अनेन सत्येनेदं सत्यं यदन्धसो विपानं शुक्रं भवतु अथेन्द्रस्य पयो वीर्य्यममृतं भवतु ॥ ७३ ॥

सोममद्भ्यो व्यपिबच्छन्दसा हꣳसः शुचिषत् । ऋतेन सत्यमिन्द्रियम् विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७४ ॥

सोममद्भ्यः । सोमोदकयोः संसृष्टयोः सोमं वियुज्यापिबत् अद्भ्यः सकाशात् । छन्दसा छन्दोनिबद्धेन वेदेन । हंस आदित्यः शुचिषत् । एतत्सत्यम् ऋतेनेत्यादि समानम् ॥ ७४ ॥

हंसः आदित्यः अद्भ्यः सकाशात् छन्दसा वेदेन वेदरूपैः किरणैर्यथा सोमं व्यपिबत् पिबति सोमोदकाभ्यां रविः सोममेव पिबति । ऋतेनेत्युक्तम् । कीदृशः रविः शुचिषत् शुचि निर्मले गगने सीदतीति शुचिषत् ॥ ७४ ॥

अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियम् विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७५ ॥

अन्नात्परिस्रुतः । अन्नाद्धविर्लक्षणात् संपरिस्रुतश्च रसं ब्रह्मणा त्रयीलक्षणेन व्यपिबत् । क्षयश्च व्यपिबत् क्षत्रस्य पानं वशीकरणम् पयःसोमम् प्रथमशरीरी । सत्यमेतत् ऋतेन सत्यमिति समानम् ॥ ७५ ॥

अतिजगती द्वापञ्चाशदक्षरा । प्रजापतिः प्रथमशरीरी परिस्रुतोऽन्नात् सुरारूपादन्नात् रसं ब्रह्मणा गायत्रीलक्षणेन व्यपिबत् विविच्य पीतवान् क्षत्रञ्च व्यपिबत् वशीचकार क्षत्रियस्य पानं वशीकरणम् पयः सोमं च व्यपिबत् अनेन सत्येनेदं सत्यम् ॥ ७५ ॥

रेतो मूत्रं विजहाति योनिं प्रविशदिन्द्रियम् । गर्भो जरायुणावृत उल्वं जहाति जन्मना ॥ ऋतेन सत्यमिन्द्रियम् विपानꣳ शुक्रन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७६ ॥

रेतो मूत्रम् । व्यवहितपदप्रायः । रेतः विजहाति त्यज-

ति । योनिं स्त्रीप्रजननम् प्रविशत् इन्द्रियं शिश्नम् । योनिप्रवेशादन्यत्र मूत्रं विजहाति । तुल्यद्वारयोरपि मूत्ररेतसोर्मूत्रस्थानं हित्वान्यत्रावतिष्ठते रेतः । सत्यमेतत् ततः गर्भो जरायुणा आवृतः वेष्टितः । जरायुं च उल्वं च विजहाति त्यजति । जन्मना प्रसवेन सत्यमेतत् । नानास्थानानामेकद्वाराणां प्रथममुदाहरणम् एकस्थानानामेकद्वाराणां द्वितीयम् । ऋतेनेति व्याख्यातम् ॥ ७६ ॥

अतिशक्वर्यौ द्वे षष्ट्यक्षरातिशक्करी । इन्द्रियं पुम्प्रजननं शिश्नं योनिं स्त्रीप्रजननं प्रविशत् सत् रेतो वीर्य्यं विजहाति त्यजति योनिप्रवेशादन्यत्र मूत्रं विजहाति समानद्वारयोरपि रेतोमूत्रयोर्मूत्रस्थानादन्यत्र रेतोऽवतिष्ठते । जरायुणा गर्भवेष्टनेनावृतः गर्भः जन्मना कृत्वा उल्वं जरायु जहाति । भिन्नस्थानानामेकद्वाराणामाद्यमुदाहरणम् एकस्थानानामेकद्वाराणां द्वितीयम् । ऋतेनेति व्याख्यातम् ॥ ७६ ॥

दृष्ट्वा रूपे व्याकरोत्सत्यानृते प्रजापतिः । अश्रद्धामनृतेऽदधाच्छ्रद्धाᳬं सत्ये प्रजापतिः ॥ ऋतेन सत्यमिन्द्रियम् विपानᳬं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७७ ॥

दृष्ट्वा रूपे । दृष्ट्वा उपलभ्य रूपे सत्यानृतयोः । इदं सत्यमेवंरूपमिदमनृतमेवंरूपमिति व्याकरोत् । व्याकरणं पृथक्कार्यावस्थानम् । कथं व्याकरोत् । अश्रद्धाम् अनृते अदधात् अनृतनिमित्तत्वात् अश्रद्धायाः । श्रद्धामास्तिक्यम् सत्ये । कः अदधात् । प्रजापतिः । सत्यमेतत् ऋतेनेति व्यख्यातम् ॥ ७७ ॥

प्रजापतिः रूपे रूपवती मूर्त्तिमती सत्यानृते दृष्ट्वा व्याकरोत् । व्याकरणं पृथक्त्वं कृतवान् इदं सत्यमिदमनृतमिति पृथगत्रास्थापयत् । तदेवाह । अनृते अश्रद्धां नास्तिक्यमदधात् अस्थापयत् अनृ-

तस्याश्रद्धानिमित्तत्वात् । सत्ये श्रद्धामदधात् सत्यस्य श्रद्धानिमित्तत्वात् श्रद्धास्तिक्यबुद्धिः अनेन ऋतेनेत्युक्तम् ॥ ७७ ॥

**वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापतिः ॥ ऋतेन सत्यमिन्द्रियम् विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७८ ॥**

वेदेन रूपे । वेदेन परिज्ञानेन त्रय्या वा विद्यया । रूपे सुतासुतयोः व्यपिबत् । सुतः सोम उच्यते पयश्चासुतः । परिस्रुत्प्रजापतिः । सत्यमेतत् अनेन ऋतेनेति व्यख्यातम् ॥ ७८ ॥

महाबृहती । प्रजापतिः सुतासुतौ सुतासुतयोः रूपे वेदेन ज्ञानेन त्रय्या विद्यया वा व्यपिबत् विविच्य पीतवान् सुतः सोमः असुतः पयः परिस्रुच्च । ऋतेनेत्युक्तम् ॥ ७८ ॥

**दृष्ट्वा परिस्रुतो रसꣳ शुक्रेण शुक्रं व्यपिबत् । पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियम् विपानꣳ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७९ ॥**

दृष्ट्वा परिस्रुतः । रसं शुक्रेण अमलेन शुक्रममलम् । वियुज्य अपिबत् पयश्च सोमं च द्वे प्रजापतिः । सत्यमेतत् । ऋतेनेति व्याख्यातम् ॥ ७९ ॥

अतिजगती । प्रजापतिः परिस्रुतः सुराया रसं दृष्ट्वा शुक्रेण शुद्धेन मन्त्रेण पयः सोमं च शुक्रं शुक्रं शुद्धं कृत्वा व्यपिबत् वियुज्य पीतवान् । ऋतेनेत्युक्तार्थम् ॥ ७९ ॥

**सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति । अश्विना यज्ञꣳ सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यन् ॥ ८० ॥**

खुरैस्त्रसाग्रहान् द्वात्रिंशतं जुहोति । सीसेनेति प्रत्यृचम् पो-

डश जगत्यः । यथेन्द्रस्य भैषज्यं क्रियते तथा आभिरुच्यते । यज्ञः पटेन रूप्यते प्रथमायामृचि । सीसेन ऊर्णासूत्रेण च तन्त्रमिव पूर्वापरैः सूत्रैर्दक्षिणोत्तरैश्च वयन्ति यज्ञं के वयन्ति । मनीषिणः मेधाविनः । कवयः क्रान्तदर्शनाः । मनसा पर्य्यालोच्याः । गुणत उक्त्वा अथेदानीं नामत आह । अश्विनौ सविता सरस्वती वरुणश्च किमर्थं पुरस्कृत्य यज्ञं वयति इन्द्रस्य रूपं भिषज्यन् ॥ ८० ॥

का० ( १९, ४, १२ ) खुरैर्वसाग्रहान्द्वात्रिंᳪशतं जुहोति सीसेनेति प्रत्यृचम् । पञ्चपलो ग्रह इति परिशिष्टोक्तेः ऋषभखुराणां महत्त्वाच्चार्षभैः खुरैः पशूनां वसां गृहीत्वा सीसेनेति प्रतिमन्त्रं द्वात्रिंशत्संख्यान् सुराग्रहान् जुहोति एकेन मन्त्रेण द्वयोर्होम इत्यर्थः ॥ अश्विसरस्वतीन्द्रदेवत्याः षोड़श जगत्यः । जगतीभिर्जुहोतीति ( १२, ८, ३, १३, ) श्रुतिबलाद्द्व्यक्षरन्यूनानामपि कासाञ्चिज्जगतीत्वमेव । दस्रादिभिर्यथा इन्द्रस्य भैषज्यं कृतं तदनेनानुवाकेन प्रतिपाद्यते । अश्विना अश्विनौ दस्रौ सविता सरस्वती वरुणश्च मनसा विचार्य्य यज्ञं सौत्रामणीं वयन्ति निष्पादयन्ति । केन सीसेन ऊर्णासूत्रेण च सीसेन शष्पक्रयणादूर्णया तोक्मक्रयणात् ताभ्यां यज्ञनिष्पादनमित्यर्थः । तत्र दृष्टान्तः सीसेन ऊर्णासूत्रेण च तन्त्रमिव यथा कश्चित्सीसेन धातुविशेषेण तन्त्रमङ्गदविशेषं वयति ऊर्णासूत्रेण च तन्त्रं पटं वयति । तद्वत् तन्त्रं राष्ट्रे च सिद्धान्ते परच्छन्दप्रधानयोः अङ्गदे कुटुम्बकृते तन्तुवाने परिच्छद इति कोशात् । कीदृशा अश्व्यादयः मनीषिणः मेधाविनः । कवयः क्रान्तदर्शनाः । इन्द्रस्य रूपं भिषज्यन् भिषज्यन्तः भिषज् रुग्जये कण्ड्वादित्वाद्यक् ततः शतृप्रत्ययः । वचनव्यत्ययः । इन्द्रभैषज्याय यज्ञं वयन्तीत्यर्थः ॥ ८० ॥

तद॑स्य रू॒पम॒मृत॒ᳪ शची॑भिस्ति॒स्रो द॑धुर्दे॒वताः॒ सᳪ र॒राणाः॑ । लोमा॑नि॒ शष्पै॑र्बहु॒धा न तोक्म॑भि॒स्त्वग॑स्य मा॒ᳪसम॑भव॒न्न ला॒जाः ॥ ८१ ॥

त्वरेण गलनवाससा मज्जानं वयन्ति । कीदृशास्ते गवां त्वचि च र्मणि दधतः सुरां स्थापयन्तु ॥ ८२ ॥

**सर॑स्वती मन॑सा पेश॒लं वसु॒ नास॑त्याभ्यां वयति दर्श॒तं वपुः॑ । रसं॑ परि॒स्रुता॒ न रोहि॑तं न॒ग्नहु॒र्धीर॒स्तस॑रं॒ न वेम॑ ॥ ८३ ॥**

सरस्वती मनसा । सरस्वती मनसा पर्य्यालोच्य । पेशलम् पेश इति हिरण्यनाम रूपनाम च । हिरण्यवद्वा रूपवद्वा । वसु नासत्याभ्यां च सहिता वयति पटमिव सृजति । दर्शतं वपुः दर्शनीयं वपुः शरीरम् इन्द्रस्य । रसम्परिस्रुतानरोहितम् । सरं च परिस्रुता सरस्वतीनासत्याभ्यामश्विभ्यां सहिता वयति । वपुषो रञ्जनार्थम् । अतो रोहितम् रोहित इन्द्रो वेदेषु पठ्यते । अथ तदा नग्नहुः किण्वः धीरः धीमान् । तसरं न वेम तसरं च वेम च सम्पद्यते । नग्नहोः कर्तृत्वमात्रं विवक्षितम् विवक्षातः कारकाणि भवन्ति । तसरं वेम च कुविन्दानां प्रसिद्धम् तसरं-वयनसाधनम् ॥ ८३ ॥

नासत्याभ्यामश्विभ्यां सहिता सरस्वती वसु धनं दर्शतं दर्शनीयं वपुश्च वयति पटमिव सृजति इन्द्रस्येति शेषः कीदृशं वसु पेशलं पेशः इति हिरण्यरूपयोर्नाम ( निघ० १, २, ३, ७, ) पेशं लाति गृह्णाति पेशलं हिरण्यवद्रूपवद्वा । मनसा विचार्य्येति शेषः । परिस्रुता परिस्रुतः सुरायाः रोहितं लोहितं रसं न रसञ्च वयति इन्द्रवपुषो रञ्जनाय अत एव वेदेषु रोहितः इन्द्रः पठ्यते । अथ तदा नग्नहुः किण्वः सुराकन्दः पूर्वोक्तः तसरं वयनसाधनं वेम न-वेमा च भवति तसरवेमानौ कुविन्दानां प्रसिद्धौ । कीदृशो नग्नहुः धीरः धियमीरयति प्रेरयतीति धीरः मादक इत्यर्थः विवक्षातः कारकाणि भवन्तीति वचनात् नग्नहोः कर्तृत्वं विवक्षितम्॥८३॥

**पय॑सा शु॒क्रम॒मृतं॑ ज॒नित्र॒ꣳ सुर॑या मू॒त्राज्जनयन्त**

रेतः। अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातꣳ स॒-ब्व॑ तदारात्॥ ८४॥

पयसा शुक्रम्। पयसा दुग्धेन कारणभूतेन शुक्रञ्च अमृतं च। जनित्रम् आजन्म जनयन्तः अश्विनौ सरस्वती च प्रकृतत्वात्। इन्द्रस्तु भैषज्यः सुरया च। मूत्रात् मूत्रमिति साधु। मूत्रञ्च रेतश्च जनयन्त। किञ्च। अपामतिन्दुर्मतिम् बाधमानाः। अपबाधमानाः अमतिममननं वध्यभावन्दुर्मतिश्च। ऊबद्ध्यम्। आमाशयगतमन्नं वातम् तत्सहचरितं सब्बम्पक्वाशयगतमशुचिः। तदारात् तदेतत् सुरया जनयन्त। आरात् सुरासन्निकर्षात्। संनिकर्षो हि गन्धादिभिः॥ ८४॥

प्रकृतत्वादश्विनौ सरस्वती च पयसा दुग्धेन रेतो वीर्यं जनयन्त उदपादयन् अडभाव आर्षः इन्द्रस्येति शेषः। कीदृशं रेतः शुक्रं शुक्लम् अमृतमनश्यत् जनित्रं जनयतीति जनित्रं जननशीलम्। आरात् समीपे स्थित्वा तत्प्रसिद्धमूबध्यं वातं नाडीगतं सब्वं च सुरया कृत्वा मूत्रात् मूत्रं चाजनयन्त आमाशयगतमन्नमूबध्यम् पक्वाशयगतमन्नं सब्वम्। कीदृशास्ते अमतिं वध्यभावं दुर्मतिं दुर्बुद्धिश्च बाधमाना निवर्त्तयन्तः सद्बुद्धिं ददत इत्यर्थः॥८४॥

इन्द्रः सुत्रामा हृदयेन सत्यं पुरोडाशेन सविता जजान। यकृत् क्लोमानं वरुणो भिषज्यन्मतस्ने वायव्यैर्न मिनाति पित्तम्॥ ८५॥

इन्द्रः सुत्रामा। पुरोडाशदेवता इन्द्रं भिषज्यन्ति। इन्द्रः सुत्रामा हृदयेन। हृदयमिति विभक्तिव्यत्ययः इन्द्रस्य जजान जनयति। सत्यम् इन्द्रस्य पुरोडाशेन सविता जनयति। यकृच्च क्लोमानञ्च जनयति वरुणः इन्द्रस्य भिषज्यमतस्ने च पित्तञ्च वायव्यैः ऊर्ध्वपात्रैः ऊर्ध्वपात्राणां सौमिकानां वायव्यानीति उक्तम्। न मिनाति निर्मिमीते सृजति॥ ८५॥

सुष्ठु त्रायते रक्षति सुत्रामा इन्द्रः पुरोडाशदेवता इन्द्रस्य हृदयेण हृदयं जजान जनयति । सविता च पुरोडाशेनेन्द्रस्य सत्यं जजान । वरुणो भिषज्यन् इन्द्रस्य चिकित्सां कुर्वन् सन् यकृत् कालखण्डं क्लोमानं गलनाडिकाञ्च जजान । वायव्यैः सौमिकौर्ध्वपात्रैः मतस्ने हृदयोभयपार्श्वस्थे अस्थिनी पित्तं न पित्तञ्च मिनाति निर्मिमीते सृजतीत्यर्थः सौमिकान्यौर्ध्वपात्राणि वायव्यसंज्ञानि॥८५॥

**आ॒न्त्राणि॑ स्था॒लीर्मधु॒ पिन्व॑माना गु॒दाः पात्रा॑णि सु॒दुघा॒ न धे॒नुः । श्ये॒नस्य॒ पत्रं॒ न प्ली॒हा शची॑भिरास॒न्दी नाभि॑रु॒दरं॒ न मा॒ता ॥ ८६ ॥**

आन्त्राणि स्थालीः स्थाल्यः आन्त्राणि अभवन् । किं कुर्वाणाः मधु पिन्वमानाः । पिन्वतिः सेचनार्थः । गुदाः पात्राणि अभवन् । सुदुघा च धेनुः दक्षिणा च आदित्यस्येष्टेः गुदा एव अभवन् । श्येनस्य च पत्रं प्लीहा अभवत् । शचीभिः कर्मभिः । आसन्दी नाभिः इन्द्रस्य उदरञ्च माता च । आसन्दीस्थोऽभिषिच्यते अतस्ततो जायते ॥ ८६ ॥

स्थालीः स्थाल्यः आन्त्राणि अभवन् । कीदृश्यः स्थाल्यः मधु पिन्वमानाः मधु सिञ्चन्त्यः पात्राणि गुदा गुदस्थानान्यभवन् । सुदुघा न धेनुः शोभनं दुग्धे सा सुदुघा दोग्ध्री च धेनुः आदित्येष्टेर्दक्षिणारूपा गुदा एवाभवत् । श्येनस्य पत्रञ्च प्लीहा हृदयवामभागस्थः शिथिलमांसपिण्डः गुल्मसंज्ञोऽभवत् । आसन्दी शचीभिर्नाभिरुदरं चाभवत् । कीदृश्यासन्दी माता जननीस्थानीया आसन्द्यामभिषिच्यतेऽतस्ततो जायत इव । नाश्चार्थाः ॥ ८६ ॥

**कु॒म्भो व॑नि॒ष्ठुर्ज॑नि॒ता शची॑भि॒र्यस्मि॑न्न॒ग्रे योन्यां॒ गर्भो॑ अ॒न्तः । प्ला॒शिर्व्य॑क्तः श॒तधा॑र॒ उत्सो॑ दु॒हे न कु॒म्भी स्व॒धां पि॒तृभ्यः॑ ॥ ८७ ॥**

कुम्भो वनिष्ठुः । सुरासन्धानकुम्भो वनिष्ठुर्जनिता च जनकश्च । शचीभिः स्वकीयैरेव कर्मभिः । यस्मिन्कुम्भे अग्रे

प्रथमं योन्याङ्गर्भः । अन्तर्मध्ये सुरालक्षणः उपितः । किञ्च । प्लाशिर्व्यक्तः । स्पष्टः शतधार उत्सः कूपः बहुस्रोतत्वात् कूप उक्तः । दुहेन कुम्भीस्वधां पितृभ्यः ॥ ८७ ॥

कुम्भः सुराधानकुम्भः शचीभिः कर्मभिः कृत्वा वनिष्ठुः स्थूलान्त्रं जनिता जनयति । यस्मिन् कुम्भे योन्यां कुम्भरूपे योनौ स्थाने अग्रे प्रथममन्तर्मध्ये गर्भः सुरारूप उषितः । शतधार उत्सः कूपतुल्यः कुम्भः व्यक्तः स्पष्टः प्लाशिः शिश्नोऽभवत् । कुम्भी सुराधानी च पितृभ्यः स्वधां दुहे दुग्धे अन्नं पूरयति लोपस्त आत्मनेपदेष्विति तलोपः ॥ ८७ ॥

मुखꣳ सदस्य शिर इत्सतेन जिह्वा पवित्रमश्विनासन्त्सरस्वती । चप्यं न पायुर्भिषगस्य वालो वस्तिर्न शेपो हरसा तरस्वी ॥ ८८ ॥

मुखं सत् । अस्येन्द्रस्य मुखं सत् । एकदेशलोपः सन्तमिति प्राप्ते । तथा च श्रुतिः । मुखं सन्तमस्य जिह्वा पवित्रं चप्यं न पायुर्वस्तिर्वाल इति । शिर इत् सतेन जिह्वा पवित्रम् अश्विनौ आसन् आस्ये सरस्वती च । चप्यं च पायुः भिषगस्य वालः वस्तिश्च शेपो हरसा तरस्वी । वालस्य त्रिधा परिणामः वैद्यश्च शेपश्च । यदि नाम शेपः हरसा वीर्येण तरस्वी वेगवान् ॥ ८८ ॥

अस्येन्द्रस्य सत् सतः पात्रविशेषो मुखमभूत् सतशब्दस्यान्तलोपश्छान्दसः सतेन इत् सतेनैवास्य शिरोऽभूत् । पवित्रं जिह्वाभवत् । अश्विना अश्विनौ सरस्वती च आसन् आस्येऽभवन् । चप्यंश्च पायुरिन्द्रियमभूत् । वालो सुरागलनवस्त्रमस्येन्द्रस्य भिषग्वैद्यो वस्तिर्गुदं शेपो लिङ्गं चाभूत् वालेन त्रयं जातम् । कीदृशः शेपः हरसा वीर्य्येण तरस्वी वेगवान् ॥ ८८ ॥

अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो ह-

**विषा शृतेन । पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्रमसितं वसाते ॥ ८९ ॥**

अश्विभ्यां चक्षुः । अश्विभ्यामिन्द्रस्य चक्षुः संस्क्रियते । तदेवामृतम् । ग्रहाभ्यामश्विदेवत्याभ्याम् छागेन तेजः चक्षुषः क्रियते । कथंभूतेन छागेन हविषा शृतेन । हविर्भूतेन पक्वेन । अपरम् पक्ष्माणि चक्षुषः लोमानि गोधूमैः संस्क्रियते । कुवलैर्बदरविशेषैः उतानि निविष्टानि पक्ष्मसु रोमाणि संस्क्रियन्ते । पेशो न शुक्रमसितं वसाते । पेशो न रूपं च चक्षुषःशुक्रं शुक्रम् असितं कृष्णश्च वसाते । आच्छादयेते प्रकृतत्वादश्विनौ ॥ ८९ ॥

अश्विभ्यामिन्द्रस्य चक्षुः क्रियते ग्रहाभ्यामश्विदेवताभ्यां चक्षुरेवामृतमनश्वरं क्रियते । शृतेन पक्वेन हविषा छागेन छागरूपेण पक्वहविषा तेजश्चक्षुःसम्बन्धि क्रियते । गोधूमैः पक्ष्माणि नेत्रलोमानि क्रियन्ते कुवलैर्बदरैः उतानि चक्षुर्निविष्टानि लोमानि क्रियन्ते । शुक्रं शुक्लमसितं कृष्णं च पेशः रूपं शुक्लकृष्णे नेत्रगते रूपे वसाते आच्छादयेते कुर्वीत इत्यर्थः प्रकृतत्वादश्विनौ कर्त्तारौ ॥८९॥

**अविर्न मेषो नसि वीर्य्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम् । सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान ॥ ९० ॥**

अविर्न । अविश्च मेषः सारस्वतः । नसि नासिकायाम् वीर्याय अवस्थितः । प्राणस्य च पन्था मार्गः अमृतः ग्रहाभ्यां सारस्वताभ्यां क्रियते । सरस्वती च उपवाकैः व्यानं जजान जनयति । नस्यानि नासिकाप्रभवानि च बर्हिः बदरैः जनयति ॥ ९० ॥

अविः सारस्वतो मेषश्च नसि इन्द्रस्य नासिकायां वीर्य्यायाव-

स्थितः। ग्रहाभ्यां सारस्वताभ्यां प्राणस्य प्राणवायोः पन्था मार्गोऽमृतः अनश्वरः क्रियते। सरस्वती उपवाकैर्यवाङ्कुरैः कृत्वा व्यानमिन्द्रस्य व्यानवायुं जजान जनयति। बर्हिर्बदरैः सह नस्यानि नासिकाभवानि लोमानि जजान ॥ ९० ॥

**इन्द्रस्य रूपमृषभो बलाय कर्णाभ्याꣳ श्रोत्रममृतं ग्रहाभ्याम्। यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघं मुखात् ॥ ९१ ॥**

इन्द्रस्य रूपम्। इन्द्रस्य रूपं संस्करोति ऋषभः बलायावतिष्ठते। कर्णाभ्यां श्रोत्रम् अतीतानागतवर्त्तमानशब्दग्राहि। अमृतम् ग्रहाभ्यामैन्द्राभ्यां स्थापितम्। यवाश्च बर्हिश्च। भ्रुवि केसराणि। भ्रुवोः लोमानि अभवन्। कर्कन्धु च यज्ञे मधुसारघम् मुखात्। कर्कन्धु बदरम् यज्ञे स्वयमेव यज्ञे इन्द्रस्य मुखात्। मधु। लालाश्लेष्मादि मधुशब्देनोच्यते सादृश्यात्। सारघम्। सरघाः भ्रमराः। यथा सारघं मधु इतश्चेतश्चाहृतं भवति। एवं लालादि सर्वस्मादङ्गाद्भवति ॥ ९१ ॥

ऋषः बलाय सामर्थ्यायेन्द्रस्य रूपं चक्रे। ग्रहाभ्यामैन्द्राभ्याममृतं भूतभविष्यद्वर्त्तमानशब्दग्राहि श्रोत्रेन्द्रियं कर्णाभ्यामिन्द्रस्य कर्णयोश्चक्रे कर्णशष्कुल्योः श्रोत्रेन्द्रियं स्थापितमित्यर्थः। यवा बर्हिश्च भ्रुवि भ्रुवोः केसराणि लोमान्यभवन् कर्कन्धु बदरं मुखात् सारघं मधु तत्तुल्यं लालाश्लेष्मादि यज्ञे सरघा मधुमक्षिका तत्सम्बन्धि सारघम् मधु नानातरुभ्य आनीयते एवं लालादि सर्वाङ्गेभ्यो भवति इति लालादीनां मधुसाम्यम् ॥ ९१ ॥

**आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम। केशा न शीर्षन्यशसे श्रियै शिखा सिꣳहस्य लोम त्विषिरिन्द्रियाणि ॥ ९२ ॥**

अत्मन्नुपस्थे। आत्मानि उपस्थे च यानि लोमानि तानि

वृकस्य लोमानि । लोमेति जातावेकवचनम् । मुखे श्मश्रूणि च यानि तानि व्याघ्रस्य लोमानि । केशा न शीर्षन् । ये च केशाः शिरसि यशसे निहिताः या च श्रिये शिखा निहिता या च त्विषिः दीप्तिः यानि चेन्द्रियाणि तदेतात्सिंहस्य लोम ॥ ९२॥

आत्मन् आत्मनि शरीरे उपस्थे गुह्ये च यानि लोमानि तानि वृकस्य लोमानि लोमेति जातावेकवचनम् । मुखे यानि श्मश्रूणि तानि च व्याघ्रलोम । शीर्षन् शीर्ष्णि शिरसि च यशसे यशोऽर्थं ये केशाः या च श्रियै शोभायै शिखा या च त्विषिः कान्तिः यानि चेन्द्रियाणि तत्सर्वं सिंहस्य लोम ॥ ९२ ॥

अङ्गा॑न्यात्मन्न् भि॒षजा॒ तद॒श्विना॒त्मान॒मङ्गैः॒ सम॑धा॒त् सर॑स्वती । इन्द्र॑स्य रू॒पᳪं श॒तमा॑न॒मायु॑श्च॒न्द्रेण॒ ज्योति॑र॒मृतं॒ दधा॑नाः ॥ ९३ ॥

अङ्गान्यात्मन् । अङ्गानि यस्मिन्नात्मनि भिषजौ वैद्यौ अश्विनौ समधाताम् तदात्मानम् । अङ्गैः समधात्सरस्वती । एवमिन्द्रस्य रूपं शतमानं बहुप्रतिमानम् । अश्विनौ सरस्वती च । चक्षुः चन्द्रेण हिरण्मयेन ज्योतिः अमृतञ्च दधानाः ॥ ९३ ॥

भिषजा भिषजौ अश्विना अश्विनौ आत्मन् आत्मनि अङ्गान्यवयवान् समधातां समयोजयताम् । सरस्वती तत् तमात्मानमङ्गैः समधात् संदधे । कीदृशा अश्व्यादयः इन्द्रस्य रूपमायुश्च चन्द्रेणाह्लादकेन ज्योतिज्योतिषा सहामृतमनश्वरं दधानाः सम्पादयन्तः । कीदृशं रूपं शतमानं शतानामनेकेषां प्राणिनां मानं पूजा यस्मिन् तज्जगत्पूज्यमित्यर्थः ॥ ९३ ॥

सर॑स्वती॒ योन्यां॒ गर्भ॑म॒न्तर॒श्विभ्यां॒ पत्नी॒ सुकृ॑तं बिभर्त्ति । अ॒पाᳪं रसे॑न॒ वरु॑णो॒ न साम्नेन्द्रᳪं श्रि॒यै ज॒नय॑न्न॒प्सु राजा॑ ॥ ९४ ॥

सरस्वती योन्याम् । व्यवहितपदप्रायः । सरस्वती यं यो-

न्याम् इन्द्रलक्षणम् गर्भम् अन्तर्मध्ये अश्विभ्यां पत्नीभूत्वा सुकृतं शोभनीकृतं बिभर्ति धारयति । तमेवेन्द्रं जनयन् श्रियै विभूत्यै वरुणश्च अप्सु राजा अपां रसेन साम्ना च बिभर्ति ॥ ९४ ॥

सरस्वती अश्विभ्यां पत्नी अश्विनोः पत्नी भूत्वा योन्यामन्तर्योनिमध्ये गर्भमिन्द्रलक्षणं सुकृतं यथा तथा शोभनं कृतं बिभर्त्ति । अप्सु राजा अपामीश्वरो वरुणः अपां रसेन साम्ना उदकरसभूतेन साम्ना इन्द्रं श्रियै जनयन् सन् बिभर्त्तीत्यनुषङ्गः । नष्टार्थः ॥ ९४ ॥

तेजः पशूनाᳬ हविरिन्द्रियावत्परिस्रुता पयसा सारघं मधु । अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याममृतः सोम इन्दुः ॥ ९५ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायाम्
ऊनविंशोऽध्यायः ॥ १९ ॥

---

तेजः पशूनाम् । तेजः पशूनामुपादाय हविश्च इन्द्रियावत् वीर्यवत् उपादाय । परिस्रुता हविर्भूतया । पयसा हविर्भूतेन सारघमिव मधु । अश्विभ्यां दुग्धम् । सारघाः भ्रमराः ते यथा अद्भ्य ओषधीभ्यश्च रसमादाय दुहन्ति । एवमेतेभ्यो द्रव्येभ्यः अश्विभ्यां दुग्धं सौत्रामणीलक्षणम् । कथम्भूताभ्याम् भिषजा भिषग्भ्याम् सरस्वत्या च । किञ्च सुतासुताभ्यां परिस्रुत्पयोभ्यां सकाशात् अमृतः सोमः इन्दुः दुग्धे । एवं यैः सौत्रामणी दृष्टा तेभ्यः ऋषिभ्यो नमोऽश्विभ्यां च सरस्वत्यै च । एवमियमृषिश्रुतिः ॥ ९५ ॥

इति उव्वटकृतौ मन्त्रभाष्ये एकोनविंशतितमोऽध्यायः ॥ १९ ॥

भिषजा भिषग्भ्यामश्विभ्यां सरस्वत्या च इन्द्रियावत् इन्द्रियवत् वीर्य्यवत् पशूनां सम्बाधि हविरादाय परिस्रुता पयसा च सह सारघं मधु चादाय इन्द्रार्थं तेजो दुग्धं स्रावितम् । सुतासुताभ्यां परिस्रुत्पयोभ्यां सकाशात् अमृतोऽमृतरूपः इन्दुरैश्वर्य्यप्रदः सोमश्च दुग्धः ॥ एवं यैः सरस्वत्यश्विभिरिन्द्राय नानाद्रव्येभ्यो नानारसानादायोपकारः कृतः तेभ्यः सौत्रामणीद्रष्टृभ्यो नमः ॥ ९५ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
सुरादीन्द्राभिषेकान्तोऽध्यायो नवदशोऽगमत् ॥ १९ ॥

---

## अथ विंशोऽध्यायः ।

क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि । मा त्वा हिंसीन्मा मा हिंसीः ॥ १ ॥

क्षत्रस्य योनिरसि । गायत्री । आसन्दी वेद्योरुपदधाति अर्द्धर्चेन । क्षत्रस्य त्वं योनिरुत्पत्तिस्थानमसि । आसन्द्यामभिषिक्तो हि गुणधर्मानर्हति राजेत्येतदभिप्रायं योनित्वम् । क्षत्रस्य नाभिश्च नहनन्त्वमसि । कृष्णाजिनमस्यामास्तृणाति । मा त्वा हिंसीत् । कृष्णाजिनमुच्यते । मा त्वामियमासन्दी हिंसीत् । मा च त्वं मां हिंसीः । यज्ञाध्यासोऽत्र कृष्णाजिनस्य । यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्चाहिंसाया इतिश्रुतिः ॥ १ ॥

का० ( १९, ४, ८ ) सोमासन्दीवदासन्दीं जानुमात्रपदीं वेद्योर्निदधाति क्षत्रस्य योनिरिति । जानुप्रमाणपादामासन्दीं वेद्योर्मध्ये निदधाति सोमासन्दीवदिति मुञ्जरज्जुव्युताम् आसन्द्या द्वौ पादौ दक्षिणवेदौ द्वावुत्तरवेदौ यथा तथेति सूत्रार्थः॥आसन्दीदेवताका द्विपदा गायत्री। हे आसन्दि! त्वं क्षत्रस्य योनिरुत्पत्तिस्थानमसि। आसन्द्यामभिषिक्तो गुणधर्मानर्हति राजेति भावः । क्षत्रस्य नाभिर्नहनं ब-

न्तः पाशिनो पाशहस्ता व्याधाः विं पक्षिणमिव यथा पाशिनः पक्षिणं बध्नन्ति तथा त्वां मा बध्नन्तु अथ ये परिपन्थिनो भवेयुस्तानतीहि अतिक्रम्यागच्छ किमिव धन्व इव धन्व निरुदकदेशः यथा पान्थो मरुदेशमतिक्रम्य गच्छति तथा गच्छ ॥ ५३ ॥

**एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः । स नं स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥ ५४ ॥**

एवेत् । ऐन्द्री त्रिष्टुप् यमेवमनेन प्रकारेण । इत् पादपूरणः । इन्द्रं वृषणं वर्षितारं वज्रबाहुं वसिष्ठासः वसिष्ठस्यापत्यानि बहूनि । यद्वा वस्तृतमा ऋषयः । अभ्यर्चन्ति अभिष्टुवन्ति अर्कैः मन्त्रैः । स नः सोऽस्मभ्यम् स्तुतः वीरवत् साधु पुत्रसंयुक्तम् धातु ददातु धनम् । गोमच्च गोसंयुक्तम् । एवं त्रिभिः पादैरिन्द्रमभिष्टुत्य । अथेदानीं ये याजयन्ति तानाह यूयं पात पालयत स्वस्तिभिरविनाशैः सदाकालं नोऽस्मान् ॥५४॥

वसिष्ठदृष्टा इन्द्रदेवत्या त्रिष्टुप् । वसिष्ठाः वसिष्ठापत्यानि मुनयः अर्कैर्मन्त्रैः एव ईत् एवमेव इन्द्रमभ्यर्चन्ति पूजयन्ति कीदृशमिन्द्रं वृषणं वर्षितारम् वज्रबाहुं वज्रं बाहौ यस्य तम् स इन्द्रः स्तुतः सन् वीरवत् वीरा विद्यन्ते यत्र तत् पुत्रयुक्तम् गोमत् गावो विद्यन्ते यत्र तत् गोसंयुक्तं धनम् नोऽस्मभ्यं धातु दधातु विकरणव्यत्ययः । एवं पादत्रयेणेन्द्रं स्तुत्वा ऋत्विज आह हे ऋत्विजः । यूयं स्वस्तिभिः अविनाशैः सदा सर्वदा नोऽस्मान् पात रक्षत॥५४॥

**समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुतः । दुहे धेनुः सरस्वती सोमꣳ शुक्रमिहेन्द्रियम् ॥ ५५ ॥**

इत उत्तरं त्रिपशुः आ अध्यायात् तत्र द्वादशस्योऽनुष्टुभोऽश्विसरस्वतीन्द्रदेवत्याः । समिद्धः सन्दीप्तोऽग्निः हविः क्षपणसमर्थः । हे अश्विनौ । किञ्च तप्तो घर्मः प्रवर्ग्यः विराट् च सो-

मोऽभिषुतः । किञ्च दुहे मपूरयति च धेनुः सरस्वती । सोमं शुक्रं शुक्रम् इह इन्द्रियं वीर्यम् ॥ ५५ ॥

का० ( १९, ६, १५ ) आप्रियश्च समिद्धो अग्निरश्विनेति । समिद्ध इत्याद्या द्वादशानुष्टुभः चकारात् त्रिपशोः प्रजाजयाज्याः इति सूत्रार्थः ॥ विदर्भिदृष्टा अश्विसरस्वतीन्द्रदेवत्या आप्रीसंज्ञा द्वादशानुष्टुभः । अश्विनावध्वर्यू देवानामिति तौ प्रति होता प्राह हे अश्विना अश्विनौ ! अग्निः समिद्धो दीप्तोऽस्ति हविर्दहनक्षमोऽस्ति घर्मः प्रवर्ग्यः तप्तोऽस्ति विराट् विविधं राजमानः सोमः सुतोऽभिषुतः । किञ्च धिनोति प्रीणाति धेनुः औणादिको नुप्रत्ययो धिवेः वलोपो गुणश्च प्रीणयित्री सरस्वती इह यज्ञे सोमं दुहे दुग्धे दुह प्रपूरणे लटि तङि प्रथमैकवचने टेरत्वे लोपस्त आत्मनेपदेष्विति ( पा० ७, १, ४१ ) तलोपे दुहे इति रूपम् । कीदृशं सोमं शुक्रं शुक्रं शुद्धम् इन्द्रियमिन्द्राय हितं बलकरम् । एतावता यज्ञसम्पत्तिरस्ति युवामागच्छतामिति भावः ॥ ५५ ॥

तनूपा भिषजा सुतेऽश्विनोभा सरस्वती । मध्वा रजाᳫँसीन्द्रियमिन्द्राय पथिभिर्वहान् ॥ ५६ ॥

अश्विनावध्वर्यू तयोर्होता कथयति यज्ञसम्पत्तिम् तनूपाभिषजा । तनूनां पातारौ भिषजौ च सुते सोमे अश्विनावुभौ सरस्वती च मध्वा रसेन रजांसि पूरयन्त्विन्द्रोपभोगाय । लोका रजांस्युच्यन्ते इतीह लोकवचनो रजश्शब्दः । इन्द्रियं वीर्यम् इन्द्राप्यायनार्थम् पथिभिर्मार्गैर्वहान्वहन्तु ॥ ५६ ॥

उभा अश्विना उभौ अश्विनौ सरस्वती मध्वा मधुना रजांसि लोकान् दुहन्ति पूरयन्ति पूर्वर्चो दुहे इत्यस्य वचनव्यत्ययेनेहानुषङ्गः लोका रजांस्युच्यन्त इति ( निरु० ४, १९ ) यास्कोक्ते रजःशब्दोऽत्र लोकवाची । कीदृशावश्विनौ तनूपा तनूः शरीराणि पातस्तौ तनूपौ शरीराणां रक्षितारौ भिषजा भिषजौ वैद्यौ । क्व सति । सुते सोमेऽभिषुते सति पूरयन्तीत्यर्थः । किञ्च अश्विसरस्वत्य इन्द्राय इन्द्रियं वीर्यं पथिभिर्यज्ञमार्गैः वहान् वहन्ति इतश्च

लोपः परस्मैपदेष्विति ( पा० ३, ४, ९७ ) इकारलोपे वहानिति रूपम् ॥ ५६ ॥

इन्द्रा॒येन्दु॑ꣳ सर॑स्वती॒ न॒रा॒शꣳसे॑न न॒ग्नहु॑म् । अ॒धा॑ताम॒श्विना॒ मधु॑ भेष॒जं भि॒षजा॑ सु॒ते ॥ ५७ ॥

इन्द्रायेन्दुम् । इन्द्रार्थमिन्दुं सोमं सरस्वती अभिषुणोदिति वाक्यपरिपूर्तिः । नराशंसेन यज्ञेन सहिता नग्नहुम् । किञ्च आदधातां सुरायाम् अश्विनौ मधुः । रसरूपम् भेषजरूपञ्च । भिषजौ वैद्यौ सुते सोमेन्द्रायेत्यनुषङ्गो विभक्तिव्यत्ययेन ॥५७॥

सरस्वती नराशंसेन यज्ञेन सह इन्द्राय इन्द्रार्थमिन्दुं सोमं नग्नहुं सुराकन्दं च पूर्वोक्तमधात् धृतवती । किञ्च भिषजा आश्विना भिषजौ अश्विनौ सुते सोमेऽभिषुते सति मधु मधुरं भेषजमौषधमधातां धारितवन्तौ अधातामित्येव क्रिया वचनव्यत्ययेन पूर्वार्धे योज्या ॥ ५७ ॥

आ॒जुह्वा॑ना॒ सर॑स्व॒तीन्द्रा॑येन्द्रि॒याणि॑ वी॒र्य॑म् । इ॒डाभि॑र॒श्विना॒विष॒ꣳ समू॒र्ज॒ꣳसꣳ र॒यिं द॑धुः ॥ ५८ ॥

आजुह्वाना । आह्वयन्ती सरस्वती इन्द्रायेन्द्रियाणि चक्षुःप्रभृतीनि वीर्यञ्च वीरकर्म । इडाभिर्यज्ञियाभिर्हेतुभूताभिः । अश्विनौ च सहायभूतावुपादाय सन्दधुः । इषञ्चान्नञ्च सन्दधुः ऊर्जञ्च तदुपसेचनञ्च दध्यादि सन्दधुः संदधुश्च रयिं धनम्॥५८॥

आह्वयते आजुह्वाना अर्थादिन्द्रमाह्वयन्ती सरस्वती आश्विना चेन्द्राय इन्द्रियाणि चक्षुरादीनि सन्दधुः वीर्य्यं सामर्थ्यं च दधुः इडाभिः पशुभिः सह इषमन्नं सन्दधुः । पशवो वा इडेति ( १, ८, १, १२ ) श्रुतिः । ऊर्जं दध्यादि रयिं धनञ्च सन्दधुः एतानि ददुरित्यर्थः ॥ ५८ ॥

अ॒श्विना॒ नमु॑चेः सु॒तꣳसोम॑ꣳ शु॒क्रं प॑रि॒स्रुता॑ । सर॑स्वती॒ तमाभ॑रद्ब॒र्हिषेन्द्रा॑य॒ पात॑वे ॥ ५९ ॥

अश्विना नमुचेः । यमश्विनौ नमुचेराहृत्य सुतमभिषुतं सोमं शुक्रम् अमलिनम् परिस्रुता सहितं स्थापितवन्तौ । सरस्वती तमेवाहरत् बर्हिषास्तरणार्थेन सहिता । इन्द्राय पातवे इन्द्रपानार्थम् ॥ ५९ ॥

अश्विना अश्विनौ परिस्रुता सुरया सह सुतमभिषुतं शुक्रं शुद्धममालिनं सोमं नमुचेः असुरात्सकाशात् आहरताम् सरस्वती च तमेव सोमं बर्हिषास्तरणार्थेन सह आभरत् आहरत् किमर्थमिन्द्राय पातवे इन्द्रस्य पानार्थं तुमर्थे तवेप्रत्ययः ॥ ५९ ॥

क॒व॒ष्यो॑ न व्यच॑स्वतीर॒श्विभ्यां॒ न दुरो॒ दिशः॑ । इन्द्रो॒ न रोद॑सी उ॒भे दु॒हे का॒मान्त्सर॑स्वती ॥ ६० ॥

कवष्यो न । यज्ञगृहद्वार उच्यते । कवष्यो न कुष् निष्कर्षे । समुच्चयार्थीयो नकारः । अस्यामृचि ससुषिराश्च व्यञ्जनवत्यश्च । अश्विभ्यान्न अश्विभ्याञ्चाध्वर्युभ्यां सहिताः दुरः द्वारदिशः । द्वार्भिर्दिशो लक्ष्यन्त इति अत एवमुक्तम् । इन्द्रो न इन्द्रश्च यासु द्वास्सु व्यवस्थितः । रोदसी द्यावापृथिव्यौ उभे अपि दुहे दोग्धि । कामांश्च सरस्वती दुहे । इन्द्रायायाताय यज्ञगृहद्वार इन्द्रं कुर्वन्निति शेषः ॥ ६० ॥

अस्यामृचि त्रयो नकाराश्चकारार्थाः । अश्विभ्यां सहिता सरस्वती इन्द्रो न इन्द्रश्च उभे रोदसी द्यावापृथिव्यौ कामान् दुहे दुग्धे द्विकर्म्मकः द्यावापृथिवीभ्यां सकाशात्कामान् दोग्धि दुरो दिशश्च सकाशात् दोग्धि अकथितं चेति ( पा० १, ४, ५१ ) द्वारां दिशां रोदसोश्च कर्म्मत्वम् । कीदृश्यो द्वारः कवष्यः कुष निष्कर्षे कुषिताः सच्छिद्राः तथा व्यचस्वतीः व्यचनं व्यचोऽवकाशः तद्वत्यः ॥ ६० ॥

उ॒षासा॒नक्त॑मश्विना॒ दिवेन्द्र॑ᳫं सा॒यमि॑न्द्रि॒यैः । सं॒जा॒ना॒ने सु॒पेश॑सा॒ सम॑ञ्जाते॒ सर॑स्वत्या ॥ ६१ ॥

उषासा नक्तम् । उषा आदित्यप्रभा । नक्तं रात्रिः । हे अश्विनौ उषाश्च रात्रिश्च दिवा अहनि च इन्द्रम् इन्द्रियैर्वीर्यैः समं जाते संश्लेषयतः सायं च इन्द्रियैः समंजाते । सातत्याभिप्रायम् । संजानाने एकमती भूते उषाश्च रात्रिश्च । सुपेशसा सुरूपे शुक्लेन उषाः कृष्णेन रात्रिः । किमिन्द्रमुषाश्च रात्रिश्च केवले एव समञ्जाते नेत्याह । सरस्वत्या च सह समञ्जाते ॥ ६१ ॥

हे अश्विनौ ! उषासा रविप्रभा नक्तं रात्रिश्च सरस्वत्या सह दिवा दिवसे सायंकाले च इन्द्रमिन्द्रियैः वीर्यैः सह समञ्जाते संयोजयतः । कीदृश्यौ ते संजानाने संजानीतः ते संजानाने एकमती· सुपेशसा शोभनं पेशो रूपं ययोस्ते शुक्ला उषाः कृष्णा रात्रिः ॥ ६१ ॥

**पातं नो अश्विना दिवा पाहि नक्तꣳ सरस्वति । दैव्या होतारा भिषजा पातमिन्द्रꣳ सचा सुते ॥ ६२ ॥**

पातन्नः । पालयतं नोऽस्मान् हे अश्विनौ देवा अहानि । पाहि पालय च नक्तं हे सरस्वति । युवां च हे दैव्यौ होतारौ भिषजौ पालयतम् इन्द्रम् सचा सहेत्यर्थः । सुते सोमे ॥ ६२ ॥

हे अश्विना अश्विनौ ! दिवा दिवसे नोऽस्मान् युवां पातं रक्षतं हे सरस्वति ! नक्तं रात्रौ त्वं नः पाहि रक्ष । हे दैव्या होतारा देवसम्बन्धिनौ होतारौ ! भिषजा भिषजौ अश्विनौ सुते सोमेऽभिषुते सति सचा सह एकीभूय युवामिन्द्रं पातं रक्षतम् सर्वत्र विभक्तेराकारः ॥ ६२ ॥

**तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा । तीव्रं परिस्रुता सोममिन्द्राय सुषुवुर्मदम् ॥ ६३ ॥**

तिस्रस्त्रेधा । तिस्रो देव्यः सरस्वती च मध्यस्थाना । भारती आदित्यप्रभा द्युस्थाना । इडा पृथिवीस्थाना । एतास्त्रिषु स्थानेषु स्थिताः । अश्विनौ च । तीव्रं पटुतमं परिस्रुता सहितं सोमम् इन्द्राय सुषुवुः अभिषुतवन्तः मदन्तर्प्पणम् ॥ ६३ ॥

तिस्रो देव्यः अश्विना अश्विनौ च परिस्रुता सुरया सह सोम-मिन्द्राय सुषुवुरभिषुतवन्तः । काः तिस्रः सरस्वती भारती इडा च कीदृग्यः त्रेधा स्थिता इति शेषः सरस्वती मध्यस्थाना भारती द्युस्थाना इडा पृथिवीस्थाना । कीदृशं सोमं तीव्रं पटुत्वकरम् मदं मदजनकम् ॥ ६३ ॥

**अ॒श्विना॑ भेष॒जं मधु॑ भेष॒जं न॒: सर॑स्वती । इन्द्रे॒ त्वष्टा॒ यश॒: श्रियँ॑ रू॒पँ रू॑पमधुः सु॒ते ॥ ६४ ॥**

अश्विना भेषजं मधु । एतदाख्यातन्तस्यादधुरिति परिणामः । के अदधुः अश्विनौ सरस्वती त्वष्टा च प्रयाजदेवताः । किमदधुः । अश्विनौ तावद्भेषजं मधुरूपम् । भेषजं नः अस्मत्संबन्धिनी सरस्वती । त्वष्टा च यशः श्रियं रूपञ्च । कस्मिन्नवसरे । सुतेऽभिषुते सोमे ॥ ६४ ॥

अश्विना नोऽस्माकं सरस्वती त्वष्टा प्रयाजदेवता च सुते सोमेऽभिषुते सति इन्द्रे एतानि वस्तूनि अधुः स्थापयामासुः दधातेर्लुङ् कानीत्यत आह भेषजमौषधं मधु मधुरूपं भेषजं च यशः कीर्तिं श्रियं लक्ष्मीं रूपं रूपं नानाविधं रूपं च नित्यवीप्सयोरिति रूपशब्दस्य द्वित्वम् ॥ ६४ ॥

**ऋ॒तु॒थेन्द्रो॒ वन॒स्पति॑: शशमा॒नः प॑रि॒स्रुता॑ । की॒ला॒लम॒श्विभ्यां॒ मधु॑ दु॒हे धे॒नुः सर॑स्वती ॥ ६५ ॥**

ऋतुथेन्द्रः । ऋतावृतौ कालेकाले इन्द्रायेति विभक्तिव्यत्ययः । वनस्पतिः शशमानः संशयमानः स्तुवन् परिस्रुता साधनभूतया । कीलालमन्नरसम् दुहे इत्यनुषङ्गः । अश्विभ्यां च सहिता । दुहे दोग्धि धेनुर्भूत्वा सरस्वती ॥ ६५ ॥

वनस्पतिः प्रयाजदेवः शशमानः स्तुवन् सन् ऋतुथा ऋतौ ऋतौ काले-काले परिस्रुता सुरया सह कीलालमन्नरसमिन्द्रः इन्द्राय इन्द्रार्थं दुहे दुग्धे सुपां सुलुगित्यादिना ( पा० ७, १, ३९ ) चतुर्थ्येकवचनस्य सुआदेश इन्द्र इति लोपस्त आत्मनेपदेष्विति तलोपे

दुहे इति रूपम् । किञ्च सरस्वती अश्विभ्यां सहिता धेनुर्भूत्वा इन्द्राय मधु दुहे दुग्धे ॥ ६५ ॥

**गोभिर्न सोममश्विना मासरेण परिस्रुता । सम॑धातꣳ सर॑स्वत्या स्वाहेन्द्रे॑ सुतं मधु॑ ॥ ६६ ॥**

गोभिर्न । गोप्रभृतिभिश्च पशुभिः सोमं सहितं मासरेण परिस्रुता च । कथंभूतं सुतं मधु । अभिषुतं मधुस्वादं च । हे अश्विनौ युवां समधातम् । कस्मिन्समधातम् । इन्द्रे । किं केवलावेवाश्विनौ समधातं नेत्याह । सरस्वत्या सह । स्वाहाकृतिभिः प्रयाजेन सार्द्धम् ॥ ६६ ॥

हे अश्विना ! अश्विनौ ! मासरेण परिस्रुता सह गोभिर्न गोप्रभृतिपशुभिश्च सह नश्चार्थे सुतमभिषुतं सोमं मधु च इन्द्रे युवां समधातमारोपयतम् सम्पूर्वाद्धातेर्लुङि मध्यमद्विवचनम् हे स्वाहाकृतयः ! प्रयाजदेवाः ! यूयं सरस्वत्या सह इन्द्रे सुतं मधु समधातेति वचनव्यत्ययः ॥ ६६ ॥

**अश्विना॑ ह॒विरि॑न्द्रि॒यं नमु॑चेर्धि॒या सर॑स्वती । आ शुक्रमा॑सु॒राद्वसु॑ म॒घमिन्द्रा॑य जभ्रिरे ॥ ६७ ॥**

अश्विना हविः । तिस्रो वपानां याज्यानुवाक्या अनुष्टुभः । एकैकाश्विसरस्वतीन्द्रदेवत्या । आजभ्रिरे इत्याख्यातपदेन सर्वाणि पदानि सम्बध्यन्ते । अश्विनौ सरस्वती च आजभ्रिरे । हविरिन्द्रियं वीर्यं शुक्रममलिनम् वसु धनं मघं महनीयम् । कुत आजभ्रिरे । धिया बुद्ध्या । कस्मै आजभ्रिरे इन्द्राय ॥ ६७ ॥

का० ( १९, ६, १६, १७ ) आश्विना हविरिति तिस्रो वपानां याज्यानुवाक्याः प्रथममनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या तृतीयामनूच्य प्रथमा याज्या । अश्विनेत्याद्यास्तिस्रस्तिसृणां वपानां क्रमाद्याज्यापुरोऽनुवाक्याः तत्प्रकारमाह आश्विनवपा-

यागे अश्विनेति (६७) अनुवाक्या यमश्विनेति (६८) याज्या सारस्वतवपायागे यमश्विनेति (६८) अनुवाक्या तमिन्द्रमिति (६९) याज्या ऐन्द्रवपायागे तमिन्द्रमिति (६९) अनुवाक्या अश्विनेति (६७) याज्येति सूत्रार्थः [ अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः । अश्विना अश्विनौ सरस्वती च धिया बुद्ध्या कृत्वा नमुचेर्नमुचिसंज्ञात् आसुरात् दैत्यात् इन्द्रायेन्द्रार्थमेतानि वस्तूनि आजभ्रिरे आजह्रिरे कानीत्यत आह हविः शुक्रं शुद्धममलिनं हविः इन्द्रियं वीर्य्यं मघं महनीयं वसु धनञ्च ॥ ६७ ॥

**यमश्विना सरस्वती हविषेन्द्रमवर्धयन् । स बिभेद बलं मघं नमुचावासुरे सचा ॥ ६८ ॥**

यमश्विना । यमिन्द्रमश्विनौ सरस्वती च हविषा वर्द्धयन् । स बिभेद । भिदिर्विदारणे विदारितवान् । बलम्मघम् । वृणातिर्बलः मघम्महनीयम् । नमुचौ आसुरे सचा । सचा सहशब्दवचनः तद्योगाच्च विभक्तिव्यत्ययः । नमुचिना असुरेण सह बलम्बिभेदेति ॥ ६८ ॥

अश्विनौ सरस्वती च हविषा कृत्वा यमिन्द्रमवर्धयन् स इन्द्रो नमुचावासुरे सचा नमुचिना असुरेण सह मघं महनीयं बलं मेघं बिभेद विदारितवान् । सचेत्यव्ययं सहार्थे तद्योगे नमुचावासुरे इति तृतीयार्थे सप्तमी । वृणोतेर्बल इति ( निरु० ६, २ ) यास्कः नमुचिं विदार्य्य वृष्टिं कारितवानित्यर्थः ॥ ६८ ॥

**तमिन्द्रं पशवः सचाश्विनोभा सरस्वती । दधाना अभ्यनूषत हविषा यज्ञ इन्द्रियैः ॥ ६९ ॥**

तमिन्द्रम् । तमुक्तगुणमिन्द्रम् पशवः कर्माङ्गभूताः गोमेषाजाः सचा सहभूताः । अश्विनौ उभौ सरस्वती च दधानाः धारयन्तः । अभ्यनूषत । नूषतिर्वृद्ध्यर्थः । अभिवर्धयन्ति । केन । हविषा कस्मिन् । यज्ञे । इन्द्रियैर्वीर्यैः ॥ ६९ ॥

पशवः कर्माङ्गभूता गोमेषाजाः उभा अश्विना उभौ अश्विनौ

सरस्वती च सचा सहभूताः सन्तः यज्ञे हविषा इन्द्रियैः वीर्य्यैश्च दधानाः पुष्णन्तः सन्तः तमिन्द्रमभ्यनूषत अवर्धयन् अस्तुवन् वा नू स्तवने ॥ ६९ ॥

**य इन्द्र॑ इन्द्रि॒यं द॒धुः स॑वि॒ता वरु॑णो॒ भगः॑ । स सु॒त्रामा॑ ह॒विष्प॑ति॒र्यज॑मानाय सश्चत ॥ ७० ॥**

य इन्द्रे तिस्रोऽनुष्टुभः पशुपुरोडाशानां याज्यानुवाक्या इन्द्रसवितृवरुणदेवत्याः सर्वाः ये इन्द्रे इन्द्रियं दधुः स्थापितवन्तः । सविता वरुणो भगः । भगशब्देनात्रेन्द्रो लक्ष्यते । ते यजमानेऽपि वीर्यं दधन्तीति वाक्यपरिपूर्तिः । स सुत्रामा यश्च सुत्रामा इन्द्रः हविष्पतिः हविषः स्वामी । यजमानमिति विभक्तिव्यत्ययः । सश्चत । सचतामिति पुरुषवचनव्यत्ययः । एवमेते विषमा मन्त्रा लक्षणया व्याख्येयाः ॥ ७० ॥

का० ( १९, ६, १८ ) य इन्द्र इति पुरोडाशानां पूर्ववत् य इन्द्र इति तिस्रस्त्रयाणां पशुपुरोडाशानां याज्यानुवाक्याः पूर्ववत् य इन्द्रे ( ७० ) सविता ( ७१ ) इत्यैन्द्रस्यानुवाक्यायाज्ये सविता (७१) वरुणः क्षत्रम् ( ७२ ) इति सावित्रस्य ते वरुणः क्षत्रम् ( ७२ ) य इन्द्रे ( ७० ) इति वारुणस्येति सूत्रार्थः ॥ प्रत्येकमिन्द्रसवितृवरुणदेवत्यास्तिस्रोऽनुष्टुभः । सविता वरुणो भग इति ये त्रयो देवाः इन्द्रे इन्द्रियं वीर्य्यं दधुः स्थापयामासुः । हविष्पतिः हविषां स्वामी सुत्रामा शोभनत्राणकर इन्द्रो यजमानाय कर्मणि चतुर्थी यजमानं सश्चत सेवताम् इष्टदानेन यजमानं सुखयत्वित्यर्थः षश्च सेवने लोडर्थे लङ् अडभाव आर्षः ॥ ७० ॥

**स॒वि॒ता वरु॑णो॒ दध॒द् यज॑मानाय दा॒शुषे॑ । आद॑त्त॒ नमु॑चे॒र्वसु॑ सु॒त्रामा॒ बल॑मिन्द्रि॒यम् ॥ ७१ ॥**

सविता वरुणः । द्वितीयोऽर्द्धर्चः प्रथमं व्याख्येयः । आदत्त जग्राह नमुचेः सकाशात् वसु धनं बलं चेन्द्रियं च । सुत्रा-

मा इन्द्रः । तत् सवितृवरुणप्रभृतयः पशुपुरोडाशदेवताः दधत् दधातु यजमानाय दाशुषे हवींषि दत्तवते ॥ ७१ ॥

सुत्रामा इन्द्रो नमुचेरसुरात्सकाशात् यद्वसु धनं बलमिन्द्रियं वीर्यं च आदत्त जग्राह सविता वरुणो भगश्च पशुपुरोडाशमन्त्रदेवास्तत् नमुचेरानीतं वस्वादिकं यजमानाय दधत् दधातु ददात्वित्यर्थः । कीदृशाय यजमानाय दाशुषे दाशति ददाति दाश्वान् तस्मै हवींषि दत्तवते दाश्वान् साह्वानित्यादिना क्वसन्तो निपातः ॥ ७१ ॥

**वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् । सुत्रामा यशसा बलं दधाना यज्ञमाशत ॥ ७२ ॥**

वरुणः क्षत्रम् । वरुणः सविता च सुत्रामा च दधाना इन्द्रे यजमाने वा यज्ञं सौत्रामणीम् । आशत व्याप्तवन्तः । किंकिं दधानाः । वरुणः क्षत्रमिन्द्रियञ्च । सविता भगेन धनेन सहितां श्रियम् । सुत्रामा यशसा बलम् ॥ ७२ ॥

वरुणः सविता सुत्रामा इन्द्रश्च यज्ञं सौत्रामणीमाशत भक्षितवन्तः व्याप्तवन्तो वा अश भोजने अशूङ् व्याप्तौ वा उभयोर्विकरणव्यत्ययः । कीदृशास्ते क्षत्रं क्षतात् त्राणसामर्थ्यमिन्द्रियं वीर्यं भगेन भाग्येन सह श्रियं लक्ष्मीं यशसा सह बलं च दधानाः यजमाने स्थापयन्तः । तत्र वरुणः क्षत्रमिन्द्रियं च दधाति सविता भगं श्रियं सुत्रामा यशो बलं चेति विभागः ॥ ७२ ॥

**अश्विना गोभिरिन्द्रियमश्वेभिर्वीर्यं बलम् । हविषेन्द्रꣳ सरस्वती यजमानमवर्धयन् ॥ ७३ ॥**

अश्विना गोभिः । तिस्रोऽनुष्टुभः । हविषां याज्यानुवाक्या अश्विसरस्वतीन्द्रदेवत्याः । अश्विनौ सरस्वती च गोभिः गोप्रभृतिभिः पशुभिः इन्द्रियम् । इन्द्रियेणेति विभक्तिव्यत्ययो वाक्यसम्बन्धात् । अश्वेभिः अश्वदक्षिणाभिः । वीर्यम्बलम् वीर्येण बलेन । हविषा पुरोडाशेन । इन्द्रं यजमानञ्च अवर्द्धयन् ॥ ७३ ॥

का० ( १९, ६, १९ ) अश्विना गोभिरिति च हविषाम् । अश्विना गोभिरिति तिस्रो हविषां याज्यानुवाक्याः चात् पूर्ववत् अश्विना ( ७३ ) ता नासत्या ( ७४ ) इत्याश्विनपशुयागे पुरोऽनुवाक्यायाज्ये ता नासत्या ( ७४ ) ता भिषजा ( ७५ ) इति सारस्वते ता भिषजा ( ८५ ) अश्विना ( ७३ ) इत्यैन्द्रे इति सूत्रार्थः ॥ अश्विसरस्वतीन्द्रदेवत्यास्तिस्रोऽनुष्टुभः । अश्विना सरस्वती च एतैः पदार्थैः इन्द्रं यजमानं चावर्धयन् । कैस्तत्राह गोभिर्गोप्रभृतिपशुभिः इन्द्रियम् विभक्तिव्यत्ययः इन्द्रियेण इन्द्रियपाटवेन अश्वेभिः अश्वैः दक्षिणारूपैः वीर्य्यं बलं वीर्य्येण मनःसामर्थ्येन बलेन शरीरदार्ढ्येन हविषा पशुपुराडाशेन च । इन्द्रस्य वर्धनं तृप्तिः यजमानस्य वर्धनं धनपुत्रपश्वादिपुष्टिः ॥ ७३ ॥

**ता नास॑त्या सु॒पेश॑सा हिर॑ण्यवर्त्तनी॒ नरा॑ । सर॑स्वती ह॒विष्म॒तीन्द्र॒ कर्म॑सु नोऽवत ॥ ७४ ॥**

ता नासत्या । तौ नासत्यौ न असत्यौ सत्यावेव । सुपेशसा सुरूपौ । हिरण्यवर्तनी हिरण्यदानोपलक्षितपन्थानौ । नरा नृगुणयुक्तौ । नराकारौ वा । सरस्वती च हविष्मती हविषा संयुक्ता । एते त्रयः पादाः परोक्षकृताः । चतुर्थस्तु पादः प्रत्यक्षकृतः । अतो वाक्यभेदः । तौ नासत्यावुक्तगुणौ सरस्वती च कर्मसु वर्त्तमानः नोऽस्मान् अवत अवान्त्विति पुरुषव्यत्ययः । ततो द्वितीयं वाक्यम् । इन्द्र कर्मसु नोऽवत । हे इन्द्र त्वमपि कर्मसु वर्तमानः नः अस्मान् अवत । अवेति । वचनव्यत्ययः ॥७४॥

ता तौ नासत्या नासत्यौ अश्विनौ सरस्वती च कर्मसु सौत्रामण्यादियागेषु नोऽस्मानवत अवन्तु रक्षन्तु पुरुषव्यत्ययः हे इन्द्र ! त्वमपि नोऽस्मान् कर्मसु अव वचनव्यत्ययः । कीदृशौ । नासत्यौ हिरण्यवर्त्तनी हिरण्येनोपलक्षिता वर्त्तनिर्मार्गो ययोस्तौ यत्र पथि गच्छतस्तत्र सुवर्णमेव सम्पद्यत इत्यर्थः । सुपेशसा शोभनं पेशो रूपं ययोस्तौ सुन्दरौ । नरा नरौ नरगुणयुक्तौ नराकारौ च । कीदृशी सरस्वती हविष्मती हविर्विद्यते यस्याः सा ॥ ७४ ॥

**ता भिषजा सुकर्म्मणा सा सुदुघा सरस्वती । स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम् ॥ ७५ ॥**

तौ भिषजौ । सुकर्मणा कल्याणकर्माणौ । सा सुदुघा सुदोहना सरस्वती च । स च वृत्रहा शतक्रतुः बहुकर्मा इन्द्राय दधुः ददुः इन्द्रियं वीर्यम् । ननु स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियमिति इन्द्र इन्द्राय ददातीत्येतन्नोपपद्यते । कल्पान्तरीण इन्द्र एतत्कल्पप्रभवाय ददातीत्यदोषः । विभवो वा देवा अचिन्त्यशक्तयः । एकधा द्विधा बहुधा भवेयुः । एवमेवान्यत्र विरोधाः परिहर्तव्याः ॥ ७५ ॥

ता तौ प्रसिद्धौ भिषजा भिषजौ वैद्यो आश्विनौ सा प्रसिद्धा सरस्वती च स प्रसिद्धो वृत्रहा इन्द्रः कल्पान्तरप्रभवः इन्द्राय एतत् कल्पप्रभवाय इन्द्रियं वीर्यं दधुः यद्वा इन्द्र एव दातृपात्ररूपेण बहुधा भवति देवानामचिन्त्यशक्तित्वात् । कीदृशौ भिषजौ सुकर्मणा सुकर्माणौ शोभनं कर्म ययोस्तौ । कीदृशी सरस्वती सुदुघा सुष्ठु दुग्धे सा सुदुघा साधुदोहना । कीदृशो वृत्रहा शतक्रतुः शतं क्रतवः कर्माणि यस्य बहुकर्मकर्त्ता ॥ ७५ ॥

**युवꣳ सुराममश्विना नमुचावासुरे सचा । विपिपानाः सरस्वतीन्द्रं कर्म्मस्वावत ॥ ७६ ॥**

ग्रहाणां याज्यानुवाक्यौ । युवं सुरामम् । पुत्रमिव पितरौ । अनुष्टुप् त्रिष्टुभावाश्विसरस्वतीन्द्रदेवत्ये । युवं यूयमिति विभक्तिव्यत्ययः । सरस्वती हि तृतीया । युवं यूयम् हे अश्विसरस्वत्यः । सुरामं सुरामयम् । नमुचौ आसुरे वर्तमानम् सचा सह विपिपानाः विविधं पिबन्तः कर्मसु वर्तमानाः इन्द्रम् अवत पालयत ॥ ७६ ॥

का० ( १९, ६, २० ) ग्रहाणां युवꣳ सुरामं पुत्रमिवेति । त्रयाणां पयोग्रहाणां सुराग्रहाणां च युवमिति पुरोऽनुवाक्या पुत्रमिवेति

याज्येति सूत्रार्थः ॥ द्वे अश्विसरस्वतीन्द्रदेवत्येऽनुष्टुप्त्रिष्टुभौ । हे अश्विनौ ! हे सरस्वति ! युवं यूयं वचनव्यत्ययः नमुचावासुरे दैत्ये वर्त्तमानं सुरामं सुरामयं ग्रहं सचा सह विपिपाना विविधं पिबन्तः सन्तः कर्मस्विन्द्रमावत आ समन्ताद्रक्षत । पिपाना अत्र विकरणव्यत्ययः ॥ ७६ ॥

**पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः । यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ७७ ॥**

पुत्रमिव पितरौ व्याख्यातम्॥ ७७ ॥

इयं व्याख्याता दशमेऽध्याये ( १०, ३४ ) ॥ ७७ ॥

**यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः । कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनय चारुमग्नये ॥ ७८ ॥**

पशुस्विष्टकृतौ । यस्मिन्नश्वासः । अहाव्यग्ने इति । जगतीत्रिष्टुभावाग्नेय्यौ । यस्मिन्नग्नौ अश्वासः ऋषभासः उक्षणः वशाः मेषाः अवसृष्टासः अवदायावदाय चतुरावत्तैर्निक्षिप्ताः । आदायादायाहुताः । तस्मै अग्नये । कीलालपे । कीलालमन्नरसं पिबतीति कीलालपाः । सोमपृष्ठाय । सोमाहुतयो यस्य पृष्ठे हूयन्ते । वेधसे मेधाविने । हृदा मतिञ्जनय । हृदयं मतिपूर्वकञ्जनय । चारुम् अग्नये ॥ ७८ ॥

का० ( १९, ६, २१ ) पशुस्विष्टकृतो यस्मिन्नश्वासोऽहाव्यग्न इति । पशोः सम्बन्धिनि स्विष्टकृद्यागे यस्मिन्नश्वास इति पुरोऽनुवाक्या अहाव्यग्न इति याज्या ॥ द्वे अग्निदेवत्ये जगतीत्रिष्टुभौ । हे अध्वर्यो ! तस्मै अग्नये हृदा सह मतिं बुद्धिं चारुं समीचीनं जनय अग्न्यर्थं मनोबुद्धी शुद्धे कुरु इत्यर्थः । कीदृशायाग्नये कीलालपे कीलालमन्नरसं पिबति कीलालपास्तस्मै । सोमपृष्ठाय सोमः पृष्ठे यस्य तस्मै यस्य पृष्ठे सोमाहुतयो हूयन्त इत्यर्थः । वेधसे विद्वा-

ति शुभं करोति वेधाः तस्मै शुभमतिकर्त्रे । तस्मै कस्मै यस्मिन्नग्नौ एते पशवः अवसृष्टासः अवसृष्टाः अवदायावदाय चतुरवत्तेन निक्षिप्ताः तथा आहुताः आदायादाय हुताः । के पशवः अश्वासः अश्वाः ऋषभासः ऋषभाः उक्षणः उक्षाणः सेचनसमर्था वृषाः वा षपूर्वस्य निगम इति ( पा० ६, ४, ९ ) उपधादीर्घाभावः । वशाः बन्ध्याः । मेषाः अजाः । यस्मिन्नेते पशवो हुतास्तस्मै मनःशुद्धिं कुर्विति होतुर्वाक्यम् ॥ ७८ ॥

**अहा॑व्यग्ने ह॒विरा॒स्ये॑ ते स्रु॒चीव॑ घृ॒तं च॒म्वी॒व॒ सोमः॑ । वा॒ज॒स॒निँ र॒यिम॒स्मे सु॒वीरं॑ प्रश॒स्तं धे॑हि य॒शसं॑ बृ॒हन्त॑म् ॥ ७९ ॥**

अहाव्यग्ने । यस्य ते तव आस्ये मुखे हे अग्ने अहावि हुतम्मया हविः । कथमिव । स्रुचीव घृतम् । यथा स्रुचि नित्यावस्थितं घृतम् । चम्वीव सोमः । चम्वामिव । यथा च अभिषवणचर्माणि नित्यावस्थितः सोमः । एवम् । तन्त्वां ब्रवीमि । वाजसनिम् । वाजमन्नं सम्भजते वाजसानिं रयिं धनम् । अस्मे अस्मासु । सुवीरं शोभनवीरम् प्रशस्तं धेहि स्थापय । यशसञ्च । यशो वै सोमो राजा । बृहन्तं महान्तम् ॥ ७९ ॥ शतम् १२० ।

हे अग्ने ! ते तवास्ये हविरहावि हुतं सर्वतः जुहोतेः कर्मणि लुङ् सन्ततहोमे दृष्टान्तः स्रुचि घृतमिव यथा स्रुचि घृतं सर्वदा स्थितम् चम्वि चम्वामधिषवणचर्माणि सोम इव तत्र यथा सोमः सर्वदा स्थितस्तद्वन्नित्यं मया तवास्ये हविर्हुतम् । हे अग्ने ! सः त्वमस्मे अस्मासु एतानि वस्तूनि धेहि स्थापय । कानि वाजसनिं वाजस्य अन्नस्य सनिं भोगम् । रयिं धनं कीदृशं सुवीरं शोभना वीराः पुत्रा यत्र तं पुत्रयुक्तं धनमित्यर्थः । प्रशस्तं सर्वलोकस्तुतं बृहन्तं महान्तं यशसं यसश्च पुंस्त्वमार्षम् सर्वलोकप्रसिद्धं यशो देहीत्यर्थः यशो वै सोमो राजेति श्रुतेः यशसं सोमामिति वा ॥ ७९ ॥

**अश्विना तेज॑सा चक्षुः॑ प्राणेन॒ सर॑स्वती वी॒र्य॑म्। वा॒चेन्द्रो॒ बले॒नेन्द्रा॑य दधुरिन्द्रि॒यम्॥ ८०॥**

अश्विना तेजसा। एकादशर्चं शस्त्रम्। आद्यानुष्टुप् अश्विसरस्वतीन्द्रदेवत्या च। द्वितीयाद्यास्त्रयस्तृचो। गायत्र्यश्विसरस्वतीन्द्रदेवत्या यथासंख्यम् अश्विना अश्विनौ तेजसा सह। चक्षुःप्राणेन घ्राणेन सह वीर्यम्। सरस्वती वाचा सह बलेन च सह। एवमेता देवताः प्रतिनियतचक्षुरादिद्वारेण इन्द्राय दधुः ददुः इन्द्रियम्॥ ८०॥

का० (१९, ७, १) प्रातिगारिष्यत्युपविष्टेऽध्वर्यो शो॑ऽसावेत्याहूयाश्विना तेजसेत्यनुवाक॑ऽ शं॑सति। त्रयस्त्रिंशवसाग्रहसादनानन्तरमध्वर्योः होतुः पुरस्तात् प्रातिगरार्थमुपवेशनमुक्तम् तदाह प्रातिगारिष्यत्यध्वर्यो पुर उपविष्टे सत्यध्वर्यो शोसावोऽमित्याहूयाश्विना तेजसा चक्षुरित्येकादशर्चमनुवाकं शस्त्रं शंसति प्रथमान्त्ये ऋचौ त्रिः शंसनीये मध्यस्थानां त्रयाणां तृचानामादिष्वाहावः कार्य इति सूत्रार्थः॥ अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् आद्यः पादोऽष्टार्णः द्वितीयो नवार्णः तृतीयः षडर्णः चतुर्थोऽष्टार्णः। अश्विनौ तेजसा सह चक्षुरिन्द्रियमिन्द्राय दधुः ददतुः दधतुः। सरस्वती प्राणेन सह वीर्यमिन्द्राय दधौ ददौ। इन्द्रः कल्पान्तरीणः वाचं बलेन च सह इन्द्रायैतत्कल्पोत्थाय इन्द्रियं सामर्थ्यं ददौ। एवमश्विसरस्वतीन्द्रा इन्द्राय तेजआदि दधुरित्यर्थः सर्वापेक्षया दधुरिति बहुवचनम्॥ ८०॥

**गोम॑दू षु णा॑सत्या अश्वा॑वद्यातमश्विना। व॒र्ती रु॑द्रा नृपाय्य॑म्॥ ८१॥**

गोमदूषु। हे नासत्यौ गोमद्धनं संगृह्य। उसू पादपूरणौ अश्ववच्च धनं संगृह्य यातम् हे अश्विनौ वर्तिः वर्तिन्यो प्रसिद्धेन मार्गेण। हे रुद्रा रुद्रौ शत्रूणां रोदयितारौ। नृपाय्यं प्रति सदेवा नरः यस्मिन्यज्ञे पिबन्ति स नृपाय्यः॥ ८१॥

गृत्समददृष्टा अश्विदेवत्यास्तिस्रो गायत्र्यः आद्या पादनिवृद्गायत्री त्रयः सप्तकाः पादनिवृदिति वचनात् । उ सु निपातौ पादपूरणौ इकः सुञीति ( पा० ६, ३, १३४ ) सुनिपाते परे उ इत्यस्य संहितायां दीर्घः सुञ इति ( पा० ८, ३, १०७ ) सूत्रेण सु इत्यस्य षत्वम् पूर्वपदादिति ( पा० ८, ३, १०६ ) नासत्यशब्दनकारस्य णत्वम् । हे नासत्या नासत्यौ ! हे अश्विना ! हे रुद्रा ? रुद्रौ ? शत्रूणां रोदयितारौ ! वर्त्तिः विभक्तिव्यत्ययः वर्त्या मार्गेण युवां नृपाय्यं यज्ञं प्रति यातं गच्छतम् नृभिः पीयते सोमो यस्मिन् स नृपाय्यः क्रतौ कुण्डपाय्यसञ्चाय्याविति अत्र कुण्डशब्द उपलक्षकः नृशब्देऽपि तृतीयान्ते उपपदे पिबतेर्धातोराधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते । किं कृत्वा गोमत् गावो विद्यन्ते यस्मिन् तद् गोमत् अश्वावत् अश्वा विद्यन्ते यस्य तदश्ववत् मन्त्रे सोमाश्वेत्यादिना अश्वशब्दस्य दीर्घः गोयुक्तमश्वयुक्तं च धनमादाय यज्ञं गच्छतामित्यर्थः ॥ ८१ ॥

**न यत् परो नान्तर आदधर्षद् वृषणवसू । दुःशᳬंसो मर्त्यो रिपुः ॥ ८२ ॥**

न यत्परः । यमेनं न परः अन्तरेण असम्बद्धः नच अन्तरः सम्बद्धः आदधर्षत् आधृष्णुयात् अभिभूय गृह्णीयात् । हे वृषण्वसू । वर्षणं वृष्टिर्वसु धनं ययोस्तौ यथोक्तौ । यद्वा वृष्टिद्वारेणावासयितारौ । दुःशंसः दुष्टमसद्वृत्तं शंसति यः स तथोक्तः । मर्त्यो मनुष्यः रिपुः शत्रुः ॥ ८२ ॥

हे वृषण्वसू ! वृषा वृष्टिरेव वसु धनं ययोस्तौ यद्वा वृष्ट्या शासयतो लोकं स्थापयतस्तौ वृषण्वसू हे अश्विनौ ! दुःशंसो दुष्टमपवादं शंसति कथयति दुःशंसोऽपवदिता रिपुः शत्रुः मर्त्यः मनुष्यः परः असम्बद्धः अन्तरः सम्बद्धः स्वकीयोऽपि ईदृशो मर्त्यो यत् यमिन्द्रं न आदधर्षीत् न आधृष्णुयात् न पराभूयात् । स्वजनोऽस्वजनोऽपि रिपुः पिशुनोऽपि यमिन्द्रं पराभवितुं न शक्त इत्यर्थः । ञिधृषा प्रागल्भ्येऽस्माद्धातोर्यङ्लुगन्ताच्छतृप्रत्ययः ॥ ८२ ॥

ता न॒ आवो॑ढमश्विना र॒यिं पि॒शङ्ग॑सन्दृशम् । धिष्ण्या॑ वरिवो॒विद॑म् ॥ ८३ ॥

ता नः । यौ युवामुक्तगुणौ तौ नः अस्माकम् आवोढम् आवहतम् हे अश्विनौ । रयिं धनम् पिशङ्गसंदृशम् अनेकरूपसन्दर्शनम् । हे धिष्ण्या धिष्ण्या धिष्ण्याग्निरूपौ दातारौ वा वरिवो विदम् । धनं विन्दति वरिवोविदः वरिवो धननाम । यल्लब्धं सदन्यस्य धनलाभस्य हेतुभूतं भवति ॥ ८३ ॥

हे धिष्ण्या धिष्ण्यौ धिष्ण्याग्निरूपौ ! धातारौ वा हे अश्विना ! युवां नोऽस्माकं रयिं धनमावोढमावहतम् आनयतमित्यर्थः वहतेर्लुङि परस्मैपदे मध्यमद्विवचनम् । कीदृशं रयिं पिशङ्गसंदृशं पिशङ्गं पीतं सम्यक् दृश्यते तत् पिशङ्गसंदृशं पीतवर्णं सुवर्णमित्यर्थः । तथा वरिवोविदं वरिवो धनं विन्दति प्राप्नोति वरिवोविदस्तम् विद्लृ लाभे इगुपधेति कः । यच्च धनं धनान्तरहेतुभूतं भवतीत्यर्थः ॥ ८३ ॥

पा॒व॒का नः॒ सर॑स्वती॒ वाजे॑भिर्वा॒जिनी॑वती । य॒ज्ञं व॑ष्टु धि॒याव॑सुः ॥ ८४ ॥

पावका नः । पावयित्री सरस्वती वाजेभिः अन्नैः वाजिनीवती अन्नवती । सा नः अस्माकम् यज्ञं वष्टु कामयताम् यो हि यदिच्छाति स तदागच्छाति धियावसुः धियावसु धनं यस्याः सा धियावसुः ॥ ८४ ॥

मधुच्छन्दोदृष्टाः सरस्वतीदेवत्यास्तिस्रो गायत्र्यः । सरस्वती नोऽस्माकं यज्ञं वष्टु कामयतां वश कान्तौ यो यदिच्छति स तत् प्रति गच्छति अस्मद्यज्ञं प्रत्यागच्छात्वित्यर्थः । कीदृशी सरस्वती-पावका पावयित्री पवनं पावः शोधनं घञ् पावं कायति कथयति पावका आतोऽनुपसर्गे कः ( पा० ३, २, ३ ) वाजेभिर्वाजैः अन्नैः वाजिनीवती वाजा अन्नानि विद्यन्ते यस्यां सा वाजिनी यज्ञक्रिया वाजिनी विद्यते यस्याः सा वाजिनीवती यज्ञक्रियाधिष्ठात्री । धिया-

वसुः धिया कर्मणा वसु धनं यस्याः सा धियावसुः छान्दसस्तृतीयाया अलुक् ॥ ८४ ॥

**चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ ८५ ॥**

चोदयित्री सूनृतानाम् । चोदयित्री प्रेरयित्री । सूनृतानाम् शोभनानामृतानां वचसाम् त्रयीलक्षणस्य वाग्विभवस्य चोदयित्रीत्यर्थः । चेतन्ती चेतयमाना सुमतीनाम् शोभनमतीनाम् । यज्ञं दधे धारयति सरस्वती ॥ ८५ ॥

सरस्वती यज्ञं दधे धारयति । कीदृशी सूनृतानां प्रियं सत्यं सूनृतं प्रियसत्यवचनानां वेदत्रयीशब्दानां चोदयित्री प्रेरयित्री चुद प्रेरणे णिजन्तात्तृच् ततो ङीप् । सुमतीनां शोभनानां बुद्धीनां चेतन्ती चेतयन्ती प्रकटयन्ती सुमतिदात्रीत्यर्थः छन्दस्युभयथेति ( पा० ३, ४, ११७ ) शपोऽप्यार्धधातुकत्वाण्णिचो लोपः ॥ ८५ ॥

**महो अर्णः सरस्वती प्रचेतयति केतुना धियो विश्वा विराजति ॥ ८६ ॥**

महो अर्णः या महत् अर्णः महदुदकमित्यर्थः । सरस्वती प्रचेतयति प्रज्ञापयति । केन हेतुना । केतुना कर्मणा प्रज्ञया वा। मध्यस्थाना नदी वा । धियो बुद्धीः विश्वाः सर्वाः सर्वप्राणिष्ववस्थिताः । विराजति राजतिर्दीप्त्यत्यर्थः । अन्तर्भावितण्यर्थश्च द्रष्टव्यः । विविधन्दीपयति प्रकाशयति । तां वयं स्तुम इति शेषः ॥ ८६ ॥

सरस्वती केतुना कर्मणा प्रज्ञया वा महो महत् अर्णः उदकं प्रचेतयति प्रज्ञापयति प्रेरयति सर्वस्यां भूमौ वृष्टिं कारयतीत्यर्थः । किञ्च विश्वाः सर्वाः धियः सर्वप्राणिस्था बुद्धीः विराजति विराजयति दीपयति सर्वजन्तुबुद्धीः प्रकाशयति तां स्तुमः ॥ ८६ ॥

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः। अण्वीभिस्तना पूतासः॥ ८७॥

इन्द्रायाहि। हे इन्द्र आयाहि आगच्छ। हे चित्रभानो चित्रदीप्ते। किं कारणं सुता अभिषुताः इमे सोमाः त्वायवः त्वां कामयमानाः सुप आत्मनः क्यच् क्याच्छन्दसीति दीर्घः त्वायव इति सिद्धम्। नचाभिषुता एव केवलम्। किं तर्हि। आण्वीभिः तना पूतासः। अण्व्य इत्यङ्गुलिनाम। अङ्गुलीभिः तना च धनदानेन च पूताः पवित्रीकृताः। यद्वा तनाशब्देन दशापवित्रमभिधाय अङ्गुलीभिर्दशापवित्रेण च पूता इत्यर्थः॥८७॥

मधुच्छन्दोदृष्टाः इन्द्रदेवत्यास्तिस्रो गायत्र्यः। चित्रा नानाविधा भानवो दीप्तयो यस्य स चित्रभानुः हे चित्रभानो! इन्द्र! त्वमायाहि आगच्छ। किमिति इमे सोमाः सुताः अभिषुताः। कीदृशा इमे त्वायवः त्वां कामयन्ते त्वायवः सुपः आत्मनः क्यच् क्याच्छन्दसीति उप्रत्ययः। तथा अण्वीभिः अण्वीत्यङ्गुलीनाम (निघ० २, ५) अङ्गुलीभिः तना दशापवित्रेण च पूतासः पूताः शोधिताः तनशब्दो दशापवित्रवाची तृतीयैकवचनस्य पूर्वसवर्णः शोधिताः सुताः सोमा इन्द्रोऽस्मान् पिबत्विति कामयन्तेऽतोऽत्रायाहीत्यर्थः॥ ८७॥

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः। उप ब्रह्माणि वाघतः॥ ८८॥

इन्द्रायाहि। हे इन्द्र आगच्छ धिया स्वकीयया बुद्ध्या ईषितः प्रेषितः अनन्यप्रेषित इत्यभिप्रायः। विप्रजूतः जूतिर्ग्रन्थिः प्रीतिर्वा। मेधाव्यनुगतः सुतावतः अभिषुतवतो यजमानस्य यज्ञम्। किमित्यागन्तव्यमिति चेत्। उप समीपे ब्रह्माणि हवींषि वर्तन्ते। उपपुरोडाशानृत्विजो वर्तन्त इत्यर्थः। वाघत इति ऋत्विङ्नामसु पठितम्॥ ८८॥

हे इन्द्र! धिया स्वबुद्ध्या इषितः प्रेरितः सन्नायाहि अनन्यप्रेरि

त आगच्छेत्यर्थः । कीदृशस्त्वं विप्रजूतः जु गतौ विप्रैर्मेधाविभिरनुगतः सेवितः । किमित्यागन्तव्यमिति चेत् सुतावतः छान्दसो दीर्घः सुतवतः सोममभिषुतवतो यजमानस्य ब्रह्माणि हवींषि उप हविषां समीपे वाघतः ऋत्विजो वर्त्तन्त इति शेषः वाघत इति ऋत्विङ्नामसु ( निघ० ३, १८ ) पठितम् ऋत्विजो हविरादाय स्थिता वर्त्तन्त इत्यायाहीत्यर्थः ॥ ८८ ॥

**इन्द्रायाहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥ ८९ ॥**

इन्द्रायाहि । हे इन्द्र आगच्छ तूतुजान तूतुजान इति क्षिप्रनाम क्षिप्रं त्वरमाणः । कुत्रागच्छ इति । उपब्रह्माणि हवींषि हे हरिवः । हरी अश्वौ तद्वत् इन्द्र । मतुवसो रुः सम्बुद्धाविति रुत्वम् । एत्य च सुते अभिषुते सोमे दधिष्व उदरेण धारयस्व । नः अस्माकं स्वभूतं च नः अन्नलक्षणम् ॥ ८९ ॥

हरी अश्वौ विद्येते यस्य स हरिवान् मतुवसो रुः सम्बुद्धौ छन्दसीति रुत्वम् हे हरिवः ! अश्ववन् ! हे इन्द्र । तूतुजानः त्वरमाणः सन् त्वं ब्रह्माणि हवींषि उप हवींषि प्रति आयाहि तूतुजान इति ( निघ० २, १५ ) क्षिप्रनाम । आगत्य सुते सोमेऽभिषुते सति नोऽस्माकं चनः अन्नं सोमरूपं हविः दधिष्व उदरे धारय धि धारणे व्यत्ययेन शपो लुकि द्वित्वं जुहोत्यादित्वात् अभ्यासस्यात्वं छान्दसम् । चन इत्यन्ननाम ( निघ० २, ७ ) ॥ ८९ ॥

**अश्विना पिबतां मधु सरस्वत्या सजोषसा । इन्द्रः सुत्रामा वृत्रहा जुषन्ताᳬं सोम्यं मधु ॥ ९० ॥**

## इति माध्यन्दिनीयायां वाजसनेयिसंहितायां विंशोऽध्यायः ॥ २० ॥

---

अश्विना पिबताम् । अश्विनौ पिबताम् मधु मधुरस्वादोपलक्षितम् । सोमम्पिबती । सरस्वत्या च सजोषसा समानसोमपानौ । इन्द्रश्च सुत्रामा वृत्रहा पिबतु मधु । ततो भूयोभूयोऽश्विसरस्वतीन्द्राः जुषन्तां पिबन्ताम् सोम्यम्मधु सोममयम्मधु ॥ २० ॥

इति उव्वटकृतौ मन्त्रभाष्ये विंशतितमोऽध्यायः ॥ २० ॥

आनन्दपुरवास्तव्यजैय्यटाख्यस्य सूनुना ॥
उव्वटेन कृतम्भाष्यं पदवाक्यैः सुनिश्चितैः ॥ १ ॥

---

अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् । अश्विना अश्विनौ मधु मधुरस्वादं सोमं पिबतां भक्षयताम् । कीदृशौ अश्विनौ सरस्वत्या सजोषसा सजोषसौ जोषः प्रीतिः असुन् समानं जोषः प्रीतिर्ययोस्तौ सरस्वत्या सह प्रीतिमन्तावित्यर्थः । किञ्च सुष्ठु त्रायते रक्षति सुत्रामा वृत्रं हतवान् वृत्रहा ईदृश इन्द्रः अश्विनौ सरस्वती च मधु मधुरं सोम्यं सोममयं हविर्जुषन्ताम् सेवन्ताम् मये चेति सोमशब्दात् मयडर्थे यप्रत्ययः सोममयं सोम्यम् ॥ ९० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
सेकासन्ध्यादिहौत्रान्तो विंशोऽध्यायो निरूपितः ॥ २० ॥

# अथैकादशोऽध्यायः ॥ ११ ॥

अथाष्टावध्याया अग्निसंबद्धास्तान् प्रजापतिर्ददर्श । साध्या वा ऋषयः प्रजापतेः प्राणभूताः । अथ प्रजापतिः पञ्चधा दर्शितः प्रथमां चितिमपश्यत् । प्रजापतिरेव तस्या आर्षेयम् । देवा द्वितीयां चितिमपश्यंस्त एव तस्या आर्षेयमृषयश्चतुर्थीं चितिमपश्यन्नृषय एव तस्या आर्षेयम् । परमेष्ठी पञ्चमीं चितिमपश्यत् परमेष्ठ्येव तस्या आर्षेयमिति । अथ प्रतिकर्म्मदर्शिनः । सवितैतानि सावित्राण्यपश्यदिति । युञ्जानः प्रथमम् । अष्टौ कण्डिकाः सवित्रा दृष्टाः । सवितृदेवत्याः ताभिः संतताभिराहुतिर्हूयते । प्रथमानुष्टुप् । अग्न्यारम्भे सविता युञ्जानः नियुञ्जानः प्रथमं मनः ततोऽनन्तरं तत्वाय तनु विस्तारे क्त्वो यक् छान्दस उपजनः । तनित्वा विस्तार्य धियो बुद्धीर्मनसा पर्यालोच्य बुध्यावधार्येत्यर्थः । अग्नेर्ज्योतिः । अग्निसंबन्धि ज्योतिः पञ्चसु पशुषु प्रविष्टं निचाय्य उपलभ्य यथा चाग्निः समिद्धो दीप्यत इत्यादिना । ततः पशुशरीरान्वितायाः पृथिव्याः । अध्याभरत् । अभ्याहृतवानग्निम् । इष्टकाः कृत्वा चितवानग्निम् । श्रुतौ प्रजापतिः कर्त्तोपदिष्टः तदनुकृत्या इदानीन्तना यजमाना उपदिश्यन्ते प्रजापतिर्वै युञ्जान इति गुणस्तुतिर्व्याख्येया ॥ १ ॥

युक्तेन मनसा । गायत्री । युक्तेन एकाग्रेण मनसा वयं देवस्य सवितुः सवे प्रसवे वर्त्तमानाः किमर्थं स्वर्ग्याय स्वर्गसाधकाय कर्म्मणे शक्त्या यथाशक्त्या प्रयत्नं कुर्म्म इति शेषः ॥ २ ॥

युक्त्वाय सविता अनुष्टुप् । सविता प्रसुवाति तानिति तदो दर्शनादिह यद्योगः कर्तव्यः नित्यसम्बन्धौ यत्तदौ । युक्त्वाय । यकार उपजनोऽनर्थान्तरवचनः । यान्देवानग्निकर्मणा अनेन कर्मणा स्वर्यतः स्वर्गं लोकं गच्छतः । धिया बुध्या कर्मणा वा दिवं द्योतनं स्वर्गं बृहत् महज्ज्योतिरादित्यलक्षणम् । आत्मत्वेन करिष्यतः संस्कुर्वतः सविता प्रसविता प्रसुवाति प्रस्तौति अभ्यनुजानाति । तान् तानेव देवान् ॥ ३ ॥

युञ्जते मन इति व्याख्यातम् ॥ इयांस्तु विशेषः प्रजापतिर्विप्रो बृहद्विपश्चिदुच्यते । देवा विप्राः ॥ ४ ॥

युजे वाम् । त्रिष्टुप् । दम्पती यजमानौ वामित्यनेन पदेनोच्येते । युनज्मि वां युवाभ्यामर्थाय । ब्रह्म पूर्व्यं नमोभिः । प्राणाः सप्तर्षयो ब्राह्मणा ब्रह्मशब्देनोच्यन्ते । पूर्व्यशब्देन च नमोभिरन्नैः सहितम् । इयमेवाहुतिरन्नशब्देनोच्यते । किं प्रयोजनमिति चेत् । विश्लोकः एतु पथ्येव सूरेः । विविधमेत्वागच्छतु श्लोकः कीर्तिः सूरेः पण्डितस्य यजमानस्य कथमिव । पथ्येव । पथः अनपेता पथ्या यथा यज्ञमार्गप्रवृत्ताहुतिरुभयलोकसञ्चारिणी भवति एवं यजमानस्योभयलोकसञ्चारी श्लोको भवत्वित्यभिप्रायः । शृण्वन्तु विश्वे सर्वे अमृतस्यामरणधर्मिणः प्रजापतेः पुत्राः देवाः कीर्तिम् । आ ये धामानि दिव्यानि तस्थुः आतस्थुः ये देवा धामानि स्थानानि दिव्यानि ॥ ५ ॥

यस्य प्रयाणम् । जगती । सवितैव प्रजापतिः अत्राभिधीयते । व्यवहितपदप्रायमिदं मन्त्रवाक्यम् । यस्य देवस्य प्रयाणमनु प्रथमगमनमनु अन्ये देवाः ययुः । जग्मुः । इच्छब्दोऽनर्थकः । महिमानमोजसा । महिमानं महाभाग्यं च विभूतिमोजसा बलेन ययुः देवाः । यश्च सविता देवः पार्थिवानि रजांसि विममे महित्वना महत्त्वेन । लोका रजांस्युच्यन्ते । पृथिवीप्रभृतींस्त्रीन् लोकान् मिमीते स्वकीयेन महाभाग्येन स एतशः स एतज्जगत्स्थावरजङ्गमं प्राणभावेन शेत इति एतशः सविता स इत्युच्यते । यद्वा एतश इत्यश्वनामसु पठितम् । सोऽश्वरूपेण समस्तमेतज्जगदवष्टभ्य स्थितः । तदुक्तम् । उषा वा अश्वस्य मेध्यस्य शिर इत्यादिना । सूरादश्वं वसवो निरतष्टेति ॥ ६ ॥

देव सवितरिति व्याख्यातम् । इयांस्तु विशेषो वाचस्पतिर्वाचं नः स्वदतु इति । वाग्वा इदं कर्म प्राणो वाचस्पतिरिति ॥ ७ ॥

इमन्नो देव । आ अवसाना ययुः इमं यज्ञं नोऽस्माकं हे देव सवितः प्रणय प्रापय कथं भूतं यज्ञं देवाव्यं देवा यस्मिन्नव्यन्ते तर्प्यन्ते स देवाव्यः सखिविदं सखयो यस्य विद्यन्ते स सखिवित् तं सखिविदम् । सत्राजितं सत्राशब्दः सत्यवचनः सत्यं ब्रह्म यो जयति स सत्राजित्तं धनं यो गवादि जयति स धनजित्तं धनजितं स्वर्जितं स्वर्लोकं यो जयति स स्वर्जित्तं स्वर्जितम् । ऋचा स्तोमम् । गायत्री अनवसाना । किञ्च ऋचा ऋग्वेदेन सह स्तोमं त्रिवृ-

दादिं समर्द्धय गायत्रेण साम्ना सह रथन्तरं समर्द्धय बृहच्च । कथम्भूतं बृहद् गायत्रवर्त्तनि गायत्रं यस्य बृहतः वर्त्तनि वर्त्मभूतम् ॥८॥

अभ्रिमादत्ते । देवस्य त्वा । व्याख्यातम् । आददे गृह्णामि । अहं त्वां गायत्रेण छन्दसा । अङ्गिरस्वत् अङ्गिरसा तुल्यम् । अङ्गिरोवदिति प्राप्ते अयस्मयादीनि छन्दसीति भसंज्ञा । श्रुतौ तु अग्निवदिति व्याख्यातम् । अभ्रिरुच्यते । त्वं गृहीता सती पृथिव्याः सधस्थानात् समानस्थानात् अग्निं पुरीष्यं पशव्यमङ्गिरस्वदाभर अङ्गिरसा तुल्यम् । अङ्गिरोवत् । अग्निवद्वा आभर । हृग्रहोर्भश्छन्दसि हस्येति हकारस्य भकारः । अङ्गिर उ ह्यग्निरिति श्रुतेः । त्रैष्टुभेन छन्दसाङ्गिरस्वत् ॥ ९ ॥

अभ्रिरसि । अभ्रिः त्वमसि नारी स्त्री त्वमसि । किञ्च त्वया वयमग्निं शकेम खनितुं सधस्थे आ समानस्थाने वर्त्तमानं पृथिव्याः । आकारोऽनर्थकः जागतेन छन्दसाङ्गिरस्वत् ॥ १० ॥

अभ्रिमभिमन्त्रयते । हस्त आधाय । अनुष्टुप् । यजुरन्ता आनुष्टुभेनेत्यादि यजुः । हस्तेऽभ्रिमादाय सविता ततस्तामेवाभ्रिं बिभ्रत् । हिरण्ययीं हिरण्मयीम् । अमृतमयीं छन्दोमयीं वा । अग्नेर्ज्योतिर्निचाय्य विभाल्य दृष्ट्वा ततः पृथिव्या अधि सकाशात् आभरत् आहृतवान् आनुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ११ ॥

अश्वगर्द्दभाजानभिमन्त्रयते यथासंख्यम् । प्रतूर्त्तं वाजिन्निति त्रिभिर्ऋग्भिः तिस्र एत एवाश्वादयोऽत्र देवता । आद्या आस्तारपङ्क्तिः । हे वाजिन्प्रतूर्त्तं त्वरतेरेतद्रूपम् । प्रकर्षेण तूर्णमाद्रवागच्छ वरिष्ठामनु संवतं वरिष्ठामुरुतमाम् । अनुसंवतम् । अनुसम्पूर्वस्य वनोतेः क्विप्येतद्रूपम् । सम्भजनमुच्यते क्षिप्रतमं हे वाजिन्नागच्छ उत्कृष्टं सम्भजनमन्वित्यभिप्रायः । उत्कृष्टं भजनमधुना दर्शयितुमाह । दिवि द्युलोके ते तवादित्यरूपेण जन्म भविष्यति । आगतस्य सतः परमसुत्कृष्टम् । किञ्च अन्तरिक्षे तव नाभिः उदरं पृथिव्यामध्युपरि योनिः स्थानं पादावित्यर्थः । इदिति पादपूरणः । विराड्रूपेण अश्वः स्तूयते । तदुक्तम् । उषा वा अश्वमेध्यस्य शिर इति ॥ १२ ॥

रासभमभिमन्त्रयते युञ्जाथां गायत्री । अध्वर्युयजमानावुच्येते । युञ्जाथां रासभं गर्दभं युवं युवाम् । अस्मिन् यामेऽस्मिन्नग्निकर्मणि वृषण्वसू वृषा सेक्ता गर्दभः ययोर्वसु धनं तौ वृषण्वसू तयोः सम्बोधनं

हे वृषण्वसू कथम्भूतं रासभम् । अग्निं सम्भरन्तम् । अस्मयुमस्मान्कामयमानम् । अस्मत्प्रेषितमिति श्रुतिः । युञ्जाथामिति सम्बन्धः ॥१३॥

अजमभिमन्त्रयते । गायत्री । योगे योगे तव स्तरम् । तव इति बलनाम । कर्मणि कर्मणि बलिनामुत्साहवतामेतमजं वाजे वाजे अन्ने अन्ने दातव्ये देवानां मनुष्याणाम् । आयह्वामः हे सखाय ऋत्विग्यजमानाः इन्द्रमिन्द्रियवन्तं वीर्यवन्तमूतयेऽवयनाय आह्वयाम इति संबन्धः ॥ १४ ॥

अश्वरासभाजानुत्क्रामयति । प्रतूर्वन्नेहि विराड्रूपा यजुर्गर्भा उर्वन्तरिक्षं वीहीति यजुः । अर्द्धर्चेनाश्वः स्तूयते । प्रतूर्वन् संत्वरमाण एहि आगच्छ । अवक्रामन्नशस्तीः पदेनावष्टभ्य अशस्तीः । पाप्मनः दुष्टान् । आगमने को गुण इति चेत् रुद्रस्य भगवतो गाणपत्यं गणपतित्वं लप्स्यस इति शेषः । अतो मयोभूः सुखस्य भावयिता भूत्वा एहि । रासभमुत्क्रामति । उर्वन्तरिक्षं वीहि उरु विस्तीर्णमन्तरिक्षं रक्षोभिरनाकुलितं वि इहि । विविधमागच्छ । स्वस्तिगव्यूतिः । स्वस्तीत्यविनाशनाम । गव्यूतिर्मार्गः भयवर्जितः प्रभूतयवसोदकमार्गः सन् त्वं मे अभयानि कृण्वन् कुर्वन् ऋत्विग्यजमानानां पूष्णा पृथिव्या सयुजा समानयोगिन्या सह । नैकः प्रपद्येताध्वानमित्येतद्दर्शयति ॥ १५ ॥

अजमुत्क्रामयति । पृथिव्याः सधस्थात् । व्याख्यातम् । ब्रह्माध्वर्युयजमाना गच्छन्ति अग्निं पुरीष्यम् । अच्छाभेराप्तुमिति शाकपूणिः । अग्निं पशव्यम् अङ्गिरा इवाभिगच्छामः । यद्वा आप्तुं गच्छामः । अनड्वा पुरुषमीक्षते अग्निं पुरीष्यम् अङ्गिरा इव संभरिष्यामः ॥ १६ ॥

वल्मीकवपामादाय छिद्रेण पिण्डमीक्षते । अन्वग्निः । आग्नेयी त्रिष्टुप् । प्रजापतिरूपेणात्राग्निः स्तूयते उषसामग्रमनु योऽग्निः अख्यत् । ख्या प्रकथने । प्रकाशितः । उषसामग्रम् आदित्यं योऽग्निर्दीप्यत इत्यर्थः । यश्च अह्वान्यनुदीप्यते प्रथमः आद्यः जातवेदाः जातप्रज्ञानः । अनुसूर्य्यस्य पुरुत्रा च रश्मीन् यश्च सूर्यस्य रश्मीन् अनु पुरुत्रा बहु दीप्यते । अनुद्यावापृथिवी आततन्थ । यश्च द्यावापृथिव्यावनु स्वकीयं रश्मिजालमाततन्थ व्यातनोति । बभूथाततन्थेति छन्दासि निपात्यते तम् अग्निं पश्याम इति शेषः ॥१७॥

अश्वमभिमन्त्रयते । आगत्य वाजीत्यनुष्टुप् । आगत्यागत्य वाजी वेजनवानश्वः । अध्वानं पन्थानं सर्वा मृधः सर्वान् संग्रामान् पाप्मनः । पाप्मा वै मृधः सर्वान् पाप्मनः विधूनुते इत्येतत् अमान् विधूनुते अपनयति तस्मादुहैतदश्वस्य त्वा विधूनुते इति श्रुतिः । ततो विगतप्रयासः सन् अग्निं सधस्थे सह स्थाने पृथिव्यां वर्त्तमानं महति उत्कृष्टे प्रदेशे वर्त्तमानं चक्षुषा निचिकीषते पश्यति छान्दसोऽयं धातुः पश्यत्यर्थः ॥ १८ ॥

अश्वेन पिण्डमधिष्ठापयति । आक्रम्य वाजिन् । अनुष्टुप् । हे वाजिन् अश्व आक्रम्य अधिष्ठाप्य पृथिवीमग्निमिच्छ । अग्नेरन्वेषणं कुरु रुचा रुचि दीप्तौ क्विप् । रुचा दीप्त्या सह । यद्वा दीप्त्या निमित्तभूतयान्वेषय त्वम् किञ्च भूम्याः वृत्त्वाय । वृतु वर्त्तने । क्त्वो यक् स्पर्शनार्थे वृत्तिः । भूमेरेतत्प्रदेशं स्पर्शयित्वा नोऽस्माकं कथय यतः यस्मात्प्रदेशात् खनेम तमग्निं वयम् ॥ १९ ॥

अश्वं स्तौति । पृष्ठस्योपरि पाणिं धारयन् द्यौस्ते पृष्ठम् । बृहती । यस्य तव द्यौः पृष्ठं पृथिवीं च सधस्थं सहस्थानं पादौ आत्मा अन्तरिक्षं समुद्रः उदकं योनिः उत्पत्तिस्थानं तं त्वामेवंप्रभावं ब्रूमः। विख्याय चक्षुषा निरीक्ष्य चक्षुषा त्वमभितिष्ठ पादैः । पृतन्यतः पृतना संग्रामं ये कर्त्तुमिच्छन्ति ते पृतन्यतः तान्पृतन्यतः पुरुषान् ॥ २० ॥

अश्वमुत्क्रामयति । उत्क्राम । त्रिष्टुप् । विराड् वा । उत्क्राम उद्गच्छ महते सौभगाय महते ऐश्वर्याय भगशब्द ऐश्वर्यवचनः । अस्मादास्थानात् अस्मादधिष्ठानात् यत्र त्वं तिष्ठसि । द्रविणं धनं ददातीति द्रविणोदा हे वाजिन् । किञ्च । उत्क्रान्ते त्वयि वयं स्याम भवेम सुमतौ पृथिव्याः शोभनायां मतौ पृथिव्याः । अग्निं खनन्तः अग्न्यर्थं पिण्डं खनन्त उपस्थे उत्सङ्गे अस्याः पृथिव्याः ॥ २१ ॥

अथैनमश्वमुत्क्रामन्तमभिमन्त्रयते । उदक्रमीत् । त्रिष्टुप् । यत्प्रदेशादुदक्रमीत् उत्क्रान्तवान् द्रविणोदा द्रविणस्य धनस्य दाता वाजी वेजनवानश्वः । अर्वा अरणशीलः चञ्चल इत्यर्थः । अकः कृतवान् सुलोकं शोभनलोकं स्थानं सुकृतं पृथिव्यां ततः तस्मात्प्रदेशात् खनेम । सुप्रतीकं सुमुखमग्निं स्वो रुहाणा स्वर्गलोकं रोहन्तः । अधि अधीत्युपरिभावमैश्वर्यं वा । नाकं कमिति सुखनाम न अकम् असुखं यत्र गतानां भवति स नाकलोकः । उत्तममुत्कृष्टम्

इत्थंभूतस्य लोकस्य प्राप्तये एतत्कर्म्म कुर्म्म इत्यभिप्रायः ॥ २२ ॥

मृदमभिजुहोति । आ त्वा जिघर्म्मि । त्रिष्टुभौ आग्नेय्यौ घृ क्षर णदीप्त्योः॥ आजिघर्म्मि आसिञ्चामि घृतेन श्रद्धाप्रोत्कण्ठितेन मनसा प्रतिक्षिपन्तं भुवनानि विश्वा प्रत्येकशो निवसन्तं भूतानि सर्वाणि पृथुं तिरश्चा महान्तं तिर्यगञ्चनेन ज्योतिषा वयसा धूमेन बृहन्तं इतो वा अयम् ऊर्ध्वं रेतः सिञ्चति धूमꣳसामुत्र वृष्टिर्भवतीत्येतदभिप्रायं व्याचिष्ठं व्यञ्जनवन्तं अवकाशवन्तम् । अन्नै रभसं रभ राभस्ये अन्नैर्घृतादिभिः क्षिप्तैरुत्साहवन्तं बहुभिरप्यन्नैः क्षिप्तैर्नास्य शक्तिपरिहारो भवतीत्यभिप्रायः । दृशानं दर्शनीयं दृश्यमानं वा अदृश्या अन्या देवता अयं तु दृश्यत इति ॥ २३ ॥

आ विश्वतः । आजिघर्म्मि सिञ्चामि त्वां विश्वतः प्रत्यञ्चं सर्वतः । प्रतिगतं महाभाग्येन यतः अरक्षसा मनसा तज्जुषेत अरक्षसा अक्रुध्यमानेन प्रसन्नेन मनसा तद्धविर्जुषस्व सेवस्व जुषी प्रीतिसेवनयोः। यस्त्वं मर्य श्रीः मर्य्यैर्म्मनुष्यैः श्रीयत इति मनुष्यः आश्रयणीयः स्पृहयद्वर्णः । स्पृहणीयवर्णश्चासावग्निरिति साभिप्रायम् । अग्निर्वै देवानां मृदुहृदयतम इत्यादिगुणख्यापनार्थं नाभिमृशे तन्वा जर्भुराणः । न चाभिमर्शनाय भवसि। तन्वा शरीरेण ज्वालालक्षणेन जर्भुराणः। जभी जृभी गात्रविनामे। इतश्चेतश्च गच्छन् ॥ २४ ॥

त्रिः परिलिखति । तिसृभिराग्नेयीभिः गायत्र्यनुष्टुब्जगतीभिः । परि वाजपतिः। अग्निर्नानादेवत्यान्यपि हव्यानि हवींषि पर्यक्रमीत् पर्याक्रमणं भक्षणार्थं वाजपतिः अन्नस्य पतिः कविः क्रान्तदर्शनः किं कुर्वन् हवींष्यक्रमीत् दधद्रत्नानि रमणीयानि धनानि दाशुषे । यजमानो वै दाश्वानिति हवींषि दत्तवते यजमानाय ॥ २५ ॥

परि त्वाग्ने । परीत्यस्योपसर्गस्य धीमहीत्यनेन संबन्धः । ध्यायतेरयं संप्रसारणं तु छान्दसम् । परि सर्वतो ध्यायामः त्वा त्वां हे अग्ने पुरं पुरीरूपेणाऽवस्थितम् । आग्नेय्यादिपुरोरक्षिका भवन्ति वयं विप्रं मेधाविनं ब्राह्मणजातिं वा हे सहस्य सहसि बले भवोऽग्निः सहस्यः अग्निः स हि मथ्यमानो जायते तस्य संबोधनं हे सहस्य धृषद्वर्णं प्रसहनरूपं दिवेदिवे अहन्यहनि हन्तारं भङ्गुरवतां भङ्गुरमनवस्थितं मनो येषां ते भङ्गुरवन्तस्तेषां भङ्गुरवातम् । अनवस्थितचित्तवृत्तीनाम् ॥ २६ ॥

त्वमग्ने । हे अग्ने भगवन् त्वं द्युभिरहोभिः निमित्तभूतैर्म्मथ्यमानो जायसे। त्वमेव आशुशुक्षणिः आशु क्षिप्रं शुश्रया शुचा दीप्त्या क्षिणोति हन्ति सनोति संभजते वाशुशुक्षणिरुच्यते। त्वमद्भ्यश्च विद्युदात्मना जायसे । त्वमश्मनः पाषाणात् परिजायसे। त्वं वनेभ्योऽरणिकाष्ठेभ्यो जायसे । त्वमोषधीभ्यो वंशादिभ्यो जायसे । त्वं नृणां मनुष्याणाम् अग्निहोत्रिणां जायसे । तदुक्तम् । पुत्रो ह्येष सन् स पुनः पिता भवतीति । हे नृपते नृणां पालयितः शुचिर्निषक्तपाप्मा अथापरो व्याख्यामार्गः । आशुशुक्षणिशब्दस्य पञ्चम्यर्थे वा प्रथमा । तथाहि वाक्यसङ्गतिः आङुपसर्गपूर्वः शोचतिः सन्नन्तः । आशुशुक्षणेः आदिदीपयिषोः जायसे योऽपि गृहं स्थलं वा निर्मथ्य दीपयति तस्यापि त्वं जायसे सर्वेषामनुग्रहे प्रवृत्तोऽसि त्वमित्यभिप्रायः । त्वमग्ने द्युभिर्जायसे स त्वमादिदीपयिषोर्जायसे एवं त्वमद्भ्यः नृणां पुत्रत्वेन नृपते जायसे शुचिर्देदीप्यत इति योजना॥२७॥

खनति । देवस्य त्वा व्याख्यातम् । पृथिव्या सहस्थानादग्निं पुरीष्यम् । अङ्गिरसा तुल्यं खनामि ज्योतिष्मन्तं ज्योतिषा संयुक्तं त्वां हे अग्ने सुप्रतीकं सुमुखमजस्रेण । अनुपक्षीणेन भानुना दीप्त्या दीद्यतं दीप्यमानं शिवं प्रजाभ्यः शान्तम् अहिंसन्तं प्राणिभ्यः पृथिव्याः सधस्थात् सहस्थानात् अग्निं पुरीष्यं पशव्यम् । अङ्गिरसा तुल्यं खनामः ॥ २८ ॥

पुष्करपर्णं कृष्णाजिनस्योपरिष्टात् स्थापयति । अपां पृष्ठम् । स्वराट् पङ्क्तिः । यतस्त्वम् अपां पृष्ठमसि उपर्यवस्थानात् योनिः स्थानं अग्निः अग्न्यर्थस्य पिण्डस्याग्रतः त्वां ब्रवीमि समुद्रमभितः पिन्वमानम् । उपपदविभक्तिः द्वितीया । समुद्रस्योदकस्येतश्चेतश्च सिञ्चतः त्वं महान् वर्द्धमानः आ च पुष्करे । आसीद च पुष्करे उदके । स हि तस्य योनिः आकार आकृष्य व्याख्यातश्चकारो भिन्नक्रमः विमार्ष्टि एतच्चतुर्थेन पादेन दिवो मात्रया द्युलोकस्य परिमाणेन वरिम्णा ऊरुत्वेन च प्रथस्व वर्धस्व ॥ २९ ॥

उभे कृष्णाजिनपुष्करपर्णे अभिमृशति । शर्म्म च अनुष्टुब्भ्याम् । शर्म्म च स्थः यौ युवां शरणं च भवथः सम्महने च अच्छिद्रे सकले बहुले महाप्रमाणे च उभे अपि ते युवां ब्रवीमि व्यचस्वती

अवकाशवती भूत्वा संवसाथाम् । आच्छाद्य च भृतं विभृतमग्निं पुरीष्यं पशव्यम् ॥ ३० ॥

संवसाथाम् । आच्छादयतमग्निं पिण्डरूपं स्वर्विदा यज्ञसूर्यदेवाहर्वचनः स्वःशब्दः स्ववेंत्तीति स्वर्धितु स्वर्विदा रूपेण यद्वा द्विवचनस्थान आकारः । स्वर्विदीभूत्वा समीची सम्यगञ्चने संगते एकचित्ते भूत्वा उरसा आत्मना च । किञ्च अग्निपिण्डमन्तर्मध्यतः भरिष्यन्ती धारयमाणे ज्योतिष्मन्तमजस्रमनुपक्षीणं कुरुतमिति शेषः । इदिति पादपूरणः ॥ ३१ ॥

पिण्डमभिमृशति । पुरीष्योऽसि पशव्यस्त्वमसि । विश्वभराः । सर्वस्य धारकः पोषको वा अथर्वा प्राणः त्वां प्रथमः आद्यः निरमन्थत् । हे अग्ने । पिण्डं हरति दक्षिणेतराभ्यां पाणिभ्यां परिगृह्यात्येनं पिण्डम् षड्भिराग्नेयीभिस्तत्र तिस्रो गायत्र्यो द्वे त्रिष्टुभौ एका बृहती । त्वामग्ने हे अग्ने त्वां पुष्करादुदकात् । अधि सकाशात् । अथर्वा अतनवान् प्राणो निरमन्थत् मथितवान् । आपो वै पुष्करं प्राणोऽथर्वेति श्रुतिः । मूर्ध्नो विश्वस्य वाघतः । वाघत इति ऋत्विङ्नामसु पठितम् । वाघतस्तु मूर्ध्नः शिरस्तः अरण्योः जनयन्ति । सर्वकर्मणोऽङ्गभूतम् ॥ ३२ ॥

तमु त्वा अथाप्युकार एतस्मिन्नेवार्थे उत्तरेणेत्युकारः तमेव त्वा दध्यङ्नामा ऋषिर्म्मन्त्राणां द्रष्टा पुत्र ईधे अथर्वणः व्यवहितोऽत्र सम्बन्धः । अथर्वणः पुत्र ईधे इन्धी दीप्तौ । आदीपयति कथं भूतं त्वाम् । आदीपयति । वृत्रहणं पाप्मनो हन्तारं पुरन्दरम् असुरपुराणां दारयितारम् ॥ वाग्वै दध्यङ्ङाथर्वाण इति श्रुतेः ॥३३॥

तमु त्वा । तमेव त्वा । पाथ्यो वृषा । मनो वै पाथ्यो वृषेतिश्रुतिः मनसा हि मुक्तेः पन्था उपलभ्यते । तदुक्तम् । मनसैवानुद्रष्टव्यमिति श्रुतिः । मनसाभिलष्य स्त्रियां रेतः सिञ्चतीति वृषा मनः । समीधे सन्दीपयति दस्युहन्तमं शत्रुहन्तृतमं धनस्य जेता संग्रामे संग्रामे ॥ ३४ ॥

सीद होतः । उपविश हे होतः । अग्ने स्व उ लोके । उकारो विनिग्रहार्थीयः स्वकीय एव लोके त्वं कृष्णाजिने चिकित्वान् चेतनवान् परिदृष्टकारी स्वमधिकारं जानानः । किञ्च सादया यज्ञं स्थापय च । किं यज्ञं त्वं सुकृतस्य साधुकृतस्य कर्म्मणः

योनौ स्थाने कृष्णाजिने । कृष्णाजिनं वै सुकृतस्य योनिरि-ति श्रुतिः । यज्ञे हि तन्यमाने अवघातः पेषणं सोमनिधानं कृष्णाजिन एव भवतीत्येतदभिप्रायमेतदुच्यते । यश्च त्वं देवावीर्देवाना-मवनशीलस्तर्पणशीलः देवान् हविषा यज्ञासि देवान् हविषा य-जसि त्वं तं त्वां पुनः प्रार्थयामि हे अग्ने बृहत् महत् यजमाने व-य आयुः अन्नं वा धाः धेहि ॥ ३५ ॥

नि होता । नीत्ययमुपसर्गः असदित्यनेनाख्यातेन सम्बध्यते न्यसदत् निषण्ण उपविष्टः । होता ऽग्निः होतृषदने । होता यस्मिन्सी-दति तद्धोतृषदनम् । विदानः जानानः स्वमाधिकारं त्वेषः । दीप्ति-युक्तः दीदिवान् देदीप्यमानः असदत् । सुदक्षः । साधु क्षिप्रकारी अदब्धव्रतप्रमतिः । अनुपहतमनुपहिंसितं व्रतं कर्म्म यस्य प्रकृष्टा च मतिर्यस्य स एवमुच्यते । वशिष्ठः वस्तृतमः । सहस्रम्भरः । स-हस्रं बिभर्त्ति सर्वहितः शुचिजिह्वः शुचिर्जिह्वा यस्य स शुचिजि-ह्वः । योऽयं नानादेवत्यानि हवींषि अभ्यवहरति न चोच्छिष्टत-या दूषयति । स शुचिजिह्व इति शक्यते वदितुं अग्निरिति । वि-स्मित एवमाचष्टे ॥ ३६ ॥

सं सीदस्व हे अग्ने सङ्गत्य सीदस्व यतस्त्वं महानसि । शो-चस्व दीप्यस्व यतस्त्वं देववीतमः आतिशयेन देवानां तर्पयिता । विसृज च विमुञ्च च धूममरुषम् अरोचनं मियेध्य यज्ञिय । मेध्य-इति प्राप्ते छान्दसो विप्रकर्षः । हे प्रशस्त लक्षण दर्शत दर्शनीय-म । आहुतिपरिणामभूतम् इतो वा अपमूर्ध्वꣳरेतः सिञ्चति धूमं सामुत्र वृष्टिर्भवतीति श्रुतिः ॥ ३७ ॥

अवटे अप आसिञ्चति । अपो देवीः अब्देवत्या बृहती विधूम-मग्ने अरुषं मियेध्येत्यानन्तर्यादग्निरुच्यते । द्यौर्वा अपः देवीरुपसृज-निक्षिप वृष्टिरूपाः मधुमतीः रसवतीः अरोगदातृकाः अयक्ष्माय प्र-जाभ्यः । यक्ष्मा व्याधिः भावप्रत्ययलोपः अयक्ष्मत्वार्थं प्रजानामि-ति विभक्तिव्यत्ययः । तासां भूमिगतानाम् । आस्थानात् संस्था-नात् संस्थानादुज्झितामुद्गच्छन्तु । ओषधयः सुपिप्पलाः सुपि-प्पलाः साधुफलाः पिप्पलं फलमुच्यते ॥ ३८ ॥

वायुना संदधाति । सं ते वायुः । त्रिष्टुप् । अर्द्धर्चः पार्थिवोऽ-र्द्धर्चो वायुदेवत्यः संदधातु तव मातरिश्वा वायुः हे पृथिवि उ-

सानायाः सत्याः यदेतद् हृदयमवटरूपेण विकस्तं विकस्तं विकाशितं वायुरुच्यते। यो देवानां चरासि प्राणथेन यश्च त्वं देवानां चरासि प्राणथेन प्राणत्वेन थकारो भावप्रत्ययार्थः। हे देव तस्मै प्रजापतये तुभ्यमियं पृथिवी वषडस्तु तुभ्यं वषट्कृता भवतु नोहैतावत्यन्याहुतिरस्ति यथैवेति श्रुतिः ॥ ३९ ॥

आस्तीर्णयोरन्ताननुगृह्णाति। सुजातो ज्योतिषा। अनुष्टुप्। आग्नेयी अयमग्निः सुजातः सुजन्मा ज्योतिषा सह संयुक्तः शर्म्म शरणं वरूथं वरणीयं गृहमासदत्सीदति स्वः स्वर्गाख्यं योक्त्रेणोपनह्यति। वासो अग्ने विभावसो विभूतधन वासो विश्वरूपं विचित्रं संव्ययस्व व्येञ् संवरणे। परिधत्स्व ॥ ४० ॥

अथैनमादायोत्तिष्ठति। उदु तिष्ठ। आग्नेयी बृहती उत्तिष्ठ। उकारः पादपूरणः। हे स्वध्वर सुयज्ञिय तत उत्थाय अवपालय नः अस्मान् देव्या धिया बुध्या। किञ्च दृशे च दर्शनाय चास्माकं भासा बृहता सुशुक्वनिः साधु शुचा सन्दीप्तः। आयाह्यागच्छ। हे अग्ने सुशस्तिभिः साधुशिष्टैरश्वैः ॥ ४१ ॥

अथैनमत ऊर्ध्वं प्राञ्चं गृह्णाति। ऊर्ध्व ऊषु णः। बृहती आग्नेयी। ऊर्ध्वस्तिष्ठ ऊसू पदपूरणे। न ऊतये अस्माकमवनाय कथमूर्ध्वस्तिष्ठ। देवो न सविता। नकार उपमार्थीयः देव इव सविता ऊर्ध्व आस्थितो वाजस्याश्वस्य सनिता सम्भक्ता भविष्यसीति शेषः। यदञ्जिभिर्व्यञ्जकैर्द्रव्याणां रश्मिभिर्वाघद्भिर्हविषां वोढृभिः सहितं त्वां विह्वयामहे विविधमाह्वयामस्तस्मादूर्ध्वस्तिष्ठेति सम्बन्धः ॥ ४२ ॥

अश्वमभिमन्त्रयते स जातो गर्भः। त्रिष्टुप् अग्नीकृत्याश्वं स्तौति। अध्याहारव्यवहितपदप्रायो मन्त्रः यस्त्वं रोदस्योर्द्यावापृथिव्योर्गर्भो जातोऽसि यश्च त्वं हे अग्ने चारुः शोभनः विभृतः विहृतः हृग्रहोर्भश्छन्दसि। हकारस्य भकारः। ओषधीषु पुरोडाशादिलक्षणादिदातव्यविषयासु भवसि। यश्च त्वं चित्रो नानारूपः शिशुः शंसनीयः परि परेण तमांसि अक्तून् रात्रीः अतिरोचसे स त्वं मातृभ्यः अधि ओषधीवनस्पतिभ्यः सकाशात् कनिक्रदत् अत्यर्थं शब्दं कुर्वन् गाः प्रयाहि ॥ ४३ ॥

रासभमभिमन्त्रयाति। स्थिरो भव। उष्णिगनुष्टुब् वा। स्थिरो निश्चलो भव। वीड्वङ्गश्च दृढाङ्गश्च भव। आशुः शीघ्रो भव वा-

जी वेजनवान् भव हे अर्वन् पदार्थं पदार्थं प्रति यातीत्यर्वा । पृथुः पृथुश्च भव । सुषदः स्वास्थेयश्च भव । यतस्त्वमग्नेः पुरीषवाहणः । पुरीषं पशव्यं यवसं वहतीति पुरीषवाहणो रासभः ॥ ४४ ॥

अजमभिमन्त्रयते । शिवो भव अनुष्टुप् बृहती वा हे अज शिवः शान्तो भव प्रजाभ्यो मानुषीभ्यो ऽर्थाय हे अङ्गिरः । अङ्गिरा वा अग्निराग्नेयोऽज इति श्रुतिः । मां च त्वं द्यावापृथिवी अभिशोचीः अभिसन्तापयेः मा चान्तरिक्षं मा च वनस्पतीन् ॥ ४५ ॥

एषां पशूनामुपरिष्टात्प्रतिगृह्णाति । प्रैतु वाजी । अवसाना महापङ्क्तिः । अर्द्धर्चावश्वदेवत्यौ । प्रकर्षेणैतु आगच्छतु । वाजी अश्वः कनिक्रदन् अत्यर्थं ह्रेषितशब्दान् कुर्वन् अयं च रासभोऽश्वो यवसवाहनार्थं प्रकर्षेणैवागच्छतु नानदत् । सोपहासमुच्यते । गर्दभरटितेन सर्वा दिशो नादयन् । रासभः पत्वा पतनशीलः तदश्वस्य यजुषि रासभं निराह तद्रासभे शुचं दधातीति श्रुतिः । भरन्नग्निं पुरीष्यम् । अयं चाश्वो भरन् धारयन् अग्निं पुरीष्यं पशव्यं मा पादि मा विनश्यतु आयुषः पुरा आयुः शब्देन श्रुत्यात्र कर्माभिहितं यज्ञसंयोगेन ह्यश्वादीनां स्तुतिः आयुषः पुरा आसमाप्तेः कर्मणः रासभ उच्यते वृषा सेक्ता अग्निं वृषणं सेक्तारम् । अहुतिपरिणाममभिप्रेत्य भरन् धारयन् अपां गर्भमपां मध्येऽवस्थानात् गर्भ इत्युच्यते समुद्रियम् त्रयो ह वै समुद्राः । अग्निर्यजुषां महाव्रतम् साम्नामहदुक्थमृचामित्येतदभिप्रायं तत्र भवः समुद्रियः । रासभादाहरति । अग्न आयाहि एकपदाग्नेयी गायत्री । हे अग्ने आगच्छ वीतये हविरुपभोक्तुम् ॥ ४६ ॥

छागस्योपरि धारयन् जपति । ऋतं सत्यम् । ऋतम् अग्निः सत्यम् आदित्यः । यदि वादित्य ऋतमग्निः सत्यम् । उभयरूपमभ्याहरामीति शेषः । अनद्धा पुरुषमीक्षते । अग्निं पुरीष्यं व्याख्यातम् । उपावहरति । ओषधयः प्रति । द्वाभ्यां त्रिष्टुबनुष्टुब्भ्याम् । ओषधिदेवत्याभ्यां द्वितीयोऽर्द्धर्च आग्नेयः । हे ओषधयः प्रतिमोदध्वम् । प्रतिहर्षयत प्रत्युत्थानादिभिः अग्निमेतं शिवं शान्तमायन्तमभ्यत्र युष्माः । युष्मानभ्यागच्छन्तम् । अत्रैवस्थितान् एवमर्द्धेनोषधीरुक्त्वाऽथेदानीमग्निमाह त्वमपि व्यस्यन् विश्वाः सर्वा अनिरा इर इत्यन्ननाम । न भवत्यन्नं याभिः सतीभिः । अवृष्टिरनि-

हे आपः तस्य च रसस्याधस्तनमन्त्रपठितस्य वः युष्मत्सम्बन्धिनः अलं पर्याप्तं गमाम गच्छेम वयम् । पर्याप्तिर्नाम रसविषये वैतृष्ण्यं सदा तृप्तिर्वा । यस्य क्षयाय जिन्वथ । क्षयो निवास इत्याद्युदात्तः षष्ठ्यर्थे चतुर्थी यस्येति सामानाधिकरण्यात् । यस्य चाहुतिपरिणामभूतस्य क्षयस्य निवासस्य एकदेशेन जिन्वथ जिन्वतिः प्रीतिकर्मा तर्प्पयथ । पश्चाहुतिपरिणामक्रमेणेदं ब्रह्मादिस्तम्बपर्यन्तं जगत् । तत्र च हे आपः जनयथा'च नः । अस्मान् भोक्तृत्वेन जनयथा आजन्मदेवत्वमाशास्यते ॥ ५२ ॥

अजलोमाभिः संसृजति । मित्रः संसृज्य । मैत्री उपरिष्टाद्बृहती । अध्वर्युराह मित्र आदित्यः संसृज्य एकीकृत्य पृथिवीम् । द्युभूलोकान्तरिक्षवचनः पृथिवीशब्द इह तु द्युलोकवचनो गृह्यते । पृथिवीं द्युलोकं भूमिं च ज्योतिषा अजलोमभिः सह संसृज्य मह्यं प्रयच्छत्विति शेषः । अजस्याग्नेयत्वात्तल्लोमानि ज्योतिःशब्देन भणितुं शक्यन्ते । अहमपि गृहीत्वा सुजातं कल्याणजातं त्वां जातवेदसं सञ्जातमग्निमजलोमाख्यं संसृजाम्ययक्ष्माय अव्याधितायै प्रजाभ्यः अजानामिति संनतिः ॥ ५३ ॥

शर्करायोरसाश्मचूर्णैः संसृज्य एकीकृत्य शर्करायोरसाश्मचूर्णैः पृथिवीं पार्थिवं पिण्डं बृहत् महत् ज्योतिरग्निलक्षणम् । उषायां समाधिरे सन्दीपितवन्तः । उषास्थमग्निं संवत्सरं धारितवन्तः । तेषामिदानीं फलमाह तेषां रुद्राणां भानुः दीप्तिः अजस्र इत् । जसु उपक्षये । इच्छब्द एवार्थे । अनुपक्षीण एव शुक्रः शुक्लः देवेषु । निर्द्धारणे सप्तमी । रोचते देदीप्यते ॥ ५४ ॥

तिसृभिरनुष्टुब्भिः सिनीवाल्यादितिदेवत्याभिः मृदे संयौति । संसृष्टां संसेवितां वसुभिः रुद्रैश्च धीरैर्बुद्धिमद्भिः धीशब्दो बुद्धिवचनः रो मत्वर्थीयः । कर्मणा या संपद्यते सा कर्मण्या तां कर्मण्यां मृदं मृत्तिकां हस्ताभ्यां मृद्वीकृत्वा सिनीवाली कृणोतु करोतु ॥५५॥

या सिनीवाली सुकपर्दा कपर्दः केशसंयमनप्रकारः साधु केशसंयमना वेणिर्वाकपर्दः सुकुरीरा कुरीरो मुकुटः शोभनमुकुटा स्वौपशा शोभनं तूपशेते या सा स्वौपशा विदग्धा शयने करचरणकण्ठकूजितादिभिर्विलासैः । सा तुभ्यं हे अदिते महि महति आ उखां दधातु स्थापयतु हस्तयोः ॥ ५६ ॥

उखां कृणोतु करोतु शक्त्या सामर्थ्येन । बाहुभ्यामदितिर्धिया। बुद्ध्या च कृता सर्वा माता पुत्रं यथोपस्थे उत्सङ्गे । अग्निं बिभर्त्तु वा नयतु गर्भे आ । आकार आत्मनो योग्यां क्रियामाक्षिपति । आधारय गर्भशब्द उखाभ्यन्तरवचनः । मृत्पिण्डमादत्ते । मखस्य यज्ञस्य शिरसि आहवनीयो वै यज्ञस्य शिरः तदुच्चारेणेहापि प्रवर्त्तते लक्षणया शिरः शब्दः ॥ ५७ ॥

तं प्रथयति । वसवस्त्वा । वसवस्त्वां कृण्वन्तु कुर्वन्तु । हे उखे गायत्रेण छन्दसाङ्गिरस्वत् । यथाङ्गिरसा कृता यतस्त्वं कृता सती ध्रुवा स्थिरासि पृथिवी चासि अतस्त्वां ब्रवीमि धारय स्थापय मयि यजमानायेति चतुर्थ्यन्तं पदमुपरिष्टाच्छ्रूयते तदिह सप्तम्यन्तं कृत्वा योज्यते सामानाधिकरण्यात् । यजमाने प्रजां धनस्य पुष्टिं गोपतित्वं च शोभनं वीर्यं वीरकर्म्म सजातान् समानजातान् समानजातान् भ्रातॄन् धारयेति सर्वत्राभिसम्बध्यते । उत्तरेषु मन्त्रेषु विशेषः । रुद्रास्त्वा अन्तरिक्षमसि आदित्यास्त्वा द्यौरसि विश्वे त्वा देवा वैश्वानराः विश्वैर्नरैर्नीयन्ते ते नयन्तीति वा वैश्वानराः । दिशोऽसीति ॥ ५८ ॥

वितृतीये उत्तरे वर्तिं सर्वतः करोति । अदित्यै रास्नासीति व्याख्यातम् । बिलं गृह्णाति अदितिरदीना देवमाता ते तव बिलस्य मध्यं गृभ्णातु गृह्णातु । निदधाति । उष्णिगनुष्टुब्वा । आदित्या या उक्तगुणा अदितिः सा कृत्वाय क्त्वो यक् छान्दसः । उपजनः कृत्वा मही महतीम् । उखां मृन्मयीं योनिं स्थानम् । अग्नये अग्न्यर्थं पुत्रेभ्यः प्रायच्छत् प्रादात् अपयानिति श्रपयन्तु इतिकरणः प्रयोजनख्यापनार्थः ॥ ५९ ॥

सप्तभिरश्वकैरुखां धूपयति सप्तभिर्यजुर्भिः प्रतिमन्त्रं वसवस्त्वा । ऋज्वर्थानि यजूंषि ॥ ६० ॥

अभ्रया श्वभ्रं खनति अदितिष्ट्वाम् । अदितिस्त्वां देवी विश्वदेव्यावती विश्वैर्देवैः सहिता पृथिव्याः सहस्थाने आङ्गिरस्वत् अङ्गिरा इव खनतु हे अवट कूप उखामवदधाति । देवानां त्वा । इत उतरं पञ्चसु यजुःषु श्रुत्युक्तान्यभिधेयानि व्याख्यायन्ते । ओषधयो वै देवानां पत्न्यः दधतु स्थापयन्तु उखे । अग्निना दीपयति । धिषणास्त्वाम् । धिषणा वाचः इन्धी दीप्तौ । अभीन्धतां सन्दीप-

यन्तु । श्रपयति । वरूत्रीष्ट्वा अहोरात्राणि वरूत्रयः तानि त्वां श्रपयन्तु । पचति द्वाभ्यां ग्नास्त्वा । छन्दांसि वै ग्नाः । छन्दोभिर्हि स्वर्गं लोकं गच्छति । जनयस्त्वा । नक्षत्राणि वै जनयः । अच्छिन्नपत्राः अनवच्छिन्नपतनाः सन्ततयायिन्यः ॥ ६१ ॥

आचरति । मित्रस्य चर्षणीधृतः । मैत्री गायत्री मित्रस्यादित्यस्य चर्षणीधृतः चर्षणयो मनुष्याः तेषां मनुष्याणां धारणे अधिकृतस्य अवो देवस्य अवः रक्षणं सानसि सनातनं पुरातनं पुराणं द्युम्नं च यशः अन्नं वा । चित्रश्रवस्तमम् । अतिशयेन चाकर्णीयं सुश्रवण इत्येतस्माद्धातोः श्रवणीयं च वयं स्तुम इति शेषः । याचेमहीति वा । यद्वा यस्य मित्रस्य चर्षणीधृतः पालनं देवस्य पुनाति पुराणः अतिमन्‍ चित्रश्रवस्तमं स यजमानस्याभिप्रेतमर्थं साधयतु ॥ ६२ ॥

उद्वपति । देव स्त्वा । बृहती उखा देवः त्वा त्वां भवतीमुद्वपतु- उद्वपनेन प्रकाशीकरोतु । सुपाणिः सुहस्तः स्वङ्गुरिः शोभनाङ्गुलिः लकारस्य रेफश्छान्दसः । सुबाहुः सुभुजः उत शक्त्या अपि शक्त्या अपि बुद्ध्येति उतशब्दः समुच्चयार्थः । उद्वपतीत्यनुवर्त्तते त्वं च सवित्रा उप्ता सती अव्यथमाना अचलन्ती पृथिव्याम् । आस्थिता आशा दिशो विदिशो दिशश्च । आपृण आपूरय आहुतिरसेन ॥६३॥

उद्यच्छति । उत्थाय बृहती । पूर्वोऽर्द्धर्च उख्य उत्तरो मैत्र एतस्माद्यजनस्थानादुत्थाय बृहती महती भव तत उदुत्तिष्ठ । प्रवर्तस्व स्वकीये कर्म्मणि यतस्त्वं ध्रुवा स्थिरासि स्वभावतः । परिगृह्य पात्रेकरोति मित्रैतां त इति ॥ हे मित्र एतां ते तव उषां परिददामि प्रयच्छामि किमर्थम् । अभित्यै अभेदनाय एषा च उषा त्वया गृहीता सती मा भेदि मा भिद्यताम् ॥ ६४ ॥

आच्छृणत्ति । वसवस्त्वा । निगदव्याख्यातम् ॥ ६५ ॥

औद्ग्रभणानि जुहोति । आकूतिमग्निम् । आकुञ्चनम् आकूतिः बलं वाकूतिः आत्मनो धर्म्मो मनसः प्रेरणहेतुः स एवाग्निः प्रयुङ्क्ते कर्म्मणीति प्रयुक् स्वाहा सुहुतं करोमीति व्याख्यातम् । नमः स्वस्तिस्वाहास्वधेत्यादिना उपपदविभक्तिश्चतुर्थी आकूत्यै अग्नये प्रयुजे स्वाहा । एवमुपरितना मन्त्रा व्याख्येयाः । मनो मेधां ततो मनसो मेधाप्रवृत्तिर्मेधायाश्च चित्तं विज्ञानं ततश्चित्तस्य चिन्तनस्य संस्कारस्य वा विज्ञातस्य च प्रवृत्तिः वाचो विधृतिः ततो वाचो वि

धारयिताग्निः प्रकाशको भवति । प्रजापतये मनवे मन्वन्तरकारिणे अग्नये वैश्वानराय विश्वानरपुत्राय ॥ ६६ ॥

विश्वो देवस्येति व्याख्यातम् ॥ ६७ ॥

उखामाहवनीयेऽधिश्रयति । मा सु भित्था इति । गायत्रीत्रिष्टुब्भ्याम् उखादेवत्याभ्याम । अग्निश्चेदमिति पाद अग्नेयश्च हे उखे मा त्वं भित्थाः भिदिर् विदारणे । मा भिद्यस्व सुकारोऽनर्थकः मा च रिषः । रिषतिर्हिंसाकर्म्मा । रिष तुष हिंसायाम् । मा च विनश्यस्व हे अम्ब अम्बेति योषाया आमन्त्रणम् । धृष्णुं प्रगल्भं वीरकर्म कुरु अग्निधारणलक्षणम् । किञ्च इत उत्तरमग्निश्च त्वं च इदं कर्मासमाप्तेः करिष्यथः ॥ ६८ ॥

एवं दृंहस्व हे देवि उखे दृढीकुर्वात्मानं देवि कस्मात्त्वमिदमुच्यसे यत् आसुरी माया असुः प्राणो रेफ उपजनः प्राणसम्बन्धिनी माया प्रज्ञा स्वधया अन्नेन निमित्तभूतेन कृतासि । किञ्च जुष्टं प्रियं देवेभ्यो हुतम् इदं हव्यं हविः अस्तु त्वत्प्रसादात् या उखाख्ये अग्नौ आहुतयो हूयन्ते ता उच्यन्ते त्वमपि अरिष्टा अनवखण्डिता उदिहि उद्गच्छ यज्ञेऽस्मिन्वर्त्तमाने ॥ ६९ ॥

उख्येऽग्नौ त्रयोदश समिधः प्रादेशमात्रीः आदधाति । त्रयोदशभिराग्नेयीभिर्ऋग्भिर्द्वे गायत्र्यौ । द्रन्नः द्रुर्वृक्षः अन्नम् । अदनीयस्य स द्रन्नः द्रुशब्दो द्रुमपर्यायः सर्पिरासुतिः सर्पिर्घृतम् । आसवस्थानीयं यस्य स सर्पिरासुतिः प्रत्नः पुराणः होता देवानाम् । आह्वाता वरेण्यो वरणीयः सहसस्पुत्रो बलस्य पुत्रः यतो मथ्यमानो जायते तस्मादेवम् । उच्यते अद्भुतः अनन्यसमः य इत्थम्भूतोऽग्निः स कार्मुकीं समिधं भक्षयत्विति शेषः । न ह्यत्राख्यातं विद्यते न वाख्यातेन विना वाक्यपरिसमाप्तिः ॥ ७० ॥

वैकङ्कतीमादधाति परस्या अधि । संवत् इति संग्राममनामसु पठितम् । सम्पूर्वस्य वनतेर्गत्यर्थस्य सङ्गच्छते ह्यत्र योधाः परस्याः सम्बन्धिन्याः संवतः अधिसकाशात् अवरान् अस्मदीयान् अभ्यातर अभ्यागच्छ ततो यत्र जनपदे अहमस्मि तान् अवपालय तर्पय वा ॥ ७१ ॥

औदुम्बरीमादधाति । परमस्यास्तिस्रोऽनुष्टुभः । परावत इति

दूरनामसु पठितम् । परमस्याः परावतः परमदूरं तस्मात् हे रोहिदश्व रोहितोऽग्नेर्हरित आदित्यस्येति निघण्टुः । हे अग्ने इहागहि आगच्छ यतस्त्वं पुरीष्यः पशव्योऽसि । पुरुप्रियश्च बहुजनप्रियश्च औदुम्बरे च बहून्येवाशनानि तयैतदूर्जा सर्वान् वनस्पतीन् प्रतिपच्यन्त इत्यादिश्रुतेः । आगत्य च हे अग्ने त्वं तर विनाशय मृधः संग्रामान् ॥ ७२ ॥

अपरशुवृक्णामादधाति यदग्ने । यच्छब्दः दध्मसीत्यनेन सम्बध्यते । यदा दध्मसि यदा दध्मः । हे अग्ने ते तव दारूणि कानि कानिचित् । चिच्छब्दो ऽनवक्लृप्तौ । यानि कानिचिदित्यभिप्रायः । सर्वं तदस्तु ते तव घृतम् । तच्च जुषस्व सेवस्व हे यविष्ठ्य स्वार्थे यप्रत्ययः । युवतम ॥ ७३ ॥

अधःशयामादधाति यदत्ति यद्भक्षयति काष्ठम् । उपजिह्विका उपदीपिका यच्च वम्रः वल्मीकः अतिसर्पति । अतीत्यानुवर्तते सर्वं तदिति व्याख्यातम् ॥ ७४ ॥

पालाश्य उत्तरा भवन्ति । अहरहस्त्रिष्टुभौ अस्मिन्मन्त्रे द्वितीयचतुर्थयोः पादयोर्विरोधः अश्वायेव तिष्ठते वा समस्मै अत्र तिष्ठते अस्मै द्वे पदे परोक्षमग्निं ब्रूतः । तथाग्ने माते प्रतिवेशारिषामेति । अग्ने ते इति प्रत्यक्षमग्निं ब्रूतः । नच वाक्यभेदेनार्थः सम्भवति अतो द्वयोः पादयोः लाक्षणिकया वृत्त्या व्याख्यायते । अहरहः सन्ततम् । अप्रयावम् अप्रमत्तम् । भरन्तः आहरन्तः अशनानि कथमिव तदुपमया दर्शयति । अश्वायेवेति । अश्वस्येव स्थापयन्तो वयं घासं यवसम् । अस्मै तव । किञ्च रायस्पोषेण दक्षिणालक्षणेन धनस्य पोषेण संमदन्त उत्साहयन्त इषा अन्नेन संमदन्तस्त्वां हे अग्ने मा रिषाम मा विनश्येम ते तव प्रतिवेशाः प्रातिवेशिकाः त्वदाश्रया इत्यर्थः । अध्याहारेण वा व्याख्यायते अहरहः अप्रमत्ता आहरन्तोऽशनानि यच्च अश्वायेव दत्तं घासं भक्षितमादितं चावतिष्ठते भस्म अस्मै अग्नये तदुद्वपन्तः भस्मोद्वपनं च पवितमत एवमपि व्याख्यायते रायस्पोषेण समिषा मदन्त इत्यादि तुल्यम् ॥ ७५ ॥

नाभा पृथिव्या इति । नाभौ पृथिव्याः एषा ह नाभिः पृथिव्यै यत्रैतत्समिध्यते । समिधाने सन्दीप्यमाने आहवनीयाख्ये अग्नौ रायस्पोषाय धनस्य पोषाय बृहते महते हवामहे आह्वयामः । अग्ने-

र्थाधिष्ठात्री देवता तदभिप्रायमेतत् । कथम्भूतमग्निमित्यत आह इरम्मदम् । इरयान्नेन माद्यति तृप्यति बृहदुक्थं महच्छस्त्रं यजत्र यजनीयं जेतारं पृतनासु संग्रामेषु सासहिं सोढारमभिभवितारं सन्निधाने अग्नाविति आहवनीयविषयोऽग्निशब्दः । नेतारमग्निमधिष्ठात्र्यग्निविषयः ॥ ७६ ॥

याः सेना । अनुष्टुभः । याऽन्नदीयाः सा तु उपरिष्टाद् बृहती । याः सेना अभीत्वरी इण् गतावित्यस्माद्धातोः इण्नशजिसर्त्तिभ्य इत्यादिना करप् प्रत्ययः । ह्रस्वस्य पिति कृति तुगिति तुगागमे टिड्ढाणञिति ङीपि कृते इत्वरी इति सिद्धं भवति इणः । अभियायिन्यः । आव्याधिनीः आविध्यन्ति याः । उगणा उत । उतशब्दोऽप्यर्थे अपि च उद्‌गूर्णगणाः पृषोदरादिपाठान्मध्यपदलोपः । ये च स्तेनाः ये चौरास्तस्कराः । तस्करस्तत्करोति यत्पापकमिति नैरुक्ताः । तान् सर्वान्ते तव हे अग्ने अपिदधामि प्रक्षिपामि आस्ये मुखे भक्षणाय ॥ ७७ ॥

दंष्ट्राभ्याम् । दशनशीलाभ्यां दृढाभ्यां राक्षसिके इति ये उच्येते ताभ्यां मलिम्लून् मलिम्लूचः उकाः गूढाः स्तेनतया म्लोचन्ति अदृश्या भवन्ति जने कक्षे च ये जम्भ्यै तस्करान् जम्भावृत्तिमाश्रिता जम्भ्याः ताभिः तस्करान् उत अपि च हनुभ्यां च हननशीलाभ्यां स्तेनान् ह भगवः हे भगवन् महदैश्वर्ययुक्त तान् खाद यथा सुखादिता भवन्ति ॥ ७८ ॥

ये जनेषु मलिम्लुचः जनेषु स्तेनासः स्तेना एव स्तेनासः आज्जसेरसुक् । तस्करा वने वनाश्रिताः ये कक्षेषु नदीपर्वतकक्षेषु अघायवः छन्दसि परेच्छायामिति वक्तव्यम् इत्यघशब्दात् क्यच् । क्याच्छन्दसीति उप्रत्ययः । अघं परस्मै इच्छन्तीत्यघायवः । तान् तव दधामि स्थापयामि जम्भयोर्भक्षणाय ॥ ७९ ॥

यो अस्मभ्यं यो मनुष्यः अस्मभ्यम् । अस्मदर्थम् । अरातीयात् अरातिरिवाचरेत् । अरातिः शत्रुः यश्च नः अस्मान् द्वेषते द्वेष्टि जनः निन्दाच्च निन्दाति योऽस्मान् धिप्साच्च दम्भोतेः सनि अभ्यासलोपः । दम्भितुमिच्छति यः सर्वमेतच्छत्रुजातं भस्मसात् कुरु । भस्मसेति शब्दोऽनुकरणे डाजन्तः । यथा भक्ष्यमाणा भस्मसात् शब्दं कुर्वन्ति । तथा कुर्वित्यर्थः ॥ ८० ॥

पुरोहितस्यादधाति । संशितं मे ब्रह्म । शो तनूकरणे । उपसर्गव्यत्ययः निशितं तीक्ष्णीकृतं मे मम ब्रह्म निशितं च वीर्यं वीरकर्म बलं निशितं च क्षत्रं जिष्णु जयनशीलं यस्याहम् अस्मि पुरोहितः भवामि पुरोहितः ॥ ८१ ॥

उदेषां क्षत्रियस्य । उद्धतिरम् उद्धरिद्धतवानस्मि एषां योद्धृणां बाहू उद्वर्च्चः । उद्धार्द्धितवान् वर्च्चः अथो अपि च बलं क्षिणोमि च विनाशयामि च । ब्रह्मणा पुरोहितसंज्ञेनामित्रान् । उन्नयामि उद्गमयामि स्वान् पुत्रपौत्रानहम् ॥ ८२ ॥

समिधमादधाति । अन्नपते । हे अग्ने अन्नस्य स्वमंशं नः अस्मभ्यं देहि अनमीवस्य अमीवा व्याधिः व्याधिरहितस्य । शुष्मिणः शुष्ममिति बलनाम बलवतः । किञ्च प्र प्रदातारं तारिषः आतिशयार्थ उपसर्गाभ्यासः महता प्रकर्षेणान्नस्य दातारं प्रदातारं प्रतारिषः प्रवर्द्धय । किञ्च ऊर्ज्जमन्नं नः धेहि देहि द्विपदे चतुष्पदे द्विपादुभ्यः चतुष्पादुभ्यश्च ॥ ८३ ॥

इति श्री-उव्वटकृतौ मन्त्रभाष्ये एकादशोऽध्यायः ॥ ११ ॥

---

## अथ द्वादशोऽध्यायः ॥ १२ ॥

---

यजमानः कण्ठे रुक्मं प्रतिमुञ्चति । दृशानो रुक्मः । त्रिष्टुप् । आदित्याध्यासेन रुक्मस्तुतिः । यो दृशानः दृश्यमानः प्रत्यक्षमुपलभ्यमानः । रुक्मो रोचनः । उर्व्या महत्या दीप्त्या व्यद्यौत् विद्योतते यस्य च दुर्मर्षमायुः दुर्मर्षमनवखण्डितमायुर्जीवनं श्रिये रुचानः । यश्च जनेभ्यः जनेभ्यः श्रियं दातुं रोचते सोऽयमग्निरमृतोऽमरणधर्माऽभवत् वयोभिरन्नैः पशुपुरोडाशप्रभृतिर्यदेनं द्यौरजनयद्यश्च एनमग्निं द्यौरजनयत् जनितवती । सुरेताः शोभनरेताः सुरेताः सुरेता ह्येषा यस्याः एष रेतः पततद् द्वितीयममृतत्वकारणमग्नेः ॥ १ ॥

इदं द्वाभ्यां परिगृह्णाति । नक्तोषासा । आग्नेयी त्रिष्टुप् । नक्ता रात्रिः । उषाशब्देनाहरुच्यते रात्र्यहनी समनसा एकमनसा एकमनस्के विरूपे नानारूपे कृष्णा रात्रिः शुक्लमहः । धापयेते पाययेते

सायंप्रातरग्निहोत्रादिभिः कर्मभिः शिशुं बालमिव मातापितरौ । एकमग्निलक्षणं समीची सम्यगञ्चने संश्लिष्टे वा ये इत्थम्भूते ताभ्यां गृह्णामीति शेषः । हरति द्यावाक्षामा । द्यावापृथिव्यौ यो रुक्मः रोचनः दीप्तः अन्तर्विभाति अन्तरा दीप्यते तं हरामीति शेषः। निदधाति । देवा अग्निं धारयन् द्रविणोदाः । यमग्निं देवा द्रविणोदाः धनदातारो धारितवन्तः तमहं धारयामीति शेषः ॥ २ ॥

शिक्यपाशं प्रतिमुञ्चते । विश्वा रूपाणि । जगती सावित्री । यः विश्वानि सर्वाणि रूपाणि प्रतिमुञ्चते प्रतिबध्नाति द्रव्येषु अपहत्य शार्वरं तमः प्रकाशयतीत्यर्थः । कविः क्रान्तदर्शनः । यश्च प्रासावीत् प्रसौति भद्रं भन्दनीयं द्विपदे चतुष्पदे द्विपाद्भ्यश्चतुष्पाद्भ्यश्च । विनाकमख्यत्सविता वरेण्यः । यश्च व्यख्यत् । विख्यापयति प्रकाशयति नाकं द्युलोकं सविता सर्वस्य प्रसविता वरेण्यो वरणीयः । अनुप्रयाणमुषसो विराजति । स सविता उषसः प्रयाणं गमनमनु-पश्चाद्विराजति । दीप्यते उषाः सवितुः पुरोगामिनीति सवितुः स्तुतिः । य इत्थम्भूतः सविता स शिक्यं प्रतिमुञ्चत्विति शेषः ॥ ३ ॥

विकृत्याभिमन्त्रयते । विकृतिश्चतुरवशाना । सुपर्णोऽसीति सुपतनः । त्वमसि गरुत्मान् गरणवान् त्रिवृत् स्तोमस्तव शिरः । गायत्रं चक्षुः । बृहद्रथन्तरे सामनी पक्षौ पञ्चविंशः स्तोमः । आत्मा छन्दांस्येकविंशतिः अङ्गानि यजूंषि नाम साम ते तनूर्वामदेव्यम् । यज्ञा यज्ञियं पुच्छं धिष्ण्या अग्नयः शफाः खुराः यतश्च त्वं सुपर्णोऽसि गरुत्मान् अतो ब्रवीमि त्वां दिवं गच्छ स्वर्गलोकं पत ॥ ४ ॥

विष्णुक्रमान् क्रमते । विष्णोः क्रमोऽसि विष्णोर्यज्ञस्याग्नेः यतः क्रमोऽसि सपत्नहा च शत्रुघातकश्च अतो गायत्रं छन्दः आरोह पृथिवीमनु विक्रमस्व । अभिमातिहा अभिमातिरपि केनचिद् गुणविशेषेण शत्रुरेवोच्यते ऋज्वन्यत् । अरातीयतो हन्ता । अरातिरिवाचरति अरातीयति अरातिः शत्रुः तस्य अरातीयतः शत्रूयतो हन्ता अधस्तनेन व्याख्यातम् ॥ ५ ॥

ऊर्ध्वबाहुः प्राग्दक्षिणात् प्रतिगृह्णात्यग्निम् । अक्रन्ददग्निः त्रिष्टुप् । अस्यामृच्यग्निपर्जन्यौ कथ्येते । अक्रन्दत् क्रन्दते । विस्फूर्जति अग्निः स्तनयन्निव द्यौः द्योशब्देनात्र पर्जन्य उक्तः । यथास्तनयन्पर्जन्यः शब्दं करोति एवं तावदग्निः पर्जन्यवच्छब्दं करोत्येवमन्यान्यपि

पार्जन्याग्निरूपाण्यत्रैः प्रदर्श्यन्ते । क्षामा रेरिहत् । क्षामाशब्देन पृथिव्युच्यते । द्वितीयार्थे च प्रथमा । लिह आस्वादने । यथा पर्जन्य उदकभावमुपगच्छन्नत्यर्थं पृथिवीं लेढि आस्वादयति । वीरुधः समञ्जन्नोषधीः समञ्जन् व्याप्नुवन्नेवमयमग्निः पृथिवीमत्यर्थमास्वादयति । स्वकीयज्वालासमूहेनौषधीः समञ्जन् व्याप्नुवन् अन्वदप्युच्यते । सद्यो जज्ञानो विहीमिद्धो अख्यत् । यथा पर्जन्यः सद्य एवाभ्ररूपेण जायमानो व्यख्यत् । विरुपसर्गः ख्यातिना सम्बध्यते एवं तेन विख्यापयतीदं सर्वम् । हि ईम् इद्धो धाराशतसहस्रैः हि ईम् इमौ पादपूरणौ निपातौ । एवमयमग्निः सद्य एव जायमानः इद्धः सन् इदं सर्वं विख्यापयति । अन्यच्च आ रोदसी भानुना भात्यन्तः । यथा पर्जन्यः आभाति भानुना विद्युद्रूपेण रोदसी द्यावापृथिव्योरन्तर्व्यवस्थितः एवमयमग्निराभाति भानुना दीप्त्या द्यावापृथिव्योरन्तर्व्यवस्थितः एवमग्निः पर्जन्यवत् स्तूयते ऋषिणा ॥ ६ ॥

अवहरति अग्नेऽभ्यावर्त्तिन्निति । उपरितनानि धारयति पञ्च आग्नेय्यः इतः प्रभृति अग्नेऽभ्यावर्त्तिन् ऊर्ध्वबृहती । हे अग्ने अभ्यावर्तनशील अभिनिवर्तस्व मां प्रति आयुषा वर्च्चसा अन्नेन प्रजया धनेन सन्या लाभेन मेधया रय्या सुवर्णालङ्कारैः पोषेण धनपुष्ट्या॥७॥

अग्ने अङ्गिरः । महाबृहती । अग्ने अङ्गिरः अङ्गानां रसभूत शतं तव सन्तु आवृत आवर्तनानि शतशब्दोऽसंख्यातविषयः । सहस्रं बहूनि च उपावर्तनानि सन्तु । अथ अध समानार्थौ । अथैवं भूयो भूयः करणेनावर्त्तमानः पोषस्य पोषेण अनवच्छिन्नधनागमेन सह पुनः अस्माकं नष्टमाकृधि आगमय रयिं च धनं पुनरागमय करोतिर्गतिकर्म्मा ॥ ८ ॥

पुनरूर्जा । गायत्र्यौ । पुनः पुनरभ्यासोऽनवच्छेदार्थः । पुनरपि च ऊर्जा दध्याद्युपसेचनेन सह निवर्त्तस्व पुनश्च हे अग्ने इषा अन्नेन सह आयुषा च सह । किञ्च पुनरेव च नः अस्मान्पाहि रक्ष अंहसः पापात् सकाशात् यथा पूर्वं रक्षिताः ॥ ९ ॥

सह रय्या । सह धनेन निवर्तस्व । किञ्च हे अग्ने पिन्वस्व पिन्वतिः सेचनार्थः । तां च रयिं सिञ्च धारोर्द्धारया अनवच्छिन्नधनदानेन निवर्तस्व किञ्च पुनः पुनः आप्यायस्वेत्याभिप्रायः । कथम्भूतया रय्या विश्वप्स्न्या । प्सा भक्षणे सर्वजनोपभोग्यया विश्वत-

स्परि। सर्वतोऽधिगतैरर्थैः पूर्यमाणया रय्या ॥ १० ॥

उपरिनाभि धारयन्नभिमन्त्रयते । आ त्वाहार्षम् । अनुष्टुप् । आहार्षं त्वां यतः द्युलोकात् आहार्षम् । आहृतवान् । हृञ् हरणे इत्यस्मात् त्वं चान्तरभूः अन्तर्नाभ्या उपरि शरीरमध्ये अभूः अतो ब्रवीमि ध्रुवः स्थिरस्तिष्ठ । अविचाचलिः आविचलनशीलः । किं च विशस्त्वा सर्वा वाञ्छन्तु अन्नं तवोपतिष्ठतु । संहितायां दीर्घः । अन्नं वै विडिति श्रुतेः । सर्वं मा त्वत्तो राष्ट्रमिति जनपदसमूहः अधिभ्रशत् अपभ्रश्यतु ॥ ११ ॥

पाशान्विमुञ्चति । उदुत्तमम् । वारुणी त्रिष्टुप् । उदित्ययमुपसर्गः श्रथायेति सम्बध्यते । हे वरुण उत्तमं तावता त्वमुच्छ्रथय । श्लथ शैथिल्ये । श्लथीकृत्योर्ध्वं नयास्मत् अस्मत्तः अवाधमम् । अधमं च पाशमवाचीनं श्लथय । विमध्यमम् । स्थानस्थितमेव विश्लथय मध्यमम् । अथैवं कृते सति वयं हे आदित्य अदितेः पुत्र व्रते तव कर्म्मणि वर्त्तमानाः अनागसः अनपराधाः सन्तः अदितये अदीनतायै स्याम भवेम ॥ १२ ॥

प्राग्दक्षिणा गृह्णाति । अग्ने बृहत् । त्रिष्टुप् । आदित्यात्मनोऽग्नेः स्तुतिः यः अग्ने उषसां बृहत् महान् प्रभावतः ऊर्ध्वं अस्थात् स्थितः । यश्च निर्जगन्वान् तमसः निर्गतो रात्रिलक्षणात्तमसः अहर्लक्षणेन ज्योतिषा सह आ अगात् आगतः सोऽग्निर्भानुना रुशता रोचिष्णुना स्वङ्गः शोभनाङ्गः आजाताप्राः । प्रा पूरणे । आ अप्रा आपूरितवान् जातः सञ्जातरश्मिः । विश्वा सद्मानि । इमे वै लोका विश्वा सद्मानीति श्रुतिः । सर्वाणि सदनानीति प्रत्यक्षवृत्तिता ॥ १३ ॥

अवहरति । हंसः शुचिषदिति । जगती यजुरन्ता बृहदिति यजुः जगत्या जगतीहेमांल्लोकानिति श्रुतिः । तथा बृहदिति निदधाति राजसूये अतिछन्दसामित्युक्तम् । व्याख्यातो मन्त्रार्थः ॥ १४ ॥

उपतिष्ठत । सीद त्वं तिसृभिराग्नेयीभिः । एका त्रिष्टुप् द्वे अनुष्टुभौ सीद त्वमवस्थानं कुरु त्वम् अस्या उषाया मातुः उपस्थे उत्सङ्गे विश्वानि सर्वाणि हे अग्ने वयुनानि विद्वान्प्रज्ञानानि विद्वान् प्रजानन् पदार्थस्य तत्त्ववेदी सन् । किं च उखायाम् । अवस्थानं कुर्वन् । मैनां तपसा मार्चिषाभिशोचीः । मा अभिसन्तापय एनाममुखां तपसा तापेन मा अर्चिषा ज्वालया किञ्च अन्त-

रस्याँ मध्येऽस्यामुखायां व्यवस्थितम् । शुक्रज्योतिः शुक्रकर्मसाधनं ज्योतिर्विभाहि विविधं दीप्यस्व ॥ १५ ॥

अन्तरग्ने व्यवहितपदप्रायोऽयं मन्त्रः । हे अग्ने यस्या उखाया त्वमन्तर्मध्यतः । रुचा दीप्त्या सहितः सदने स्वे स्वकीये स्थाने वर्त्तसे। तस्या एव उखायाः त्व हरसा ज्योतिषा तपन् । तप सन्तापे । हे अग्ने यस्या उखायास्त्वं जातं जातं विन्दतीति जातवेदाः तस्य सम्बोधनं हे जातवेदः जातविज्ञान शिवो भव शान्तो भव ॥ १६ ॥

शिवो भूत्वा । शिवः शान्तो भूत्वा मह्यं हे अग्ने अथो अपि च सीद उपाविश उखायां शिवस्त्वं शिवाः कृत्वा दिशः सर्वाः स्वं योनिं स्थानमिह आसदः आसीद ॥ १७ ॥

वात्सप्रेणोपतिष्ठते । दिवस्परि द्वादशाग्नेय्यस्त्रिष्टुभः । दिवस्परि दिवोऽधि दिवः सकाशात् प्रथमं जज्ञे जातः अग्निः प्राणो वै दिवः प्राणादु वा एष प्रथममजायतेति श्रुतिः । तं जातमभि प्राणिति प्राणो वा अग्निर्जातमेवैनमेतत्सन्तं जनयतीत्येतदभिप्रायम् । अस्मद् द्वितीयं परिजातवेदाः । अस्मद् अस्मत्तः पुरुषविधानात् द्वितीयं जातवेदाः जातः । यदेनमदो द्वितीयं पुरुषविधोऽजनयदिति श्रुतिः । समुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजतेत्ययं पुरुषविधः । तृतीयमप्सु । तृतीयं तमप्स्वन्तर्व्यवस्थितं जनयति । यदेनमदस्तृतीयमद्भ्योऽजनयदिति श्रुतिः । अथ यो गर्भोऽन्तरासीत्सोऽग्निरसृज्यतेत्येतत् श्रुत्याभिप्रायम् । नृमणा अजस्रम् । नृषु मनो यस्येति नृमणाः प्रजापतिः अजस्रमनुपक्षीणमग्निम् । प्रजापतिर्वै नृमणा अग्निरजस्र इति श्रुतिः । तृतीयमप्स्वन्तर्व्यवस्थितं जनयति । नृमणाः अजस्रमग्निमिति वाक्यार्थः । य एवं बहुजन्माग्निः तम् इन्धानः आदीपयन् यजमानः एनमग्निं जरते जनयतीति धातोरर्थान्तरे वृत्तिः । स्वाधीः शोभना आहिता धीर्बुद्धिर्यस्य स स्वाधीः ॥ १८ ॥

विद्मा ते । विद्म जानीमः विद्मा द्व्यचोऽतस्तिङ इति दीर्घत्वम् । ते तव हे अग्ने त्रेधा त्रयाणि त्रिधा प्रविभक्तानि त्रीणि रूपाणि अग्निवायुसूर्याख्यानि विजानीमः विद्मा ते धाम विजानीमः तव धामानि त्रीणि भवन्ति । स्थानानि नामानि जन्मानीति जन्मान्यत्राभिप्रेतानि । जन्मान्याहवनीयगार्हपत्यदक्षिणाग्न्यभिप्रणीतधृ-

ण्यप्रभृतीनि विभृता विहृतानि । पुरुत्रा बहुरूपाणि विजानीमश्च तव नाम परममुत्कृष्टं गुहा यत् । गुहायामपि यद्यवस्थितम् । यविष्ठय इति वा अस्य तन्नाम विद्मा तमुत्सं विजानीमश्च तमुत्सन्दनमब्रूपं प्रथममवस्थानं यतस्त्वमाजगन्थ आगतवानसि ॥ १९ ॥

समुद्रे त्वा । हे अग्ने समुद्रे त्वां वर्त्तमानं नृमणाः प्रजापतिरीधे दीपयाञ्चकार सोऽपोऽसृजतेत्युपक्रम्य तस्मादग्निरग्निर्ह वै तमग्निरित्याचक्षते । इत्येतदभिप्रायम् । अप्स्वन्तर्नृचक्षा ईधे । अप्स्वन्तर्मध्ये वर्त्तमानं भवन्तं नृचक्षाः प्रजापतिरेव ईधे व्यादीपितवान् । तमद्भ्यः उपोदासृत्तं पुष्करपर्णे विवेदेत्यादिश्रुतिरुद्घाटिता । दिवो अग्न ऊधन् । द्युलोकस्य च ऊधसि महोदके प्रदेश आदित्यात्मना नृचक्षा एव ईधे । तृतीये त्वा रजसि तस्थिवांसं तृतीये च त्वा त्वां द्युलोके आदित्यात्मनाऽवस्थितवन्तम् । अपामुपस्थे उत्सङ्गे नाव्यानाम् अपां मध्येऽवस्थितं महिषाः महान्तः प्राणा अवर्द्धन् वर्द्धयाञ्चक्रुः । प्राणा वै महिषा इत्यादिश्रुतिः ॥ २० ॥

अक्रन्ददग्निरिति व्याख्यातम् ॥ २१ ॥

श्रीणामुदारः । लक्ष्मीणामुदारोऽत्यर्थं दाता धरुणो रयीणां धारयिता धनानां मनीषाणां प्रार्पणः कश्चिद्धनवानपि भवति नतु दाता । अयं तु मनसा एषितानामभिलषितानां कोशानां प्रार्प्पयिता । सोमगोपाः धिष्ण्या अग्नयः । सोमं गोपायन्ति । तदभिप्रायमेतत् । सोमिनो वा गोपायति वसुः वासयिता । यद्वा वसु धनं स एवाग्निः यथान्यानि धनानि उपकारं कुर्वन्ति शयनासनयानरथादीन्येवमयमपि उपकरोति भूतानां तापपाकप्रकाशैरतो वसुः । सूनुः सहसो बलस्य पुत्रः मथ्यमानो जायते । तस्मादेवमुच्यते । अप्सु राजा । अप्सु स्थितो वरुणात्मना राजा । तथा चोक्तम् । त्वमग्ने वरुणो जायसे यदिति विभात्यग्रे उषसामादित्यात्मना इधानः । इन्धी दीप्तौ दीप्यमानः । यद्वा उषःकालेऽग्नीनां प्रादुष्करणं क्रियते तदभिप्रायमेतत् ॥ २२ ॥

विश्वस्य केतुः । चतुर्थः पादोऽत्र प्रथमं व्याख्येयं यच्छन्दयोगात् । जना यदग्निमयजन्त पञ्च । यदित्यविभक्तिको निर्देशः यमग्निं पञ्च जनाः चत्वारो वर्णाः निषादपञ्चमाः अयजन्त इष्टवन्तः स विश्वस्य प्राणिजातस्य केतुः प्रज्ञानम् अग्न्यात्मना भुवनस्य

गर्भः भूतजातस्य वाय्वात्मना गर्भः स हि प्राणभावेन भूतानामन्तः संचरति । आरोदसी अपृणाज्जायमानः स एव पूरयति द्यावापृथिव्यौ जायमान आदित्यात्मना । स एव मध्यस्थानमारुह्य इन्द्रात्मना वीडुं चित् दृढमप्यद्रिम् । अदारयितव्यं मेघं चाभिनत् विदारयति । परायन् परापरतो गच्छन् ॥ २३ ॥

उशिक् पावक । वश कान्तौ । अस्य कृतसम्प्रसारणस्यैतद् रूपम् । य उशिक् कान्तः मेधावी पावकः पाचयिता अरतिः अलमतिः सुमेधाः कल्याणप्रज्ञः साधुप्रज्ञो वा मर्त्येषु मरणधर्मेषु मनुष्येषु । अग्निः कथम्भूतः अमृतः अमरणधर्मा निधायि निहितः । देवैः योऽस्य लोकस्याध्यक्षः स इयर्ति उदियर्त्ति । उद्गमयति धूमम् अरुषमरोचनं भारिभ्रत् बिभ्रद्धारयन्निव जगत् । इतो वा अयमूर्ध्वरेतः सिञ्चति धूमं सामुत्र वृष्टिर्भवतीत्येतच्छ्रुत्यभिप्रायोऽयं मन्त्रः शुक्रेण शोचिषा द्यां द्युलोकमिनक्षन् व्याप्नुवन् नक्षत्रग्रहचन्द्रतारकासम्बन्धिना शोचिषा धूममुदियर्तीति सम्बध्यते इतः प्रदानाद्धि देवा उपजीवन्तीत्येतच्छ्रुत्यभिप्रायो मन्त्रः ॥ २४ ॥

इशानो रुक्म इति व्याख्यातम् ॥ २५ ॥

यस्ते अद्य । यस्ते अद्य प्रतिपदि कृणवत् करोति हे भद्रशोचे मन्दनीयदीप्ते अपूपं पुरोडाशं देव घृतवन्तं हे अग्ने स आज्यस्योपस्तीर्य द्विर्हविषोऽवदाय अथोपरिष्टादाज्यस्याभिघारयतीत्येतत् श्रुत्यभिप्रायम् । प्रतन्नय नयसीति प्राप्ते छान्दसो लोट् । प्रणयसि तं यजमानं प्रतरं वस्यो अच्छ । अच्छाभेराप्तुमिति शाकपूणिः । वस्यः वसीयं स्थानमभि । वस निवासे । तृन् तुश्छन्दसीतीयसुन् तुरिष्ठेमेयस्स्विति तृनो लोपः । वसीय इति सिध्यति । स लोकमागच्छत्यशोकमाहिमं तस्मिन्वसति शाश्वतीः समा इति श्रुत्युक्तं लोकं तमाप्नुयात् । अयं वस्तीयांल्लोकः अभिनयसि च सुम्नं देवभक्तम् । अभिनयसि च सुम्नं सुखं देवभक्तं देवसेवितं हे यविष्ठ युवतम अथवा मिश्रयितृतम ॥ २६ ॥

आ तं भज । तदः स्थाने यदो वृत्तिः । लोटः स्थाने लटः अर्थसम्बन्धत्वात् । हे अग्ने आभजसि यं यजमानं सौश्रवसेषु साधुश्रवणीयेषु यज्ञक्रतुषु । किञ्च उक्थ उक्थ आभज तेष्वेव यज्ञक्रतुषु उक्थे उक्थे शस्यमाने आभजसि आसेवसे यजमानं प्रियः सूर्यस्य भ-

वति प्रियश्चाग्नेर्भवति । किञ्च उज्जातेन भिनदत् । उद्भिनत्ति धर्म्मार्थकामान् जातेनौरसपुत्रसंघातेन । उज्जनित्वैः । उद्भिनत्ति जनित्वैः जनिष्यमाणैः पुनः पुत्रपौत्रसंघैः वेदार्थं प्रजाप्यस्य स्वर्गयायिनी भवतीत्यर्थः ॥ २७ ॥

त्वामग्ने । हे अग्ने त्वां यजमानाः अनु द्यून् अन्वहमहन्यहनि विश्वानि वसूनि धनानि दधिरे धारयन्ति । भूमिगोहिरण्यादीनि वार्य्याणि वरणीयानि । किञ्च त्वया सह द्रविणं यज्ञफलमिच्छमानाः व्रजम् व्रजन्त्यनेन सुकृतिन इति व्रजो देवयानमार्गः । गोमन्तं गावो रश्मयः आदित्यसम्बन्धिनस्तैः संयुक्तम् । उशिजो मेधाविनः ज्ञानकर्म्मसमुच्चयकारिणः । विवव्रुः विभिदुः । आदित्यमण्डलस्य मध्ये शोभनं मार्गं कृतवन्त इत्यर्थः । तदुक्तम् । ते य एवमेतत् विदुरिति उपक्रम्य देवलोकादादित्यमिति ॥ २८ ॥

अस्ताव्यग्निः अस्माभिरग्निः स्तुतोऽतः अद्वेषे द्वेषरहिते द्यावापृथिव्यौ हुवेम आह्वयामः तदाश्रयकर्म्मप्राप्त्यर्थं हे देवाः यूयमपि धत्त रयिं धनमस्मे अस्मभ्यं सुवीरं शोभनपुत्रम् ॥ २९ ॥

वनीवाहनम् । उख्यस्योत्तरतः समिदाधानम् । आग्नेय्यः पञ्चकण्डिकाः । समिधाग्निं व्याख्यातम् ॥ ३० ॥

उद्गच्छति । उदु त्वा अनुष्टुप् । हे अग्ने उद्धरन्तु उद्धरन्तु त्वां विश्वे देवाः चितिभिः प्रज्ञाभिः यैरग्निरुद्ध्रियते स त्वं विश्वैर्देवैरुद्ध्रियमाणः नः अस्माकं शिवो भव शिवः शान्तः सुप्रतीकः शोभनमुखः विभावसुः विभूतधनश्च ॥ ३१ ॥

प्रयाति । प्रेदग्ने । अनुष्टुप् । प्रयाहि हे अग्ने त्वं ज्योतिष्मान् भूत्वा शिवेभिरर्च्चिभिः शिवैः शान्तैः सुखकरैः अर्चिभिः गच्छ गच्छंश्च त्वं महद्भिर्भानुभिः रश्मिभिः भासन् दीप्त्या दीप्यमानो मा हिंसीस्तन्वा शरीरेण प्रजाः ॥ ३२ ॥

अक्रन्ददग्निर्व्याख्यातम ॥ ३३ ॥

समिधमादधाति । प्र प्रायम् । त्रिष्टुप् । प्रहर्षेण महताऽयमग्निर्भरतस्य प्रजापतेः प्रशृण्वे शृणोति वचनं कथमेतदध्यवसीयते यथा प्रजापतेः शृणोति वचनमिति । वियत्सूर्यो न रोचते बृहद्भाः । यस्मात्समिदाधानसमनन्तरमेव विरोचते सूर्यो न सूर्य इव बृहद्भाः महादीप्तिः । यश्चाभितस्थौ पूरुम् । असुरराक्षसं पृतनासु संग्रामेष्वेतया

समिधाऽऽप्यायितः अस्माच्च दीदाय दीप्यते । दैव्यःदेवसम्बन्धी अतिथिः अतिथिधर्मा जनानां शिवः शान्तः अस्माकं भवति तस्मात्प्रजापतेर्वचनं शृणोमि ॥ ३४ ॥

आपो देवीः । दशकण्डिकाभिर्भस्माभ्यवहरणम् । आपो देवीः अब्देवत्या त्रिष्टुप् । हे आपः देव्यः प्रतिगृभ्णीत भस्म एतत् स्वागतादिभिः । तत्रायं शिष्टव्यवहारः । ततः स्वागतादिभिः परि गृह्य स्योने कृणुध्वं सुरभा उ लोके स्योने सुखावहे कृणुध्वं स्थापयत । उकारस्समुच्चयार्थः । सुरभौ शोभनगन्धे धूपपुष्पप्रकारैः लोके स्थाने शय्यायां तस्यै नमन्तां तदः स्थाने एतदः प्रयोगः प्रकृतत्वात् । अस्मै भस्मरूपायाग्नये नमन्तां जनयः उपतिष्ठन्तु जायाः सुपत्नीः शोभनपत्न्यः रूपलावण्ययौवनालङ्कारवैदग्ध्यसम्पन्नाः यूयं मातेव पुत्रं बिभृत धारयत पानभोजनवासोभिः गोपायत । किञ्च अप्सु स्वात्मनि एनत् भस्म ॥ ३५ ॥

अप्स्वग्ने । अधस्तनेन मन्त्रेण भस्मातिथित्वेन अप्स्ववस्थाप्याथेदानीं गायत्र्यनुष्टुब्भ्याम् । अग्नेः सर्वगतत्वं प्रकाशयन् भस्माभ्यवहरणमेवापह्नुते । अप्सु हे अग्ने सधिः समानं स्थानं तव सौषधीरनुरुध्यसे । स त्वं बीजमवस्थाय औषधीः अनुरुध्यसे । ओषधिविपरिणाममनुविपरिणमसे । ततो गर्भे सन् विद्यमानः जायसे पुनरपि ॥ ३६ ॥

किञ्च । गर्भो असि । गर्भः असि भवसि । ओषधीनां गर्भश्च वनस्पतीनां गर्भश्च विश्वस्य सर्वस्य भूतस्य भूतग्रामस्य । हे अग्ने गर्भः अपामासि ॥ ३७ ॥

अप आदत्त प्रसद्य । चतसृभिराग्नेयीभिः । द्वे अनुष्टुभौ द्वे गायत्र्यौ । प्रसद्य अवच्छाद्य भस्मना भस्मरूपेण योनिं स्थानमपश्च पृथिवीं च हे अग्ने संसृज्य सङ्गत्य च मातृभिरद्भिस्त्वम् । आपो वै मातरः।ज्योतिष्मान् भूत्वा पुनरस्यामुखायाम् । आसदः आसीद॥३८॥

पुनरासद्य पुनरप्यास्थाय सदनं स्थानम् । अपश्च पृथिवीं चाग्ने ततोऽनन्तरं शेषे । शीङ् स्वप्ने इत्यस्यैतद्रूपम् । स्वपिषि मातुः यथा उपस्थे उत्सङ्गे अन्तर्मध्ये अस्यामुखायां शिवतमः शान्ततमः ॥ ३९ ॥

पुनरूर्जा द्वे व्याख्याते ॥ ४० ॥ ४१ ॥

प्रास्योपायामुपतिष्ठते बोधा म इति द्वाभ्यां त्रिष्टुब्गागयत्रीभ्यां यजुरन्ता विश्वकर्मणे स्वाहेति यजुः । बोधा मे बुध्यस्व मम अस्य वचसः किमभिप्रायोऽहं ब्रवीमि । हे यविष्ठ मिश्रयितृतम । अथ युवतम मंहिष्ठस्य भूयिष्ठस्य प्रभृतस्य श्रोत्रपथं प्रापितस्य हे स्वधावः अब्रवन् । किञ्च पीयति त्वः पीयतिराक्रोशकर्म्मा आक्रोशति त्वः एकः पुरुषः । त्वां हे अग्ने अनुत्वो गृणाति स्तौति त्वः एकः पुरुषः एष लोकस्वभावः कश्चिदाक्रोशति कश्चित्स्तौति । एवं च सति वन्दारुः । वदि अभिवादनस्तुत्योः । शृवन्द्योरारुरित्यारुप्रत्ययः । वन्दनशीलः सन् ते तव तन्वं शरीरं वन्दे ॥ ४२ ॥

स बोधि । यस्त्वं सूरिः पण्डितः मघवा च धनवांश्च । मघमिति धननाम । सः बोधि बुध्यस्व अपगच्छ हे वसुपते धनस्य पते वसुदावन् धनस्य दातः । बुध्वा च युयोधि पृथक्कुरु अस्मत् अस्मत्तः द्वेषांसि दौर्भाग्यानि सुप्रीतः सन् समिधा उपहत्याज्यं जुहोति । विश्वकर्मणे स्वाहा ॥ ४३ ॥

ऋजु आदधाति समिधम् । पुनस्त्वा । आग्नेयी त्रिष्टुप् । निर्वाणं त्वां पुनः समिन्धतां सन्दीपयन्त्वादित्याः रुद्रा वसवः पुनश्च ब्रह्माणः ऋत्विग्यजमानाः । हे वसुनीथ नीथा स्तुतिरुच्यते । वसुलाभनिमित्ता नीथा स्तुतिर्यस्य स वसुनीथः । यज्ञैः यागैः घृतेन च त्वं तन्वं शरीरं वर्द्धयस्व सत्याश्च सन्तु यजमानस्य कामाः ये भस्माभ्यवहरणव्यवच्छिन्नाः ॥ ४४ ॥

पलाशशाखया गार्हपत्यं व्यूहति । अपेत । त्रिष्टुप् । अर्द्धर्चेनोदरसर्पिण उच्यन्ते । पादेन यमः पादेन पितरः । अप इत अपगच्छत वीत विसर्प्पत चातः स्थानात् । येऽत्र स्थ । ये यूयमत्र स्थ भवथ । पुराणाश्चिरन्तनाः । ये च नूतनाः । इदानीन्तनाः कस्माद्वयमपसर्पाम इति चेन्मतिः । अदात् दत्तवान् । यमः अवसानं स्थानम् । अवस्यन्त्यस्मिन्नित्यवसानम् । पृथिव्याः अस्मै यजमानाय । अक्रन् कृतवन्तश्च पितर इमं लोकं स्थानमस्मै यजमानायातोऽपगच्छतेति ॥ ४५ ॥

उषान्निवपति । उल्वसंस्तवः । पशुसंस्तवश्च तेषामतस्तथैव व्याख्यायते । संज्ञानमसि । त्रीणि यजूंषि समित्येकीभावमाचष्टे यत्र एकं ज्ञानमसि उल्वसम्भवात् तस्मादापेतार्हिंसमानोल्वाः समेव

जानत इति श्रुतिः । कामधरणं च । कामान् धारयति सम्पादयति कामधारणम् । पशवो वा उषाः पशवः कामधारणम् इति श्रुतिः । अतो मयि च ते तव कामधारणं भूयासुरिति बहुवचनानामपि मे पशवो भूयासुरिति श्रुतिः । उल्वाभिप्रायमेकवचनम् । मण्डलं छादयति । सिकता निवपति । अग्नेर्भस्मासि भस भर्त्सनदीप्त्योः। भासितं भस्म भस्मसाद्दश्वात् । सिकता भस्मेत्युक्त्वा न वा अग्निः स्वं भस्माति दहतीति श्रुतिः । अग्नेः पुरीषमसि । अग्नेश्च पुरीषं पूरणमसि । भस्माभिप्रायमेकवचनम् । अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकता इति श्रुतिः । परिश्रिताम् उपदधाति । चितः स्थ । चिञ् चयने अस्य क्विपि बहुवचनं या यूयं चितो भवथ परिसमन्तात् चित स्थ ता उच्यन्ते ऊर्ध्वचितो भूत्वा एनमग्निमाश्रयध्वम् ॥ ४६ ॥

गार्हपत्य इष्टकाभिश्चीयते । अयं सोऽग्निः षडृचमाग्नेयं त्रैष्टुभम् । चतुर्थी षष्ठी च अनुष्टुभौ इष्टकोपधानं कुर्वन्नभिनयन दर्शयति अयं स गार्हपत्योऽग्निश्चीयते यस्मिंश्चिते सति अभिसुतं सोमं इन्द्रः दधे धारयति । जठरे उदरे वा वशानः कामयमानः कथंभूतं सोमं दधे सहस्रियं सहस्रार्हं वाजमन्नभूतं सर्वस्य जगतः । अत्यन्न सप्तिम् । नकारः संप्रत्यर्थे अत्यन्न भक्षणादेव मदकरं सप्तिं सरणं तृप्तिकरं न केवलमस्मिंश्चिते इन्द्रः सोमं जठरे धारयति किं तर्हि त्वमपि । ससवान् सन् स्तूयसे ससवान् सन् हवींषि संभजमानः सन् स्तूयसे ऋत्विग्यजमानैः हे जातवेदः । अयं तावदस्य मन्त्रस्य प्रकटार्थः । श्रुतिस्त्वाहुतिपरिणामाभिप्रायेण व्याचष्टे अयं वै लोको गार्हपत्यः आपः सोमसुतोऽस्मिन् लोके य इन्द्रो धत्ते जठरे वावशान इति । मध्यं वै जठरमित्यादि । अयं स लोको गार्हपत्योऽग्निः यस्मिल्लोकेऽभिषुतसोमपरिणामभूता अपः इन्द्रः जठरे मध्ये उदरे दधे स्थापयति सहस्रियं वाजमत्यं न सप्तिमिति । आपो वै सहस्रियो वाजः अपां विशेषणानि । ससवान् स्तूयसे जातवेदः इति व्याचष्टे चितः संश्चीयसे जातवेद इति गार्हपत्यरूपेण चितः सन् चीयसे आहवनीयरूपेणेति वा अर्थान्तरवृत्तित्वात् ॥ ४७ ॥

अग्ने यत्ते हे अग्ने यत् ते तव दिवि द्युलोके आदित्यलक्षणं वर्चः पृथिव्यामग्निलक्षणं वर्चः यच्च औषधीषु अन्तर्व्यवस्थितं यच्चाप्स्वन्तर्व्यवस्थितम् । आयजत्र मर्य्यादया यष्टव्यम् । एतान्यभ-

स्तादुक्तानि वर्च्चांसि तव लब्धीयांसि । येन तु वर्च्चसा अन्तरिक्षमुरु विस्तीर्णमाततन्थ आतनोषि त्वेषः सभानुः सतं तव महद्वर्च्चः । अर्णवः अर्णस्वान् उदकवान् अथवा अरणवान् गमनवान् वायुः स त्वेषः इति श्रुतिः । नृचक्षाः नृणां शुभाशुभकर्म्मद्रष्टा त्रिस्थानोऽत्राग्निः स्तुतः ॥ ४८ ॥

अग्ने दिवः । हे अग्ने दिवः द्युलोकस्य संबन्धि अर्णमुदकमच्छाजिगासि अच्छाभेराप्तुमिति शाकपूणिः अभिजिगास्यभिगच्छसि । आपो वा अस्य दिवोऽर्णस्ता एष धूमेनाच्छैतीति श्रुतिः । अच्छा देवान् अभिजिगासि च देवान् । कतमान् देवानित्यत आह । ऊचिषे धिष्ण्या ये । प्राणा वै देवाः धिष्ण्यास्ते हि सर्वा धिय इष्णन्ति जान्विषे उच्यन्ते इति लिङ्गवचनयोर्व्यत्ययः । उच्यन्ते ये धिष्ण्याः अग्नयः किं च या रोचने लोके स्थितस्य सूर्यस्य परस्तादाप उत्तिष्ठन्ते याश्चाधस्तादुपतिष्ठन्त आपः ताश्च त्वमभिजिगासि त्वमेवैतैः रूपैः परिणमस इत्यभिप्रायः ॥ ४९ ॥

पुरीष्यासः । बहुवचनमिष्टकापेक्षया । ये पुरीष्यासः पशव्याः पशुभ्यो हिताः अग्नयः इष्टकाः प्रावणेभिः प्रुङ् गतौ प्रवणैर्गवनैः लोकव्याप्तिभिः सजोषसः समानप्रीतयः समानसेवना वा । जुषी प्रीतिसेवनयोरित्यस्मात् । समानं हि ते लोकं सेवन्ते । अर्द्धबृहत्या हि ताः चतस्रस्ते जुषन्तां सेवन्तां यज्ञमद्रुहः । अहिंसितारम् । अनमीवाश्च अनशना याश्च बुभुक्षानिवृत्तिकरा इषः अन्नभक्तीः महीः महतीः प्रभूताः ॥ ५० ॥

पश्चिमे उपदधाति । इडामग्ने । इडामन्नं । हे अग्ने पुरुदंसं बहुकर्मसाधनभूतम् । यत्तु श्रुत्या उक्तं पशवो वा इडेति तद्बलीवर्दैरुत्पाद्यत इत्यनेन हेतुना । सनिं गोः । गोः संबन्धिनी च सनिं दानं पयोदधिघृतादिकम् । शश्वत्तमं शाश्वतिकतमम् अनपायिनं हवमानाय यजमानाय । साध । स हि देवानाह्वयति । साध प्रसाधय । एतदुक्तं भवति अन्नं सोपसेचनं शाश्वतिकतमं यजमानाय देहि । किञ्च स्यान्नः सूनुस्तनयः । भवेच्चास्माकं पुत्र औरसः विजावा प्रज्ञातिमान् प्रजावान्वा । यद्वा विजावा विशेषणेन योजयति विजयशीलः पितरं वा योजयति वीर्येण यया सुमत्या त्वमेतत्करोषि सा हे अग्ने ते तव भूतु भूयात् अस्मे अस्मासु ॥ ५१ ॥

द्वितीयामुपदधाति । अयं ते । व्याख्यातम् ॥ ५२ ॥

पुरस्तादुपदधाति । चिदसि । चिञ् चयने । चितासि सादयति । तया देवतया सादिता सती अङ्गिरस्वत्प्राणवद् । यथाहि प्राणः सर्वाङ्गं व्याप्यावस्थितः एवं त्वमपि ध्रुवासीद निविशस्व तया देवतयेति । वाग्वै सा देवता अङ्गिरस्वदिति प्राणो वा आङ्गिरा इति श्रुतिः । द्वितीयामुपदधाति । परिचिदसि । परि सर्वतश्चितासि यया देवतयेति व्याख्यातम् ॥ ५३ ॥

लोकं पृणामुपदधाति । लोकं पृण । अनुष्टुप् । पद्यादिलोकं स्थानं पृण पूरय प्रा पूरणे । छिद्रं च पृण पूरय अङ्गेश्चावयवभूता भव । अथो अपि च सीद निविशस्व ध्रुवा निश्चला त्वम् । इन्द्राग्नी त्वां बृहस्पतिश्च अस्मिन् योनौ स्थाने असीषदन् आसादयन्तु । नहि मानुषोऽध्वर्युस्त्वां सादयितुं समर्थ इत्यभिप्रायः ॥ ५४ ॥

सूददोहसाधिवदति । ता अस्य । अनुष्टुप् । यज्ञाहुतिपरिणामभूता आप उच्यन्ते व्यवहितपदप्रायो मन्त्रः । यज्ञपरिणामभूता दिव इत्यन्तं पदमिह संबध्यते । दिवः द्युलोकात् च्युताः सूददोहसः । आपो वै सूदोऽन्नं दोह इति श्रुतिः । अन्नसहिता आपः । अस्येत्यस्य पदस्य विश इत्यनेन संबन्धः । यज्ञो वै विश इति श्रुतिः । अस्य यज्ञस्य संबन्धिनं सोमं श्रीणन्ति मिश्रयन्ति पृश्नयः । अन्नं वै पृश्नीति श्रुतिः । अन्नसहिता आपः । एतदुक्तं भवति अस्मिन् लोके पतित्वा आप ओषधिवनस्पत्यन्नभूताः सोमस्योपकुर्वन्ति । कस्मिन् काले श्रीणन्ति जन्मन् देवानाम् । संवत्सरो वै देवानां जन्मेति संवत्सरश्रुतिः । संवत्सरे संवत्सरे सोमयागस्तदभिप्रायमेतत् । त्रिष्वा रोचने सवनानि वै त्रीणि रोचनानीति श्रुतिः । त्रिष्वारोचनेष्विति वचनव्यत्ययः । त्रिषु सवनेषु । एवं श्रुतितोऽयं मन्त्रो व्याख्यातः ॥ ५५ ॥

पुरीषं निवपति । इन्द्रं विश्वाः ऐन्द्री त्रिष्टुप् । इन्द्रं विश्वाः सर्वा गिरः श्रुतयः ऋग्यजुःसामलक्षणा अवीवृधन् वर्द्धयन्ति समुद्रव्यचसं समुद्रमिव विविधाञ्चनं नानागतिमक्षोभ्यगतिं वा । रथीतमं रथीनाम् । सर्वेषां रथिनां मध्ये रथयुद्धे लब्धातिशयम् । वाजानां सत्पतिं पतिं वाजानामन्नानां पतिं सतां च पतिं श्रुतिस्मृतिविहितकर्म्मानुष्ठातारः सन्त उक्ताः ॥ ५६ ॥

चित्येऽग्नावुख्यं निवपति । समितमिति । चतसृभिरुष्णिगुपरिष्टाद् बृहत्युष्णिक्पङ्क्तिभिः अग्निदेवत्याभिः । तृतीया तु उख्या अग्निदेवत्या । हे चित्योख्यावग्नी । समितमिति द्वितीयपादप्रभृति व्याख्यायते यौ युवां संप्रियौ सङ्गातिप्रियौ रोचिष्णू रोचनशीलौ सुमनस्यमानौ परस्परं शोभनचित्तवन्तौ इषमन्नमूर्ज्जमुपसेचनं सर्पिरादि अभिसंवसानौ अभ्यवहरन्तौ वस्तेरर्थान्तरे वृत्तिः । एतत्कर्म कुर्वाणौ समितम् । इण् गतौ । सङ्गतिं कुरुत संकल्पेथां च एकसङ्कल्पौ भवतम् । इत्याशास्महे ॥ ५७ ॥

संवाम् । आसमकरमाभिमुख्येन स्थित्वा संस्कृतवान् अहं वां युवयोर्म्मनांसि बुध्यहङ्कारमनांसीति बहुवचनम् । संव्रता व्रतमिति कर्म्मनाम संस्कृतवांश्च युवयोः कर्माणि समुचितानि । चित्तशब्देन संस्कारा मनोगता उच्यन्ते । संस्कृतवांश्चास्मिन्मनोगतान् संस्कारान् । उकारः समुच्चयार्थीयः । एवं मनः कर्म्म संस्कारैरेकीकृतैरेकीभूतं त्वामेकदेवताभिमानिनं प्रार्थये हे अग्ने पुरीष्य पशव्य अधिपा भव अधिपतिर्भव त्वं नः अस्मभ्यमिषमूर्ज्जं च यजमानाय धेहि इषमूर्ज्जमन्नं तदुपसेचनं दध्यादि ॥ ५८ ॥

अग्ने त्वम् । हे अग्ने पुरीष्यः पशव्यः रयिमांश्च धनवान् पुष्टिमांश्चासि यतः अतः शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासद इति व्याख्यातम् ॥ ५९ ॥

भवन्तं नः व्याख्यातम् ॥ ६० ॥

उखां शिक्याद्विमुञ्चति । मातेव पुत्रम् । त्रिष्टुप् । उखास्तुतिः । येयमुखा माता इव पुत्रं पृथिवीरूपमवस्थाय मृण्मयी भूत्वा पुरीष्यं पशव्यमग्निं स्वे योनौ स्वकीये कृत्वा उत्सङ्गे अभाः प्रथमपुरुषस्यैतद्रूपम् उखाशब्दसामानाधिकरण्यात् । अभाः ऊषा अभार्षीत् धारितवती तामिदानीं कृतकृत्यां सतीं विश्वैः देवैः ऋतुभिः संविदानः अहो महत्कर्म्मकृतमित्येवं संवादं कुर्वन् प्रजापतिर्विश्वकर्म्मा च विमुञ्च शिक्यात् ॥ ६१ ॥

नैर्ऋतीनामिष्टकानामुपधानं तिसृभिस्त्रिष्टुब्भिः । असुन्वन्तं सोमाभिषवमकुर्वाणमयजमानं चान्यैर्यज्ञक्रतुभिः इच्छ तं प्रति गच्छ परिगृह्णीष्वेत्यर्थः । किञ्च स्तेनस्येत्यामनु इहि । स्तेनस्य चौरस्य इत्यां गतिम् । अनुकुर्वन्निहि । प्रपलाय्य याहि तस्करस्य तद्व

यश्चौरकर्म्म करोति नान्यत् स तस्करः तस्कर इत्युच्यते। पुनरप्याह अन्यमस्मदिच्छ । अन्यं पुरुषमस्मत्तः इच्छ ग्रहीतुं सा ते तव इत्या गतिः एवं दण्डगर्भमुक्त्वाथेदानीं साम्नाह । नमो देवि निर्ऋते तुभ्यमस्तु । हे देवि निर्ऋते तुभ्यं नमोऽस्तु ॥ ६२ ॥

नमः सु ते । शोभनस्तव नमस्कारः हे निर्ऋते अस्तु । निर्ऋतिः कृच्छ्रापतिः भूमिर्वा । तिग्ममुत्साहवत्तेजो यस्याः सा तिग्मतेजाः तस्याः संबोधनं हे तिग्मतेजः अयस्मयं विचृत अयोमयं विच्छिन्धि बन्धमेतं येनाहं बद्धः अजस्य जीवभावलक्षणेन जनित्वा म्रियते मृत्वा जायते इति । किञ्च यमेनाग्निना त्वं यस्या च पृथिव्या संविदाना एकमतीभूय उत्तमे नाके उत्कृष्टे सुखरूपे स्वर्गे अधिरोहय एनं यजमानम् ॥ ६३ ॥

यस्यास्ते । तव हे घोरे विषमशीले आसन् आस्ये मुखे जुहोमि हविः । एषां बन्धानाम् । अवसर्ज्जनाय विमोकाय सा त्वमेतान्बन्धानस्मत्तो विसृज । किञ्च यां च त्वां जनो लोकः । भूमिरिति कृत्वा प्रमन्दते स्तौति तां त्वामहमपि स्तौमि तथैव प्रतिष्ठाभूतानां जनयित्री मातेव बिभर्त्तीत्यादिभिर्गुणैः । किञ्च निर्ऋतिं त्वामहं परिवेद परिजानामि विश्वतः सर्वतः नितरां हि विदित आमन्त्रितो हिनस्तीत्यत एव बन्धानवसृजास्मत्तः ॥ ६४ ॥

शिक्यरुक्मपाशेड्वासन्दीः परेणास्यति । यं ते देवी । त्रिष्टुप् । यजमान उच्यते । यं ते तव देवी निर्ऋतिराबबन्ध । आबद्धवती शिक्यपाशं रुक्मपाशं च ग्रीवासु कण्ठे अविचृत्यम् । चृती छेदने । अच्छेद्यम् । अनवखण्डनीयम् । अनेनैव यजुषा तं पाशं ते तव विष्यामि । स्यतिरुपसृष्टो विमुञ्चने । विमुञ्चामि आयुषो न मध्यात् । अग्निर्वा आयुस्तस्यैतन्मध्यं यच्चितो गार्हपत्यो भवत्यचित आहवनीयः । नकारः संप्रत्यर्थे अग्नेर्मध्यात् अथोन्मुक्तपाशः सन्नग्निरूपमवस्थाय यजमान एतं पितुमन्नम् अद्धि भक्षय । प्रसूतः अभ्यनुज्ञातो निर्ऋत्या । उदपात्रं निषिच्य अन्तरातमेष्टकमुतिष्ठन्ते । नमो भूत्यै । विराट् एकपदा भूतिदेवत्या । नमो भूत्यै श्रियै या इदमग्निलक्षणं कर्म्म चकार कृतवती ॥ ६५ ॥

शालाद्वार्योपस्थानम् । निवेशनः । त्रिष्टुप् । पृथिवीलोकसंस्तुतोऽयमग्निर्निवेशनः । निविशते अस्मिन्निति निवेशनः संगच्छते-

ऽस्मिन्निति संगमनः। केषां वसूनां धनानां यस्यायं विश्वा रूपा। सर्वाणि रूपाणि। शेशाछन्दसि बहुलमिति निलोपः। आहवनीयदक्षिणाग्न्यतिप्रणीताग्नीध्रधिष्ण्यप्रभृतीनि अभिचष्टे अभिपश्यति। शचीभिः कर्म्मभिः स्वैः स्वैः कर्म्मभिर्युक्तानि। कथं पश्यति देव इव सविता सत्यधर्मा अवितथकर्म्मकारी यश्च इन्द्र इव तस्थौ। स्थितवान्। समरे संग्रामे पथीनां परिपन्थिभिः सह वयं स्तुम इति वाक्यशेषः॥ ६६॥

सीरं युज्यमानमभिमन्त्रयते। गायत्रीत्रिष्टुब्भ्याम्। सीरा युञ्जन्ति। सीराणि युञ्जन्ति कवयो मेधाविनः वितन्वते युगानि वितन्वन्ति। पृथक् नाना। कथंभूताः कवयः युञ्जन्ति धीराः धीमन्तः अग्निक्षेत्रविदः। किमर्थं युञ्जन्ति धीराः देवेषु सुम्नया। सुम्नमिति सुखनाम। द्वितीयार्थे देवेषु सुम्नं सुखं कर्त्तुमिति शेषः। सीरकविशब्दयोर्बहुवचनं पूजार्थम्। युगानि तु बहूनि अपि यज्ञे भवन्ति॥ ६७॥

युनक्त सीरा। सीराणि युनक्त वितनुध्वं विस्तारयध्वं युगा युगानि शम्यायोक्त्रप्रभृतिभिः ततः कृते योनौ वाहनादिभिर्वपत इह क्षेत्रे बीजं व्रीह्यादिगिरा च वाचा च। या ओषधीरित्यादिकया। चशब्दात् चमसे न च वपत। तथा वपत यथा च श्रुष्टिरन्नजातिर्व्रीह्यादिका सभराः सह भरसा फलकृतेन वर्तत इति सभराः सभरा अयं स्त्रीलिङ्गः शब्दः आनमितफलेत्यर्थः। असत् भवतु नः। अस्माकं यथा च नेदीयः अन्तिकतमम्। इच्छब्दोऽनर्थकः। सृण्यः दात्रं पक्वमौषधम्। आ इयात् आगच्छेत्। एतदुक्तं भवत्यतिघनत्वादोषधीनां निकटतमं दात्रं भूमेः पक्वमौषधम्। आगच्छत यथा तथा वपतेति॥ ६८॥

चतस्रः सीताः कृषति चतसृभिः ऋग्भिः। तत्र द्वे त्रिष्टुभौ। तृतीया पङ्क्तिः चतुर्थी अनुष्टुप्। शुनꣳसुफालाः। सुफालाः शोभनफालाः लाङ्गलाग्रस्थिताः विविधं कृषन्तु विलिखन्तु भूमिं सुखेन च भूमिं कीनाशाः हलिनः अभियन्तु अभिगच्छन्तु वाहैः अनड्डिः सहिताः अथैवं सुकृष्टे क्षेत्रे सति शुना सीरा शुनो वायुः शु इत्यव्यक्तानुकरणम्। शु इत्यन्तरिक्षे सीर आदित्यः सरणात् हे वाय्वादित्यौ हविषा उदकेन

तोशमानाः । तोशतिर्वधकर्मा । घ्नन्तौ । सिञ्चन्तौ भूमिं सुपिप्पलाः शोभनफलाः । पिप्पलं हि फलमुच्यते । शोभनफलयुक्ता ओषधीः कर्त्तन कुरुतम् । द्वयोर्बहुवचनं छान्दसम् । अस्मे अस्माकम् ॥ ६९ ॥

घृतेन सीता । सीतासमज्यताम् । अनुमतेति परोक्षाभिधायीनि त्रीणि पदानि । सीते आववृत्स्वेति प्रत्यक्षाभिधायिनी द्वे पदे एकस्मिन्मन्त्रवाक्ये । तत्र विरोधिसमवाये तु भूयसां स्यात्सधर्मत्वमिति न्यायात् । प्रथमं वा नियम्येत कारणाद्यतिक्रमः स्यादिति च न्यायात्तस्मादुपक्रमप्रभृति व्याख्यायते । घृतेनोदकेन सीता मधुनोदकेन समज्यतां सुसंसिच्यतां विश्वैः सर्वैर्देवैः अनुमता अभ्यनुज्ञाता मरुद्भिश्च । मरुतो ह वै वर्षस्येशते एवमक्षारोदकेन सिक्ताभ्यनुज्ञाता च मारुतादिभिः ऊर्ज्जस्वती अन्नवती पयसा पयोदधिघृतादिभिः पिन्वमाना पूरयन्ती सर्वा दिशः । अस्मान् सीते । सीता इति विभक्तिव्यत्ययः परोक्षत्वात् । अस्मान् प्रति सीता अभ्यावृत्स्व । स्वयम् । अभ्यवर्ततामिति पुरुषव्यत्ययः ॥ ७० ॥

लाङ्गलं सीरं पवीरवत् पवीति धारोच्यते साऽस्यास्तीति पवीरं फालः शोमत्वर्थे । तदस्य लाङ्गलस्यास्तीति पवीरवल्लाङ्गलम् । फालसंयुक्तमित्यर्थः । श्रुतिस्तु लक्षणया व्याचष्टे लाङ्गलं रयिमदिति । सुशेवं शेवमिति सुखनाम । शोभनं सुखकरं सोमपित्सरु । सोमं पिबतीति सोमपा यजमानः तस्मिन्सोमपि यजमाने त्सरणशीलं भूमेः खननशीलं त्सरुरुच्यते । यद्वा सोमपि यजमाने पापं त्सराति नाशयति सोमपि त्सरु । यद्वा सोमः पीयते येन चमसेन स सोमपिः तस्य सोमपेः त्सरु वृत्तं लाङ्गलं नहि लाङ्गलकर्मान्तरेण सोमचमसाः स्युः । यदित्थम्भूतं लाङ्गलं तदुद्वपति उद्गमयति । गामविं प्रफर्व्यं च पीवरीम् । फर्वतिर्गतिकर्मा प्रकर्षेण फर्व्या गम्या प्रफर्वी प्रथमयुवतिः पीवरी उच्छूनस्तनकपोलानामुद्वपति प्रस्थावद्रथवाहनं प्रस्थानसंयुक्तमुत्कृष्टजवोपेतं रथवाहनमश्वमुद्वपतीत्यनुषज्यते ॥ ७१ ॥

कामं कामदुघे । सीतोच्यते । हे कामदुघे कामानां प्रपूरणि कामं धुक्ष्व प्रसारय । केषामित्यत आह मित्राय वरुणाय चेन्द्राय अश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः । चकारः समुच्चयार्थः । सर्वत्रानुषज्यते ॥ ७२ ॥

अनडुहो विमुञ्चति । विमुच्यध्वम् । गायत्री । एवं जगतः स्थितिनिमित्तभूतां कृषिभिर्निर्वर्त्य कृतकृत्याः सन्तो विमुच्यध्वं युगात् । हे अघ्न्यः अहन्तव्या देवयाना देवकर्मकारिणः । यद्वा देवयानमार्गनिमित्तभूताः अगन्म गतवन्तः अशनायोद्भवात्तमसः पारमस्य । तदुक्तम् । योऽशनायापिपासे शोकं मोहं जरां मृत्युमभ्येतीति । तदेव स्पष्टयति ज्योतिः आपाम प्राप्तवन्तः परमात्मलक्षणं यज्ञलक्षणं देवलक्षणं वा ॥ ७३ ॥

कुशस्तम्बे । जुहोति सजूरब्दः । यजुरेतत् । सजूः समानजोषणः । अब्दः संवत्सरः स हि अपो ददाति । अयवोभिः यवाश्च अयवाश्च अर्द्धमासाश्च मासाश्चोच्यन्ते । सजूः उषा अरुणीभिः अरुणवर्णाभिः गोभिः किरणैः सजोषसौ अश्विना अश्विनौ दंसोभिः कर्म्मभिः सजूः सूर एतशेन अश्वेन । सजूर्वैश्वानर इडया आग्नेयी पृथिवी इडा पृथिवीस्थाना या स्त्री तस्याः अत्र ग्रहणं युक्तरूपम् । गोर्वाग्वा च इडाशब्देनोच्यते । घृतेन हविषा स्वाहा सुहुतमस्तु ॥ ७४ ॥

क्षेत्रे सर्वौषधं वपति सप्तविंशतिरनुष्टुभः । ओषधिस्तुतिः पञ्चदश तु वपने नियुक्ताः । या ओषधीः । या ओषधयः पूर्वाः प्रथमा जाता अन्याभ्य ओषधीभ्यः देवेभ्यः ऋतवो वै देवा इति श्रुतिः । ऋतुभ्योऽर्थाय ऋतव ओषधिसम्बद्धाः कर्त्तव्या इति । त्रियुगं पुरा । त्रीणि युगानि समाहृतानि त्रियुगं त्रिकालानित्यर्थः । वसन्ते प्रावृषि शरदि पुरा पूर्वेषु वसन्तादिषु पूर्वस्मिन् हि संवत्सरे उत्पन्नाः ओषधयोऽग्निक्षेत्रे उप्यन्ते । किं निमित्तमित्यत आह मनै नु । मन्ये जानामि तासां बभ्रूणां बभ्रुवर्णानाम् । बभ्रुः सोमः अहं शतं धामानि धामशब्दः स्थानपर्यायः संवत्सरोपलक्षितमेकैकं स्थानं यदिदं शतायुः शतार्वः शतवीर्यः पुरुष एतानि शतं धामानि सप्त च य एवेमे सप्तशीर्षन् प्राणास्तानेतानाह ॥ ७५ ॥

शतं वः । हे ओषधयः शतं वः युष्माकम् । अम्ब मातरः धामानि जन्मानि सहस्रमुत वो रुहः । अपि च सहस्रं युष्माकम् विरोहणानि सन्ति । अधा शतक्रत्वः । अथैवं सति हे शतक्रत्वः बहूनि कर्म्माणि बहुकर्म्माणः यूयमिमं प्रजापतिम् इमं यजमानं च मे मत्संबन्धिनमगदं गदो व्याधिः अव्याधिं कृत कुरुतेति ॥ ७६ ॥

ओषधीः प्रति । हे ओषधयः प्रतिमोदध्वम् । पुष्पवतीः प्रसूवरीः पुष्पवत्यः प्रसववत्यश्च सत्यः ततोऽनन्तरमश्वा इव संग्राम्याः सजीत्वरीः सह जयनशीलाः भूत्वा वीरुधश्च विविधं व्याधिं विरुन्धन्तीति वीरुधः पारयिष्णवः पारणशीलाः भवतास्माकमिति शेषः ॥ ७७ ॥

ओषधीरिति । हे ओषधयो या यूयमित्थमशनदानव्याध्यपगमादिभिरुपकुर्वन्त्यो मातरो जगन्निर्मात्र्यः । तद्वो देवी । वो युष्मान् हे देव्यः उपब्रुवे । उपसंगम्य ब्रुवे ब्रवीमि प्रार्थयामि सनेयं संभजेयम् अश्वं गां वासः आत्मानं च सनेयं तव यज्ञपुरुषं प्रजापतिरूपिणम् ॥ ७८ ॥

अश्वत्थे वः । चतुर्थः पादोऽत्र प्रथमं व्याख्यायते यत्सनवथ पूरुषम् । यदा यूयं सनवथ संसेवध्वं पुरुषं यजमानम् । अथाश्वत्थे वः युष्माकम् निषदनमवस्थानम् । अश्वत्थ्यामुपभृतिहविर्भूतानां स्थानं भवतीत्यर्थः । पर्णे वः पालाशे पर्णमय्यां जुह्वां वः युष्माकम् वसतिः स्थितिः होमार्थमध्वर्युणा कृता । अश्वत्थपर्णयोः तद्धितलोपश्छान्दसः । अथापि तद्धितेन कृत्स्नवन्निगमा भवन्तीति । गोभाज इत्किलासथ । इच्छब्दः पादपूरणः किलेति विद्याप्रकर्षे । ततोऽग्नौ हुताः सत्यः गोभाजः गोशब्देनात्रादित्योऽभिधीयते । आदित्यभाजः यूयं किल भवथ । तदुक्तम् ।

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति ॥

यद्वा अश्वत्थे वो निषदनम् । तथाहि । अश्वत्थे फलिते सर्वा ओषधयः फलवत्यो भवन्ति । पर्णे च फलिते कोद्रवादयः फलिता भवन्ति । गोभाजः पृथिवीभाजश्च उप्ताः सत्यः किलासथ भवथ तदुक्तम् । यदा पुरुषं संसेवध्वं भोजनादिभिरुपकारैरेवं दुरवधारितगतयो यूयमित्यभिप्रायः ॥ ७९ ॥

यत्रौषधीः । यत्र यस्मिन्पुरुषे भैषज्यकर्त्तरि हे ओषधयः यूयं समग्मत समागच्छत व्याधिं जेतुम् । कथमिव राजान इव । यथा राजानः समितौ संग्रामे शत्रून् जेतुं समागच्छन्ति । किं तत्रेत्यत आह विप्रो ब्राह्मणः स उच्यते भिषग्वैद्यः रक्षोहा च अमीव चातनश्च । अमीवा व्याधिः चातयतिर्नाशने । व्याधिनाशनः ॥ ८० ॥

अश्वावती । सर्वा ओषधीरिति बहुवचनोपदेशादिहापि बहुवचनं भवति । या ओषधयः अश्ववत्यः अश्वसंपादिन्यः सोमवत्यः सोमयागसंपादिन्यः ऊर्जयन्त्यः ऊर्ज बलप्राणने । बलसंपादिन्यः । उदोजसः उद्धतमोजो यासां ता उदोजसः ताः सर्वाः ओषधीः अहम् आवित्सि वेद्मि जानामि । विदित्वा च अस्मै अरिष्टतातये । रिषतिर्विनाशार्थः नरिष्टमरिष्टम् । अविनाशस्तस्य तननं विस्तरणम् अरिष्टतातिः अस्मै अरिष्टनाशाय भैषज्यं करोमीति शेषः ॥ ८१ ॥

उच्छुष्माः । उच्छब्द ईरत इत्यनेन संबध्यते उदीरते उद्गच्छन्ति प्रकाशीभवन्ति शुष्माः वीर्याणि । ओषधीनां संबन्धीनि कथमिव । गावो गोष्ठादिवेरते । गावः गोष्ठाद्विनिष्क्रान्ताः । किं कुर्वतीनां धनं संनिष्यन्तीनां संभजमानानां यजमानार्थमात्मानं च संभजमानानां तव ते यज्ञपुरुष ॥ ८२ ॥

इष्कृतिर्नाम । उपसर्गैकदेशलोपश्छान्दसः । निष्क्रमणं विनाशनं व्याध्यादेः करोतीति निष्कृतिः । निष्कृतिस्तावद्युष्मदीयाया मातुर्नामेति व्युत्पत्त्यभिप्रायम् । अथो अपि च यूयं स्थ भवथ निष्कृतीः व्याधिनिष्क्रमणाः । किञ्च सीराः सह इरया अन्नेन वर्त्तन्त इति सीराः । पतत्रिणीः पतनशीलाः स्थन भवथ कुरुत । नेत्यनर्थकाः उपजना भवन्तीति नकार उपजनः । कस्मिन्काले यूयमित्थम्भूता भवतेत्यत आह यदामयति । अम रोगे । यदामयाविनि स्थितं तस्य व्याधिं निष्कृथ निर्नाशयथ ॥ ८३ ॥

अति विश्वा । यदा अत्यक्रमुः आक्रामन्ते तनूः विश्वाः सर्वाः अतीत्य वर्त्तन्ते । परिष्ठाः परि सर्वतो व्याधीनधिष्ठाय तिष्ठन्तीति परिष्ठा ओषधयः । कथमिव स्तेन इव व्रजम् । यथा स्तेनः तस्करः व्रजमतिक्रामति परिमुमोषिषया एवमत्यक्रमुः । अथानन्तरमेव ओषधयः प्राच्युच्यवुः प्राच्यावयन्ति यत्किञ्च तन्वाः शरीरस्य रपः । रपो रिप्रमिति पापनामनी भवतः पापजनितं व्याधिमित्यर्थः ॥ ८४ ॥

यदिमाः । यदैव इमा वाजयन् पूजयन् अहमोषधीर्हस्ते आदधे आस्थापयामि अथानन्तरमेवात्मा यक्ष्मस्य व्याधेः नश्यति । कथमिव । पुरा जीवगृभो यथा । जीवन्नेव यो हिंसार्थं गृह्यते । पशुर्वाऽन्यो वा मनुष्यादिः स जीवगृप् तस्य जीवगृभः । प्रागेव

बधादतिविषादान्मृतोऽहमिति मन्यमानस्य मनुष्यस्य यथात्मा नश्येदेवं व्याधेरात्मा नश्यति । यद्वाहमोषधीर्हस्त आदधे इति सम्बन्धः ॥ ८५ ॥

यस्यौषधीः । यस्य रोगिणः । हे ओषधयः प्रसर्पथाङ्गमङ्गं परुष्परुः । सर्वाण्यङ्गानि सर्वाणि च पर्वाणीत्युक्तं भवति । परुःशब्दः पर्ववचनः । तस्य रोगिणः ततो यक्ष्मं विबाधध्वे । ततस्तस्मादङ्गपर्वसमुदायात् व्याध्युपशमं कुरुध्वे । कथामिव उग्रो मध्यमशीरिव उग्रः क्षत्रियः । बद्धगोधाङ्गुलित्राणः स एव विशिष्यते मध्यमं मर्मभागं शृणातीति मध्यमशीः । स यथा शत्रुं स्वं बाधते एवं यूयमपि रोगिणो रोगं विबाधध्वे इत्युपमार्थः । यद्वा उग्रो रुद्रः स एव त्रिशूलमध्यमेन शृणातीति मध्यमशीः स यथा युगान्ते सर्वं जगत् भस्मसात्करोति एवं यूयमपि व्याधिं कुरुध्वे ॥ ८६ ॥

साकं यक्ष्म । साकं सहेत्यर्थः । हे यक्ष्म सह प्रपत नश्य । चाषेण पक्षिणा किकिदीविना शब्दानुकरणमेतत् । किकि इत्येवं यो दीव्यति तेन सह प्रपत । स हि तव सार्थः उचितः । साकं वा तस्य ध्राज्या गत्या प्रपत । साकं नश्य प्रपलाहि । निहाकया निहन्ति कायमिति निहाका निर्दयमतिः कृच्छ्रापत्तिः तया कृच्छ्रापत्त्या सह नश्य हे यक्ष्म । यद्वा शब्दानुकरणमेतत् । हा कष्टं निहतोऽहं कया ओषध्या एवंरूपया शब्दानुकरणभक्त्या सह नश्य हे यक्ष्म । अपुनरागमनाय ॥ ८७ ॥

अन्या वः । हे ओषधयः अन्या ओषधिः वः युष्मत्सम्बन्धिनीमन्यामोषधीमवतु । पालयतु । अन्या तु ओषधिः अन्यस्या ओषधेः प्रभावम् । उपावतेति पुरुषवचनव्यत्ययः । उपावतु उपगस्य पालयतु ताः यूयमेवं सर्वाः संविदानाः संगच्छमानाः इदं मे मम प्रावत प्रपालयत वचः वचनमार्षम् ॥ ८८ ॥

याः फलिनीः । या ओषधयः फलवत्यः याश्चाफलाः फलरहिता अपुष्पाः पुष्परहिताः याश्च पुष्पिणीः पुष्पवत्यः बृहस्पतिप्रसूताः बृहस्पतिना अनुज्ञाताः ताः नः अस्मान्मुञ्चन्तु अंहसः पापात् ॥८९॥

इत उत्तरमनारभ्य वादमन्त्राः तेषां लिङ्गतो विनियोगः । मुञ्चन्तु मा । पृथक् कुर्वन्तु मां शपथ्यात् शपथनिमित्तात् किल्बिषात् । अथो अपि च वरुण्यात् वरुणनिबन्धनात् पाशात् मुञ्चन्तु । उत

अथो अपि च यमस्य सम्बन्धिनः पड्वीशात् । पड्वीशशब्दो बन्धनवचनः । संदानमर्वन्तपड्वीशमिति दृश्यते । किञ्च सर्वस्माच्च देवनिमित्तात् किल्बिषात् मुञ्चन्तु । यत्किञ्चिद्धि नास्ति पाप कर्त्तुः सम्बन्धि तत्किल्बिषमुच्यते ब्रह्महत्यादि ॥ ९० ॥

अवपतन्तीः अवाचीनं पतन्त्यः अवदन् उक्तवन्त्यः दिवस्परि दिवो द्युलोकात् ओषधयः किमवदन्निति । अत आह । यं जीवमनुत्क्रान्तप्राणम् । अश्नवामहै व्याप्नुमः । न स रिष्याति न विनश्यति पुरुषः । छान्दसं दीर्घत्वम् ॥ ९१ ॥

या ओषधीः । याः ओषधयः सोमराज्ञीः सोमो राजा यासामिति सोमराज्ञीः बह्वयः अनन्ताः शतविचक्षणाः बहुवीर्याः । बहवो वा स्तोतारो विचक्षणाः आसामिति बहुविचक्षणाः तासामोषधीनां मध्ये त्वं भवस्युत्तमा यतः अतः अलं कामाय भव शं च सुखं च हृदे हृदयाय भव ॥ ९२ ॥

या ओषधीः । या यूयमोषधयः सोमराज्ञीः सोम आसां राजेति विष्ठिताः विविधं स्थिताः पृथिवीमनु ताः बृहस्पतिप्रसुता अनुज्ञाताः अस्यै ओषध्यै संदत्तवीर्यं येनेयं बहुवीर्या भवतीत्यभिप्राय इति ॥ ९३ ॥

याश्च । ओषधयः इदं वचनमुपशृण्वन्ति । समीपावस्थिताः याश्चातिदूरं परागताः दूरदेशव्यवहिताः ताः संनिधानीकृत्वाहं ब्रवीमि सर्वाः संगत्य संभूय हे वीरुधो विरोहणा अस्यै संदत्त वीर्यं प्रभावम् ॥ ९४ ॥

मा वो रिषत् । मा नश्यतु । वः युष्माकं खनिता । यस्मै च पुरुषायाहं खनामि वः युष्मान् सोऽपि मा विनश्यतु । किञ्च द्विपात् स्त्रीपुंसं चतुष्पात् गवादि । संख्यासुपूर्वस्येति पादशब्दान्त्यलोपः । अस्माकं सर्वमस्त्वनातुरम् अनाकुलं युष्मत्प्रसादादिति शेषः ॥ ९५ ॥

ओषधयः सम् । ओषधयः समवदन्त संवादं कृतवत्यः सोमेन सह राज्ञा । सोमो हि ओषधीनां राजा । किं समवदन्त यस्मै पुरुषाय यस्य पुरुषादेः भैषज्यं कृणोति करोति ब्राह्मणस्तमातुरं हे सोम राजन् पारयामसि पारयाम उत्तारयामः व्याधेः सोमेन सार्द्धं संवादो व्याध्यपगमदृढीकरणार्थः ॥ ९६ ॥

नाशयित्री । क्लिनाशन्नित्री । बलमस्यति क्षिपतीति बलासः क्षयः अर्शसः शूलव्याधेः उपचितामसि उपचितां शरीरे ये उपचीयन्ते श्वयथुगडुश्लीपदप्रभृतयः तेषां च त्वं नाशयित्री असि भवसि अथो शतस्य यक्ष्माणाम् । अपि च बहूनां व्याधीनां नाशयित्री त्वमसि । पाकारोः । अरुः क्षतमुच्यते मुखपाकक्षतादेर्नाशनी त्वमसि । यद्वा रुच् दीप्तौ । अन्नपाकस्य अरुः अदीप्तिः मन्दाग्नित्वं तस्य च त्वमसि नाशनी ॥ ९७ ॥

यतश्च त्वामित्थम्भूतासि अतः त्वां गन्धर्वा अखनन् । अभिलषितकामप्राप्त्यर्थम् अखनन् । इन्द्रः त्वां त्वां च बृहस्पतिः त्वां च हे ओषधे सोमो राजा विद्वान् उपयोगं कृत्वा यक्ष्मात् महाव्याधेः । अमुच्यत मुक्तः ॥ ९८ ॥

सहस्व मे । अभिलषितकामप्राप्त्यर्थं यतस्त्वमित्थम्भूता अतोऽहं याचे सहस्वाभिभव । षह मर्षण इत्यस्मात् । मे मम अरातीः अदानशीलाः शत्रुसेनाः सहस्व चाभिभव च पृतनायतः पृतना संग्रामः संग्रामकामान् शत्रून्सहस्व सर्वं पाप्मानं सर्वमशुभम् । कस्मात्त्वमभिभवकर्म्मणि अस्माभिर्न्नियुज्यस इति चेत् यतः सहमानासि । अभिभवनशीलासि त्वं हे ओषधे ॥ ९९ ॥

दीर्घायुस्ते । पुनरपि त्वां प्रार्थयामः दीर्घायुस्तव हे ओषधे खनिता अहं भूयासं यस्मै च आतुराय त्वां खनामि स च दीर्घायुर्भूयात् । अथो अपि च त्वं दीर्घायुर्भूत्वा अनवखण्डितायुर्भूत्वा शतवल्शा वल्शशब्दोऽङ्कुरवचनः । बह्वङ्कुरा विरोहतात् । विरोह तुह्योस्तातङ्ङाशिषीत्यादिना तातङादेशः । अनवखण्डितमूला त्वमनेकैरङ्कुरैरुत्तिष्ठस्वेत्याशीः ॥ १०० ॥

त्वमुत्तमासि । हे ओषधे उत्तमा श्रेष्ठा त्वमसि भवसि तव वृक्षाः शालतमालादयः उपकाराय ओषधीनां तिष्ठन्तीत्युपस्तयः । तत्र हि ताः प्रसर्पन्ति । नच वृक्षाणां भोग्या भवन्ति । यथैते वृक्षा उपस्तयः एवं त्वत्प्रसादादुपस्तिरस्तु सः पुरुषोऽस्माकं यश्चास्मान् अभिदासति । दसु उपक्षये । अभिहन्ति ॥ १०१ ॥

चतस्रो लोकेष्टकाः चतसृभिर्ऋग्भिरुपदधाति । मा मा । कायी त्रिष्टुप् । मा मां हिंसीत् । पूर्वः प्रतिषेधार्थीयः उत्तरः अस्मदादेशः । मा हिंसीत् मां जनिता यः पृथिव्याः । जनिता मन्त्र इति णिचो लोपः

जनिता यः पृथिव्याः प्रजापतिः यो वा दिवं सत्यधर्म्मा व्यानट्। वाशब्दः समुच्चयार्थीयः व्यानडिति व्याप्तिकर्म्मा। श्रुत्या तु सृजतेरर्थे व्याख्यातः। यश्च दिवं सत्यधर्म्मा सत्यधारणः व्यानट् असृजत् यश्चापश्चन्द्रः प्रथमो जजान मनुष्या वा आपश्चन्द्रा इति श्रुतिः। मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्रलोकं पितृमार्गानुसारिणः। यद्वा यश्चापः चापनीयाः प्रथमः शरीरी जनितवान् अपां चापनीयानां कारणभूतानां जननेन यो मनुष्यान् जनितवानिति कारणे कार्योपचारः। कस्मै य इत्थम्भूतः कः प्रजापतिः तस्मै कस्मैकाय इति प्राप्ते स्मै आदेशश्छान्दसः। सर्वनाम्नः स्मै इति हि पाणिनिः नचैतत्सर्वनाम देवतात्वात्। प्रजापतये देवाय हविषा हविरिति विभक्तिव्यत्ययः। विदधातिर्दानकर्म्मा। कस्मै देवाय हविर्देम इति सम्बन्धः॥ १०२॥

दक्षिणत उपदधाति। अभ्यावर्तस्व। पार्थिवी आग्नेयी वा पर उष्णिक्। अभ्यावर्त्तस्व अभिमुखीभव आवृत्यावृत्त्यार्णवं हे पृथिवि यज्ञेन यज्ञसाधनभूतेन हविर्भूतेन पयसा च सह। कस्मात्कारणादित्यत आह वपां ते। वपां पृष्ठे ते तव अग्निः इषितः प्रजापतिप्रेषितः अरोहत् आरूढवान्॥ १०३॥

पश्चादुपदधाति। अग्ने यत्ते। आग्नेयी गायत्री। हे अग्ने यत्ते तव शुक्रं सारं शुक्लं वा यच्चन्द्रमाह्लादनीयम्। चादि आह्लादने। यच्च पूतं पवित्रं यच्च यज्ञियं यज्ञार्हं तद्देवेभ्योऽर्थाय देवेभ्यो वा सकाशात् भरामसि सम्भरामः॥ १०४॥

उत्तरत उपदधाति इषमूर्जम्। त्रिष्टुप्। आशीःप्रायो मन्त्रः अस्मिन्मन्त्रे विशेषणविशेष्यभावात् यत्तद्भ्यां वाक्यपरिपूर्त्तिः क्रियते। यथा यत् इषमन्नं यच्च ऊर्जं तदुपसेचनं दधिपयोघृतादिकम्। अहम्। इतः उदीच्या दिशः आदम्। आददे गृहीतवान् यच्च ऋतस्य सत्यस्य योनिं स्थानं तिस्रो विद्या अहमाददे। यच्च महिषस्य महतः इच्छावतः स्थावरस्याग्नेर्धाराम्। आहुतिमहमाददे उदीच्या दिशः। एतत्सर्वम्। आ मा गोषु विशत्वा तनूषु। आविशतु मां गोषु च तनुषु च पुत्रपौत्रादिकासु। सिकताः प्रमार्ष्टि। प्रध्वंसयति जहामि परित्यजामि। उदीच्यां दिशि स्थापयामि सेदिम्। अवसादम् अनिरामनन्नम्। अमीवां व्याधिम्॥ १०५॥

अग्ने तव । आग्नेयेन षड्ऋचेन सिकता निवपाति । अग्ने तव । प्रथमा विष्टारपाङ्क्तिः । चतस्रः सतोबृहत्यः । षष्ठी उपरिष्टात् ज्योतिः । हे अग्ने तव सम्बन्धी धूमः । श्रवो वयः । अमुष्मिन् लोके श्रावयतीति श्रवः । वयोऽन्नं तस्याहुतिपरिणामद्वारेण निमित्तभूतत्वाद् धूमो वय इत्युच्यते । धूमो वा अस्य श्रवो वयः स ह्येनममुष्मिन् लोके श्रावयतीति श्रुतिः । एवम्प्रभावस्तव धूमः । अथ महि महत् भ्राजन्ते अर्च्चयोऽर्च्चींषि इति लिङ्गव्यत्ययः । हे विभावसो विभूतधन किञ्च बृहद्भानो महार्दाते शवसा बलेन सहितं वाजमन्नम् । उक्थ्यम् । उक्थार्हं यज्ञार्हं दधासि ददासि दाशुषे हवींषि दत्तवते यजमानाय कवे क्रान्तदर्शन ॥ १०६ ॥

पावकवर्चाः । हे अग्ने यस्त्वं पावकवर्च्चाः पावकशक्तिः शुक्रवर्चाश्च शुक्रशक्तिश्च अनूनवर्च्चाश्चापरिहीनशक्तिः सन्नन्यूनशक्तिर्वा । उदियर्षि उद्गच्छसि भानुना दीप्त्या । यश्च त्वं पुत्र इव मातरा मातापितरौ उत्तमे वयसि विचरन्नुपचरन्नुपावासि उपसङ्गम्य पालयसि सदेवमनुष्यं जगत् । यश्च त्वं पृणक्षि पूरयसि रोदसी द्यावापृथिव्यौ । उभे अपि इमे वै द्यावापृथिवी रोदसी ते एष उभे पृणक्ति धूमेनामूं वृष्ट्येमामिति श्रुतिः । तं त्वां स्तुम इति वाक्यशेषः ॥१०७॥

ऊर्जो नपात् । ऊर्जशब्देनाप उच्यन्ते । नपाच्छब्देन पौत्रः । अद्भ्यः ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्योऽग्निर्जायते एवमपां नपादग्निर्जातवेदः जातप्रज्ञानः सुशस्तिभिः साधुसंस्तुतैः स्तुत इति शेषः । मन्दस्व दीप्यस्व धीतिभिः कर्म्मभिः निमित्तभूतैः हितो निहितः स्थापितः । कस्मात्त्वां वयमेवं ब्रूम इत्यपेक्षायामाह त्वे इषः सन्दधुर्भूरिवर्प्पसः । त्वे त्वयि इषः अन्नानि सन्दधुः धारयामासुः । भूरिवर्पसः वर्प इति रूपनाम । बहुरूपा यजमानाः सकामत्वेनोपगताः । चित्रोतयः चायनीयानि अवनानि तर्पणानि येषां ते चित्रोतयः वामजाताः । वननीयजन्मानः विशिष्टदेशजातिकुलोत्पन्नाः अतस्त्वं मन्दस्वेति सम्बन्धः ॥ १०८ ॥

इरज्यन् । उपरितनोऽर्द्धर्चः प्रथमं व्याख्यायते । स इत्यस्य पदस्य स्थाने यदो वृत्तिः । सर्वनामसामान्याद् वाक्यवशाच्च विभक्तिव्यत्ययोऽत्र कर्तव्यः । स दर्शतस्य वपुषो विराजसि । यस्त्वं दर्शनीयेन वपुषा शरीरेण ज्वालालक्षणेन विराजसि देदीप्यसे । पृणक्षि

पूरयसि च सानसिं चिरन्तनं क्रतुं सङ्कल्पं तं त्वां ब्रवीमि इरज्यन् दरीदृश्यमान प्रथयस्व पृथुर्भव । स्वार्थे णिच् । जन्तुभिर्म्मनुष्यैः अध्वर्युप्रभृतिभिः दीप्यमान इति शेषः । अस्मे अस्मासु च रायो धनानि धारयन् स्थापयन् प्रथयस्वेत्यनुषज्यते । अमर्त्य हे अमरणधर्म्मन् ॥ १०९ ॥

इष्कर्त्तारम् । निस उपसर्गस्यादिलोपः । निश्चयेन कर्त्तारमध्वरस्य यज्ञस्य प्रचेतसं प्रकृष्टप्रज्ञानं क्षयन्तम् । क्षि निवासगत्योः । क्षयन्तं निवसन्तं राधसो महः । राध इति धननाम । सप्तम्यर्थे षष्ठी । राधसि महति तं त्वां स्तुमः स त्वं रातिं दानं दधासि कस्य संबन्धिनीं वामस्य वननीयस्य दातुः संबन्धिनीम् । कथंभूतं सुभगां भगशब्दो धनवचनः । शोभनधनम् । किञ्च महीमिषं महतीं च इषं वृष्टिम् । अन्नं वा दधासि सानसिं पुराणं च रयिं धनमस्मर्थमाणविषयं निधानलक्षणं दधासि ॥ ११० ॥

ऋतावानम् । यं त्वाम् । ऋतावानं सत्यवन्तं महिषं महान्तम् । विश्वदर्शतं सर्वस्य दर्शनीयमग्निम् । अन्यदेवतानि वृत्यर्थोऽग्निशब्दः सुम्नाय यज्ञाय दधिरे स्थापितवन्तः पुरोऽग्रे आहवनीयात्मना जनाः यजमानाः । तं त्वां श्रुत्कर्णं शृणोत्याह्वानं श्रुत्वा चानुतिष्ठति यः स श्रुत्कर्णः सप्रथस्तमम् । सर्वतः पृथुतमं तिर्यगूर्ध्वमधोऽनवच्छिन्नगतिविज्ञानं गिरा वाचा स्तुत्या । दैव्यं देवं स्वार्थे यत्प्रत्ययः । मानुषा मनुष्याः युगा युगशब्दः कालवचनः । कालैर्निमित्तभूतैः पौर्णमास्यमावास्यादिभिराह्वयन्ति ॥ १११ ॥

सिकता अभिमृशति । आप्यायस्व । तिस्रः सौम्या गायत्रीत्रिष्टुबुष्णिहः द्वाभ्यां विनियोगः आप्यायस्व आत्मानमभिवर्द्धय । कथं कृत्वा समेतु ते । समागच्छतु तव विश्वतः सर्वतः हे सोम वृष्ण्यं सर्वभूतबीजं ततस्त्वं सर्वभूतोत्पत्तिना वृष्ण्येन भव वाजस्यान्नस्य संगथे संगमने अन्नभावम् । आप्नुहि अन्नं वाप्नुहि अनुभावं वा ॥ ११२ ॥

सन्ते पयांसि । संयन्तु ते तव पयांसि रसाः सारभूताः संयन्तु च वाजाः अन्नानि संयन्तु पयांसि । संयन्तु ते तव पयांसि रसाः सारभूताः संयन्तु च वाजाः अन्नानि संयन्तु वृष्ण्यानि रेतांसि अभिमातिषाहः पाप्मनोऽभिभवितुः सोमस्य ततस्तु तैः पयोऽन्न-

वृष्ण्यैराप्यायमानो अमृताय भव प्रजात्यै अमरणधर्म्मिण्यै भव प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृतेति श्रुतिः । हे सोम ततो दिवि द्युलोके श्रवांसि इन्दुरूपाणि उत्तमान्याहुतिपरिणामजनितानि धिष्व धारयस्व ॥ ११३ ॥

आप्यायस्व । हे सोम त्वमात्मानमाप्यायस्व मदिन्तम मदयितृतम । यद्वा मदोऽस्यास्तीति मदी अतिशयेन मदी मदिन्तमः । नाद्घस्येति नुम् । विश्वेभिः सर्वैरंशुभिः ततः समर्थः सन् भव नः अस्माकं स प्रथस्तमः सखा सर्वतः प्रथयितृतमः सखा वृधे वर्द्धनाय ॥ ११४ ॥

होत्रम् । आ ते वत्सः आग्नेय्यस्तिस्रो गायत्र्यः । हे अग्ने आयमत् । निगृहीतवान् ते तव वत्सः पयोजीवनसामान्यात् यजमानो वत्स उक्तः । स हि पयोव्रतो भवति । मनः अन्तःकरणं परमात्सधस्थात् । चिच्छब्द अप्यर्थः । परमादपि सहस्थानादाहृत्येति शेषः । सहस्थाने देवैः समानं स्थानं द्युलोकोऽग्निः केन वत्सो मन आयमत् इत्यत आह त्वां कामया त्वां स्तोतुं कामयमानया गिरा वाचा ॥ ११५ ॥

तुभ्यं ताः । तुभ्यं हवींषि दत्त्वा यजमानैः ततोऽनन्तरन्ताः स्तुतयः हे अङ्गिरस्तम अग्नं गिरतीत्यङ्गिराः अतिशयेनाग्नं गिरत्यङ्गिरस्तमः तस्य संबोधनमङ्गिरस्तम हे अग्ने विश्वाः सर्वाः सुक्षितयः शोभननिवसनाः स्थानकरणानुप्रदानवत्यो देवता याथात्म्यसंतानचिन्तनगर्भाः पृथग्ज्ञानाभूताः हे अग्ने कामाय कामपरिपूरणार्थं त्वय्येव त्वदीयकर्म्मणि येमिरे । लिटि कर्मणि लकारः । नियम्यन्ते स्तुतयः ॥ ११६ ॥

अग्निः प्रियेषु । योऽग्निः प्रियेषु अभिरुचितेषु धामसु स्थानेष्ववस्थितानां कामः कामपरिपूरकः स भूतस्योत्पन्नस्य प्राणिजातस्य भव्यस्य च भविष्यतः सम्राट् संगतराजभावः सन् एक एवासहायः विराजति । इष्टे अधिपतिः विविधं दीप्यते वा ॥ ११७ ॥

इति श्रीमदुव्वटकृतौ मन्त्रभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीः । मयि गृह्णामीति यजमानो जपति । आग्नेयी ककुप् । मयि आत्मनि गृह्णामि अग्रे प्रथममग्निदर्शनेन ततोऽग्निं चिनोमीति शेषः । किमर्थं रायस्पोषाय धनपोषाय सुप्रजास्त्वाय सुवीर्याय वीर्यं शक्तिः । किञ्च मामु देवताः सचन्तां मामेव देवताः सचन्तां सेवन्ताम् । अग्निमिव ॥ १ ॥

पुष्करपर्णमुपदधाति । अपां पृष्ठमिति व्याख्यातम् ॥ २ ॥

रुक्ममुपदधाति । ब्रह्म जज्ञानम् । त्रिष्टुप् । आदित्यो देवता ब्रह्मलक्षणया आदित्यो जज्ञानं जायमानं प्रथमं पुरस्तात्प्राच्यां दिशि जायते ततोऽनन्तरं वि सीमतः सुरुचो वेन आवः । व्यावः व्यावृणोत् विवृतानकरोत् स्वप्रकाशेन सीमन्तः मध्यतः मर्यादातः सुरुचः सुरोचनानिमांल्लोकान्वेनः कान्तो मेधावी वा आदित्यः स एव बुध्न्याः बुध्नमन्तरिक्षं तत्र भवा दिशः बुध्न्याः उपमाः उपमीयन्ते आसु स्थितानि भूतानीत्युपमाः दिशः । अस्य विष्ठाः अस्य जगतो विविधं स्थानमिति विष्ठाः दिशः सतश्च योनिं विद्यमानस्य च मूर्त्तस्य योनिं स्थानम् । असतश्च वाय्वादेरमूर्त्तस्य योनिं प्रभवः । विवः विवृणोति आदित्यः एवं लोकान् दिशो भूतानि अभिव्यनक्ति नान्य इति स्तूयते । स्वकीयेन कर्म्मणा ॥ ३ ॥

पुरुषमुपदधाति । द्वाभ्यां त्रिष्टुब्भ्याम् । स प्रजापतिः सोऽग्निः अधियज्ञं स यजमानः । हिरण्यगर्भः । यो हिरण्यगर्भाख्यः पुरुषः समवर्त्तताग्रे समभवदग्रे प्रथमं शरीरी यश्च भूतस्योत्पन्नस्य प्राणिजातस्य जातः जातमात्रः पतिः ईश्वरः एक आसीदद्वितीय एवासीदभूत् । स दाधार । तदः स्थाने यदो वृत्तिः अर्थसंभवात् । यश्च दधार धारयति पृथिवीमन्तरिक्षलोकं पृथिवीशब्देनान्तरिक्षमप्युच्यते । पृथिवी भूः स्वयम्भूरित्यादेः अन्तरिक्षनामसु पठितत्वात् । द्यां द्युलोकं च उत अपि इमां पृथिवीं कस्मै काय इति प्राप्ते स्मै-आदेशः छान्दसः। प्रजापतये देवाय हविषा विधेम हविर्दद्म इति विभक्तिव्यत्ययः ॥ ४ ॥

द्रप्सश्चस्कन्द । अस्यामृच्यादित्यो देवता यथा सर्वं बिभर्त्ति

पालयति च तथोच्यते । य आहुतिपरिणामरसनिधानभूतो द्रप्स आदित्यश्चस्कन्द पृथिवीम् । उदकरूपेण पृथिवीं स्कन्दति मनुष्यादिधारणाय । यश्च द्युलोकमनुस्कन्दति आहुतिपरिणामभूतेन रसेन देवादिधारणाय । इमं च योनिमनु यश्च पूर्वः । इमं च लोकं स्कन्दति आहुतिग्रहणाय यश्च अनुस्कन्दति पूर्वयोनिम् अमुं लोकं सुकृतिनां तर्पणाय तमेवं समानं योनिस्थानमनुसंचरन्तं द्रप्समादित्यं जुहोमि स्थापयामि । अनुसप्त होत्राः सप्तस्वपि हि दिक्षु आदित्यो द्रप्सो दिशः सप्त होत्राः अमुं तदादित्यं दिक्षु प्रतिष्ठापयन्तीति श्रुतिः । तिर्यक् चतस्रो दिशः अध एका उपर्येका मध्ये एका एताः सप्त दिशः ॥ ५ ॥

सर्पनामभिरुपतिष्ठते । नमोऽस्तु । तिस्रोऽनुष्टुभः सर्पदेवत्याः । लोका वा सर्पाः । नमस्कारोऽस्तु सर्पेभ्यः । ये केच पृथिवीमनु व्यवस्थिताः ये चान्तरिक्षे ये च दिवि व्यवस्थिताः तेभ्यः सर्पेभ्यो नमः नमस्कारोऽस्तु ॥ ६ ॥

या इषवः । यानि काण्डानि यातुधानानाम् । यातुं यातनां दुःखं ये दधति ते यातुधानाः रक्षःप्रभृतयः । ये च वनस्पतीननुव्यवस्थिताः ये वावटेषु बिलेषु शेरते आसते तेभ्यः सर्पेभ्यो नमः ॥ ७ ॥

ये वा । ये च वामी प्रत्यक्षाः । अदूरतो निर्दिशति सर्पान् रोचने दिवः । रोचनो ह नामैष लोको यत्रैष एतत् तपतीति श्रुतिः । ये च सूर्यस्य रश्मिषु स्थिताः येषां चाप्सु सदस्कृतम् । उदके स्थानं कृतं तेभ्यः सर्पेभ्यो नमः ॥ ८ ॥

जुहोति । कृणुष्व पाजः । पञ्च त्रिष्टुभः आग्नेय्यः रक्षोघ्न्यः । हे अग्ने कृणुष्व पाजः । पाज इति बलनामसु पठितम् । कुरुष्व बलं प्रसितिं न पृथ्वीम् । प्रसितिः प्रसयनात् तन्तुर्वा जालं वा । नकार उपमार्थीयः । उपरिष्टादुपचारः । अथ कोऽर्थः । प्रकुरुष्व बलं वागुरामिव पृथ्वीम् । यद्वा जालमिव पृथु । ततो याहि राजेव अमवानामात्यवान् भूत्वा अभ्यमनवान्वा भूत्वा अभ्यमनं शत्रूणां भयात् अप्रातिपक्षकरणं गृहवान् वा भूत्वा । अमाशब्दो गृहवचनः । शत्रून्प्रति याहि इभेन इभभवेन बलेन । यद्वा इभेन हस्तिना गत्वा च तृष्वीमनु प्रसितिं द्रूणानः । तृष्व्या प्रसित्येति विभक्तिव्यत्ययः । द्रूणान इति हिंसाकर्म्मा । यतश्च त्वं तृष्व्या क्षिप्रया प्रसित्या तन्तुना

जालेन वा द्रूणानो हिंसन् अस्तासि क्षेप्तासि विकटः क्षेप्ता असि । अतो ब्रवीमि विध्य मारय हिन्धि रक्षसस्तपिष्ठैस्तप्ततमैः प्रहारैः । यद्वा तीव्रतप्ततमैः अतिक्लेशकरैः ॥ ९ ॥

तव भ्रमासः । हे अग्ने ये एते तव भ्रमासः भ्रमणाः वातोद्धताः ज्वालासमूहाः आशुयाः आशवः । जसः स्थाने याः । पतन्ति इतश्चेतश्च गच्छन्ति तैः अनुस्पृश अभिमृश धृषता धृष्टेन ज्वालासमूहेन शोशुचानो दीप्यमानः । कान्यनुस्पृशेत्यत आह तपूंषि तापयितॄणि रक्षांसि जुह्वा स्रुचा हूयमान इति शेषः । पतङ्गान् पतनगमनानि । रक्षांसि । किञ्च असन्दितः । दो अवखण्डने अनवखण्डितः सन् विसृज विक्षिप । विष्वक् विष्वक्शब्दो नानावचनः । अञ्चतिर्गत्यर्थः । नानागमनाः तिर्यगूर्ध्वमधश्चेत्यर्थः । उल्काः रक्षोभिघाताय ॥ १० ॥

प्रति स्पशः । अत्र तृतीयः पादः प्रथमो व्याख्येयो यच्छब्दयोगात् । यो नो दूरे अघशंसः । योऽस्माकं दूरे वसति अघशंसः पापस्योत्कीर्तको दुर्जनः । योऽन्तिके । यश्च अन्तिके एव वसति अघशंसः तं प्रति स्पशः विसृज । स्पश बन्धने । स्पशयन्तीति स्पशः प्राणिधीन् बन्धनान् विसृज प्रेषय तूर्णितमः अतिशयेन त्वरन् । किञ्च भवा पायुः पालयिता विशः जनपदजातेः अस्या मदीयाया अदब्धः अनुपहिंस्यः एवं च तवास्मदनुग्रहप्रवृत्तस्य सतः । हे अग्ने मा किः मा कश्चित्ते तव व्यथिः व्यथयिता शत्रुः आदधर्षीत् प्रत्यनीकोऽभूत् ॥ ११ ॥

उदग्ने तिष्ठ । उत्तिष्ठ हे अग्ने किञ्च प्रत्यातनुष्व प्रत्यातनुहि विस्तारय ज्वालाप्राग्भारान् ज्वालासमूहान् किञ्चान्यमित्रान् ओषतात् न्योषतात् निर्दहामित्रान् हे तिग्महेते । हेतिरायुधं तिग्मं तेजनेरुत्साहकर्म्मणः उत्साहवत् आयुधं यस्य स तथोक्तः । किञ्च यश्च नः अस्माकम् । अरातिमदानं चक्रे न ददात्यश्रद्धालुः । हे समिधान समिध्यमान । नीचा नीचैः कृत्वा तं धक्षि । दह भस्मीकरणे । इत्यस्मात् । अतसन्न । अतसो वृक्षः नकार उपमार्थीयः वृक्षमिव शुष्कम् ॥ १२ ॥

ऊर्ध्वो भव । ऊर्ध्वस्तिष्ठ स्थित्वा च प्रतिविध्य प्रतिताडय । अध्यस्मत् अस्मदुपरि व्यवस्थितात् । किञ्च आविष्कृणुष्व प्रकाशीकुरु दैव्यानि कर्म्माणि हे अग्ने । किञ्च अव स्थिरा तनुहि । अवतनु-

हि अवतारय स्थिराणि धनूंषि यातुजूनां यातुधानानां जवनप्रधानानाम् । किञ्च यज्ञस्य जामिमजामिम् । जामिशब्दः पुनरुक्तवचनः । अजामिशब्दः अपुनरुक्तवचनः । पुनरुक्तमपुनरुक्तं कृत्वा प्रमृणीहि । प्रमृणातिमारणार्थः प्रमारय शत्रून् । प्रथमां स्रुचमुपदधाति । आग्नेयेन यजुषा ऋचा वा । अग्नेष्ट्वा । अग्नेः सम्बन्धिना तेजसा त्वां सादयामि हे स्रुक् ॥ १३ ॥

अग्निर्मूर्द्धा व्याख्यातम् । द्वितीयमुपदधाति । ऐन्द्रेण यजुषा आग्नेय्या च त्रिष्टुभा ऋचा । इन्द्रस्य त्वा ओजसा बलेन सादयामि ॥ १४ ॥

भुवो यज्ञस्य । चतुर्थः पादः प्रथमं व्याख्यायते अर्थसम्बन्धात् तदा जिह्वां ज्वालालक्षणां हे अग्ने चक्रिषे करोषि हव्यवाहं हविषां वोढ्रीम् । अथानन्तरमेव भुवः भवसि । यज्ञस्य द्रव्यदेवतात्यागात्मनो नेता देवयानपितृयानमार्गानुसारिणः । रजसश्चोदकस्य च यज्ञपरिणामलक्षणस्य नेता भवसि जगदुत्पत्त्यर्थम् । कुत्र नेता भवसीत्यत आह यत्र यस्मिन्स्थाने नियुद्भिः नियुद्गुणविशिष्टाभिरश्वाभिः शिवाभिः सहितं वायुं सचसे सेवसे । नियुतो वायोरित्यादि ष्टोपयोजनानि इति नियुद्भिः वायुर्लक्ष्यते वायुनान्तरिक्षं यत्र च दिवि द्युलोके मूर्द्धानमादित्यं दधिषे धारयसि । स्वर्षाम् । स्वः द्युलोकं सनोतीति स्वर्षास्तां स्वर्षां तत्र भवसि यज्ञस्य रजसश्च नेतेति यस्य तवैतत्कर्म्म तं त्वां सादयाम इति शेषः ॥ १५ ॥

स्वयमातृण्णां पृथिवीसंयुतामिष्टकामुपदधाति ध्रुवासीति । तिसृभिर्ऋग्भिः ऊर्ध्वं बृहस्पत्यनुष्टुप्प्रस्तारपाङ्क्तिभिः । विश्वस्मै प्राणायेत्यादिना यजुषा च ध्रुवासि स्थिरासि स्वत एव धरुणा अन्येषां च धारयित्री आस्तृता विश्वकर्म्मणा । उपाहितासि विश्वकर्म्मणा प्रजापतिना सर्वस्य कर्त्रा एवं चेदतो ब्रवीमि मा त्वां समुद्र उद्बधीत् रुक्मो वै समुद्रः पुरुषः सुपर्ण इति श्रुतिः । त्वं चाव्यथमाना अचलन्ती पृथिवीं दृंह दृढीकुरु । आत्मसात्कुर्वित्यभिप्रायः ॥ १६ ॥

प्रजापतिष्ट्वा । प्रजापतिस्त्वां सादयतु । स हि त्वामासादयितुं समर्थः अपां पृष्ठे अपामुपरि समुद्रस्योदकसंघातस्य एमन् एमनि । इणः मनिन् । सप्तम्येकवचनम् । अवसाने कथम्भूतामासादयतु व्यचस्वतीं व्यञ्जनवतीं प्रथस्वतीं पृथुत्वयुक्तां त्वाम् । त्वं च आसा-

तिषमुपदधाति । प्रजापतिस्त्वां सादयतु । पृष्ठे पृथिव्याः उपरि पृथिव्याः ज्योतिष्मतीं ज्योतिषा संयुक्तां विश्वस्मै सर्वस्मै प्राणाय अपानाय व्यानाय । किञ्च विश्वं ज्योतिर्यच्छ गृहाण्व अग्निश्च तवाधिपतिः सादयति तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥ २४ ॥

ऋतव्ये उपदधाति । मधुश्च माधवश्च वासन्तिकावृतू । वसन्त ऋतुरुच्यते । यस्त्वं मधुश्च माधवश्च चैत्रश्च वैशाखश्च वसन्त ऋतुः । स्वार्थे तद्धितः । ऋतू इति द्विवचनमेकवचनस्य स्थानेऽर्थसम्बन्धात् । यश्च त्वमग्नेः संवत्सराख्यस्य अन्तः श्लेषोऽसि अन्तमध्ये व्यवस्थितः श्लेषकोऽसि तस्य तव कल्पेतां द्यावापृथिव्यौ ज्यैष्ठ्याय ज्येष्ठभावायेत्यनुषङ्गः । कल्पन्तां चाप ओषधयः ज्यैष्ठ्याय कल्पन्तां चाग्नयः पृथक् मम ज्यैष्ठ्याय । अग्नयो हैते पृथग्यदेताः इष्टका इति श्रुतिः । मम । तवेति प्राप्ते ममेति व्यत्ययश्छान्दसः । अथ कोऽर्थः कल्पन्तामिष्टकाः स्वयमातृण्णादयः नानाभूतास्तव ज्यैष्ठ्याय सव्रताः समानकर्माणः समानं हि कर्मेष्टकानामग्निचयनं नाम । किञ्च ये अग्नयः अन्यैरपि चिताः समनसः समानमनस्का अन्तरा मध्ये द्यावापृथिव्योरिमे वर्त्तन्ते तेऽपि वसन्तमृतुमभिकल्पमानाः । वासन्तिकाविति स्वार्थे तद्धितः । ऋतू इति द्विवचनमेकवचनस्यार्थे अभिकल्पमानाः अभिसंविशन्त्विति सम्बन्धः । कथमिव इन्द्रमिव देवाः । यथा इन्द्रं देवानां राजानं परिचरणाय देवा अभिसंविशन्ति एवमिमं वसन्तमृतुमन्या इष्टकाः परिचरणायाभिसंविशन्तु । सादयति तया देवतया । व्याख्यातम् ॥ २५ ॥

अषाढामुपदधाति । अषाढासि । सविता वा अपश्यद्देवा वा अपश्यत् । अनुष्टुप् । अषाढासि नाम्ना । ते देवा एतामिष्टकामपश्यन्नषाढामिमामेव तामुपदधत तामुपधायासुरान्सपत्नान् भ्रातृव्यानस्मात् सर्वस्मादसहन्त यदसहन्त तस्मादषाढेत्येतच्छ्रुत्यभिप्रायं नामकथनम् । सहमाना च अभिभवनशीलासि स्वभावतो यतोऽतस्त्वां ब्रवीमि सहस्वारातीः अभिभव अदानशीलान् । अभिभव च पृतनायतः । पृतनाः संग्राममिच्छतः । किञ्च या च त्वं सहस्रवीर्यासि बहुवीर्यासि सा मा जिन्व जिन्वतिः प्रीतिकर्म्मा प्रीणीहि ॥२६॥

कूर्म्मं दधिमधुघृतैरभ्यनक्ति मधुवाताः गायत्र्यस्त्र्यृचो वैश्वदेव्यः मधुमन्तो रसवन्तो वाताः वान्त्विति शेषः । कस्मै ऋतायते यज्ञमि-

च्छते मधु क्षरन्त्युदकं क्षरन्तु सिन्धवः स्यन्दमानाः नद्यः माध्वीर्नः अस्माकं मधुमत्यः सन्तु भवन्तु । ओषधीरोषधयः ॥ २७ ॥

मधु नक्तम् । मधुमत् नक्तं रात्रिरस्तु उत अपि उषसः मधुमत्यः सन्तु मधुमत् रसवत् पार्थिवं रजः पृथ्वीलोकः अस्तु मातृभूतः । मधुमदित्ययं मतुप् सर्वेषां मधुशब्दानामनुषङ्गो द्रष्टव्यः साकाङ्क्षत्वात् । मधु द्यौरस्तु नः पिता मधुमती द्यौःअस्माकं पितृभूता ॥२८॥

मधुमान्नः मधुमान् रसवान्नः अस्माकं वनस्पतिः यज्ञस्य साधनभूतोऽस्तु सोमो वा वनस्पतिः मधुमानस्तु सूर्यो यज्ञसाधनभूतः माध्वीः मधुमत्यो रसवत्यो गावो यज्ञसाधनभूता रश्मयो वा भवन्तु नोऽस्माकम् । रसो वा मध्विति श्रुतिः । वातादीनि रसवन्त्यस्माकं भोग्यानि सन्त्विति समस्तार्थः ॥ २९ ॥

उपदधाति । अपां गम्भन् । तिसृभिः पङ्क्तित्रिष्टुब्गायत्रीभिः । द्वे कूर्म्मदेवत्ये । कूर्म्मश्च प्रजापतिरादित्यो वा उत्तरा द्यावापृथिवीयाः । अपां गभीरे प्रदेशे सीद उपविश । एतद्वाऽपां गम्भिष्ठं यत्रैष एतत्तपतीति श्रुतिः । तत्र चोपविष्टं सन्तं गर्भे मा त्वा सूर्यः अभिताप्सीत् । अभितापयेत् । मा च त्वामग्निर्वैश्वानरः अभितापयेत् । त्वं च अच्छिन्नपत्राः प्रजा अनुवीक्षस्व । प्रजा इष्टका उच्यन्ते । अच्छिन्नपत्रा इति व्याख्यातं श्रुत्या अच्छिन्ना अनार्त्ता इति । अनवखण्डितयोगक्षेमा इष्टकाः दर्शनेन कुर्वित्यर्थः । अनु त्वा दिव्या वृष्टिः सचताम् । अनुसेवतां त्वां दिवि भवा वृष्टिरिति प्रियं वचनं दिव्येनोदकेन सिञ्चयस्वेति ॥ ३० ॥

एजयति । त्रीन्समुद्रान् समसृपत् । यस्त्वं त्रींल्लोकान् त्रीन्समुद्रान् समसृपत् समसृप इति पुरुषव्यत्ययः संसृप्तोऽसि स्वर्गान् स्वर्गहेतून् यश्च त्वमपां पतिः वृषभश्च वर्षिता भर्त्ता इष्टकानां तं त्वां ब्रवीमि पुरीषं वसानः पशूनाच्छादयन् सुकृतस्य शोभनकृतस्याग्नेः लोके स्थाने स्थित्वा तत्र गच्छ यत्र पूर्वे कूर्म्माः अन्येष्वग्निषूपाहिताः सन्तः परेताः परागताः ॥ ३१ ॥

मही द्यौः व्याख्यातम् ॥ ३२ ॥

उलूखलमुसले उपदधाति । विष्णोः कर्म्माणीति व्याख्यातम् ॥ ३३ ॥

उखामुपदधाति द्वाभ्यां त्रिष्टुब्बृहतीभ्याम् । ध्रुवासि स्थिरासि धरुणा धारणीया च इदानीमग्न्यपत्यद्वारेण सोखास्तूयते । य

इतः उत्पातः यद्वे जातः प्रथमं ततोऽनन्तरमेभ्यो लोकेभ्यः सकाशा-
ज्जातवेदाः जातप्रज्ञानः स इदानीं गायत्र्या त्रिष्टुभानुष्टुभा च स-
हितः देवेभ्योऽर्थाय हव्यं हविर्वहतु प्रजानन् स्वमधिकारं जानानः॥३४॥

इषे राये। उषोच्यते। इषे अन्नाय राये धनाय रमस्व रतिं बध्नीहि
सहसे बलाय। द्युम्ने द्युमन् द्योतते: यशोऽन्नं वा ऊर्जे उपसेचनाय पयो-
दाधिघृतादिकाय अपत्याय पुत्रपौत्रादिकाय रमस्वेति सर्वत्र सम्बध्य-
ते। किञ्च सम्राडसि सङ्गतराज्यभावासि। स्वराडसि स्वाराज्य-
युक्तासि। सारस्वतौ सरस्वतीसम्बन्धिनौ त्वा त्वामुत्सौ उत्स्यन्द-
नौ कूपौ वा प्रस्रवणौ प्रवाहौ वा। कौ तौ। मनश्च वाक्च। मनस्ता-
वत्सर्वशास्त्रपरिज्ञानं कूप इवोत्स्यन्दति वागपि तत्प्रतिपादनं कु-
र्वती। मनो वै सरस्वान् वाग्वै सरस्वत्येतौ सारस्वतावुत्साववि-
ति श्रुतिः। प्रावताम् अवतिः पालनार्थः। प्रकर्षेण पालयताम् ॥३५॥

द्वाभ्यामाग्नेयीभ्यां गायत्रीभ्यां जुहोति। अग्ने युक्ष्वा हि। अग्ने यु-
क्ष्व। हिशब्दः पादपूरणार्थः। ये तव स्वभूताः अश्वासः अश्वा ए-
वाश्वासः। हे देव दानादिगुणयुक्त साधवो जातिगुणसमन्विताः
प्रशस्ताः अरमलं पर्याप्तं च वहन्ति मन्यवे दीप्तये क्रोधाय वा ॥३६॥

युक्ष्वा हि देवहूतमानिति। ये अतिशयेन देवान् आह्वयन्ति तान्
युङ्क्ष्वाश्वान्। हे अग्ने रथीरिव ईकारो मत्वर्थीयः। कस्मात्पुनस्त्व-
मेवमुच्यसे यतः निहोता पूर्व्यः सदः निषदः निषीदसि होतृषदने
होत्रासने होता पूर्व्यः मानुषाद्धोतुः प्रथमः अग्न्यः। तदुक्तम्। अ-
व्याद्यज्ञं जातवेदाः। अन्तरः पूर्वोऽस्मिन्निषद्येति ॥ ३७ ॥

मुखप्रभृतिषु सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान्प्रास्यति।
सम्यक् स्रवन्ति। त्रिष्टुप्। हिरण्मयपुरुषाध्यासेनायं मन्त्रो व्या-
ख्यायते। सम्यक् संगताः स्रवन्ति क्षरन्ति। कथमिव। सरितो न।
यथा सरितो नद्यः समुद्रमभिस्रवन्ति। काः स्रवन्ति धेना अन्नानि
अन्नं वै धेना इति श्रुतिः। अन्तर्हृदा मनसा पूयमानाः। यजमानसं-
बन्धिना अन्तर्व्यवस्थितेन हृदा मनसा हृदयप्रतिष्ठितेन मनसा पू-
यमानाः पवित्रीक्रियमाणाः अन्तर्वै हृदयेन मनसा सतामन्नं पूनं यत्
ऋजुरिति श्रुतेः। यजमानो मनोवाक्कायकर्मभिरेकवृत्तिः। न केवलं
धेनाः स्रवन्ति किं तर्हि घृतस्य धाराः स्रवन्तीः अहमभिचाकशी-
मि पश्यामि योऽयं हिरण्ययः हिरण्मयः वेतसः पुरुषः मध्ये अ-

श्रेर्निहितः तत्र स्रवन्तीर्घृतस्य धारा अभिचाकशीमीति संबन्धः॥३८॥

ऋचे त्वा । बृहती नारिकयोः प्रास्यति ऋचे ऋग्वेदाय त्वा प्रास्यामीति शेषः । रुचे दीप्त्यै त्वां प्रास्यामीति शेषः । चक्षुषोः भासे त्वा ज्योतिषे त्वा तुल्यः शेषः श्रोत्रयोः अभूदिदं श्रोत्रं विश्वस्य भुवनस्य सर्वस्य भूतजातस्य वाजिनं वाग्जातमभूत् । श्रोत्रेण वाचो ज्ञायन्ते अग्नेर्वैश्वानरस्य च । चशब्दाद्वाजिनं वा ज्ञानमभूत् । अयमग्निर्वैश्वानरः इत्युपक्रम्य तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोतीत्येतदभिप्रायम् ॥ ३९ ॥

अग्निर्ज्योतिषा । उष्णिक् । द्वितीयोऽत्र प्रासनमन्त्रः । अग्निरेवज्योतिषा ज्योतिष्मान् अस्तु रुक्म इव वर्चसा वर्चस्वान् अस्तु श्रोत्रं पुरुषशिर उद्गृह्णाति । सहस्रदा असि बहुनो दातासि । एवं चेदतः सहस्राय त्वा उद्गृह्णामि ॥ ४० ॥

पुरुषशिर उपदधाति । आदित्यं गर्भम् । इत उत्तरं षट् त्रिष्टुभः । आदत्ते पशूनित्यादित्यः आदित्य इव वा दृष्टे सर्वेषां पशूनामित्यादित्यः । गृह्णाति पशूनिति गर्भश्चित्योऽग्निरुच्यते आदित्यं गर्भं पयसा दुग्धेन समङ्धि संम्रक्षय । पयसि पुरुषमुपदधाति । पशवो वै पयो यजमानं तत्पशुं प्रतिष्ठापयतीत्येतदभिप्रायम् । सहस्रस्य प्रतिमां बहुशः प्रतिमाभूतं विश्वरूपं सर्वरूपं सर्वाणि रूपाण्यादित्यस्यादित्यवच्चायं स्तूयते । परिवृङ्धि हरसा । परित्यज एनं हरसा वीर्यापहारकं ज्योतिरग्नेर्हर इत्युच्यते । माभिमंस्थाः । अभिपूर्वो मनिः हिंसार्थः । मा हिंसीः सर्वथा शतायुषं कृणुहि चीयमानः ॥ ४१ ॥

अश्वशिर उपदधाति । वातस्य जूतिम् । जूतिः गतिः प्रीतिर्वा । वातस्य गतिभूतं प्रीतिजनकं वा वरुणस्य नाभिं नाभिमिवान्तरं वरुणस्य अश्वं जज्ञानं सलिलस्य मध्ये अश्वं जायमानं सलिलस्योदकस्य मध्ये शिशुं प्रति नदीनां हरिं हरितवर्णम् । अद्रिबुध्नम् । अद्रिः पर्वतः तस्य बुध्नमादिः तत्र भवा आपः अद्रिबुध्न्याः इह तु अद्भ्यो जातोऽश्वः । अपत्यप्रत्ययलोपादद्रिबुध्नशब्देनोच्यते प्रकरणात् । हे अग्ने चित्य मा हिंसीः अश्वं मा बधीः परमे व्योमनि निषीदन्तम् । इमे वै लोकाः परमं व्योमेत्यधिलोकं व्याख्यातम् ॥४२॥

गामुपदधाति । अजस्रमिन्दुम् । यस्य तव संस्कारार्थमजस्रमनुप-

क्षीणमिन्दुं सोमं च अरुषम् अरोचनं भुरण्युं भर्त्तारं वाहदोहादिभिः अग्निमाग्नेयम् । ताद्धितलोपः । ईडे याचामि उपधानाय पूर्वचित्तिं प्राक् चयनं प्राचं ह्यग्निमुद्धरन्तीत्यग्न्यध्यासेन गोः स्तुतिः । नमोभिरन्नैरभ्युद्यतैः स त्वमेताभिः पश्चिष्टिकाभिः पर्वभूताभिः ऋतुशः ऋतावृतौ कल्पमानः अस्माभिः कल्पमानः गां मा हिंसीरदितिमदीनां विराजं दुग्धपानाद्विराड् गौरुच्यते । अन्नं गौर्गौर्वै प्रतिधुक् । तस्यै शृतं तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति ॥ ४३ ॥

अविमुपदधाति । वरूत्रीं वरान् वृणोति कम्बलादिनाच्छादयति त्वष्टुः वरुणस्य नाभिः । नभः वारुणी चाविः त्वाष्ट्री च । अविं जज्ञानां जायमानां रजसः परस्मात् । श्रोत्रं वै परं रजो दिशो वै श्रोत्रं दिशः परं रज इति श्रुतिः । महीं महतीं सहस्रोपकारक्षमाम् । असुरस्य असुमतः प्राणवतः प्रजावतो वरुणस्य मायां प्रज्ञां हे अग्ने मा हिंसीः । परमे व्योमन्निति व्याख्यातम् ॥ ४४ ॥

अजमुपदधाति । यो अग्निः । योऽजः अग्निः अग्नेरधिसकाशादजायत उत्पन्नः शोकात्पृथिव्याः अध्यजायत संतापात् । उत वा दिवस्परि अपि च दिवो ऽध्यजायत । यद्वै प्रजापतेः शोकादजायत तद् दिवश्च पृथिव्याश्च शोकादजायतेति श्रुतिः । येनाजेन प्रजा विश्वकर्मा प्रजापतिर्जजान जनितवान् । वाग्वा अजो वाचो वै प्रजापतिर्विश्वकर्मा जजानेति श्रुतिः । तमजं हे अग्ने हेडः क्रोधः परिवृणक्तु परिवर्जयतु ते तव सम्बन्धी ॥ ४५ ॥

चित्रं देवानां होमे व्याख्यातम् ॥ ४६ ॥

अथ पञ्चपशूनां शुच उत्सर्गः इमं मा हिंसीः पञ्च त्रिष्टुभः द्व्यवसाना उत्तराणि यजूंषि । पुरुषस्योत्सृजति । इमं पुरुषं मा हिंसीः शुचा । द्विपादं पशुं द्विपाद्वा एष पशुः यत्पुरुषः । सहस्राक्षः सन् हिरण्यसकलैः वा एष सहस्राक्षः मेधाय यज्ञाय अन्नाय वा चीयमानः चयनेन संस्क्रियमाणः मयुं पशुं मेधं हे अग्ने जुषस्व सेवस्व । किम्पुरुषो वै मयुः तेन किम्पुरुषेण चिन्वानः तन्वो निषीद । आत्मानं संस्कुरुष्व । इत उत्तरं यजुः । मयुं ते शुक् सन्तापः ऋच्छतु हिनस्तु । किञ्च यं पुरुषं वयं द्विष्मः तं तव शुगृच्छतु ॥ ४७ ॥

अथाश्वस्य । इमं मा हिंसीरेकशफं पशुम् । एकशफो वा एष

पशुर्यदश्वः कनिक्रदम् अत्यर्थं क्रन्दितारं वाजिनं वेगवन्तं वेगवत्सु मध्ये व्यवस्थितं गौरं गौरमृगम् । आरण्यम् । अरण्ये जातमनुदिशामि ते तव । तेन चिन्वान इति व्याख्यातम् ॥ ४८ ॥

अथ गोः । इमं साहस्रम् । साहस्रꣳशतधारं शतवेगवन्तम् । उत्सम् । उत्सः कूपः बहुस्रोतसमिव कूपं बहु उपकारकं च वाहदोहादिभिः व्यच्यमानं सरिरस्य मध्ये विविधमच्यमानमुपजीव्यमानं सलिलस्य मध्ये । इमे वै लोकाः सरिरमित्यादिश्रुतिः । घृतं दुहानामदितिमहीनां जनाय मनुष्येभ्योऽर्थाय पुंलिङ्गस्त्रीलिङ्गाभ्यामत्र गौः स्तूयते । अग्ने मा हिंसीरिति व्याख्यातम् ॥ ४९ ॥

अथावेः इममूर्णायुम् । ऊर्णवन्तं वरुणस्य नाभिं वरुणस्य नहनं बन्धनमपत्यत्वात् त्वचं पशूनां द्विपदां चतुष्पदामुभयरूपाणां पशूनां त्वग्रक्षणं करोति कम्बलादिनेत्याशयः । किञ्च त्वष्टुः प्रजानां प्रथम जनित्रम् । एतद्ध त्वष्टा प्रथमं रूपं विचकारेति श्रुतिः । जनित्रं जननं व्याख्यातमन्यत् ॥ ५० ॥

अथाजस्य अजो हीति । यः अजः अग्नेरजनिष्ट जातः शोकात्सन्तापात् अजायत ॥ तदग्नेः शोकादजायतेति श्रुतिः । हिशब्दः पादपूरणः । स अपश्यज्जनितारं जनयितारं प्रजापतिमग्रे प्रथमं यथाऽसौ द्रष्टव्यः तेन देवाः इन्द्रादयः । देवतामग्रमायन् । नायं देवात्तलिति स्वार्थिकः किं तु तस्य भावस्त्वतलाविति भावप्रत्ययः । षष्ठ्यर्थे चेयं द्वितीया देवत्वास्याग्रमायन्निति शब्दप्रकरणात् । तेनैवाजेन रोहं स्वर्गमुपागच्छत् मेध्यासः यज्ञियाः देवलोकाः प्रसिद्धाः शरभादयो व्याख्येयाः ॥ ५१ ॥

चित्योपस्थानम् । त्वं यविष्ठ । गायत्री आग्नेयी अनिरुक्ता । त्वं हे यविष्ठ युवतम अथवा । यु मिश्रणे । अतिशयेन मिश्रयितृतम दाशुषः दत्तवतो हवींषि यजमानस्य नॄन् मनुष्यान्पाहि पालय । शृणुधि शृणु च गिरः स्तुतिलक्षणा वाचः । किञ्च रक्ष तोकमपत्यम् उत त्मना अपि चात्मानं रक्षेति श्रुत्युक्तो व्यत्ययो विभक्तेः ॥५२॥

पञ्चदशछन्दस्याः पञ्चदशभिर्यजुर्भिरुपदधाति । अपां त्वेमन्सादयामि । श्रुत्युक्तान्यभिधेयानि अपां त्वा एमन् । सप्तम्या लुक् एमनि इण् गतौ । अस्य मनिन्प्रत्ययान्तस्यैतद्रूपम् । वायुर्वा अपाम् एमन् वायौ त्वां सादयामि । अपां त्वा ओद्मन् । उन्दी क्लेदने ।

ओषधयो वा अपामोद्मन् । तुल्यं व्याख्यानमन्यत् । भस्मन् । भस भर्त्सनदीप्त्योः । अभ्रं वा अपां भस्म । ज्योतिषि विद्युद्वा अपां ज्योतिः । अयने इयं पृथिवी अयनम् । अर्णवे प्राणो वा अर्णवः । समुद्रे मनो वै समुद्रः । सरिरे वाग्वै सरिरम् । क्षये चक्षुर्वा अपां क्षयो निवासः । सधिषि श्रोत्रं वा अपां सधिः । सदने द्यौर्वा अपां सदनम् । सधस्थे अन्तरिक्षं वा अपां सधस्थम् । योनौ समुद्रो वा अपां योनिः । पुरीषे सिकता वा अपां पुरीषम् । पाथसि अन्नं वापां पाथोऽन्ने त्वां सादयामि पञ्चछन्दस्याः । पञ्चभिर्यजुर्भिरुपदधाति । गायत्रेण छन्दसा सादयामीत्यादिभिः ॥ ५३ ॥

प्राणभृतः पञ्चाशदिष्टकाः उपदधाति । पञ्चाशद्भिर्यजुर्भिः अयं पुरोभुव इत्यादिभिः । अयं पुरो भुवः । अग्निर्वै पुरस्ताद्यत्तमाह । पुर इत्यादि निर्वचनम् । तस्य प्राणः । भुवनस्य अपत्यं भौवायनः । वसन्तः प्राणायनः । वसन्त ऋतुः प्राणायनः प्राणस्यापत्यम् । नडादित्वात्फक् । गायत्री वसन्ती । गायत्रीव वसन्तस्यापत्यम् । गायत्र्यै गायत्रम् । गायत्र्याः सकाशाद्गायत्रं साम निरमिमीत । गात्राद्युपांशुः । गायत्रात् साम्न उपांशुग्रहं निरमिमीत । उपांशोस्त्रिवृत् । उपांशोर्ग्रहात् त्रिवृत् स्तोमं निरमिमीत । त्रिवृतो रथन्तरम् । त्रिवृत स्तोमाद् रथन्तरम् पृष्ठं निरमिमीत । वसिष्ठ ऋषिः । प्राणो वै वसिष्ठ ऋषिः । प्रजापतिगृहीतया त्वया । गृह्णातिः सृजतिवचनः । प्रजापतिसृष्टया त्वया प्राणं गृह्णामि प्रजाभ्यः । अयं पुरोभुव इत्याभिर्दशभिर्मन्त्रैः प्राणमेवैकमविशेषेण गृह्णामि प्रजाभ्यो विशेषेणावस्थितम् ॥ ५४ ॥

अथ दक्षिणतः । अयं दक्षिणा विश्वकर्मा अयं वै वायुर्विश्वकर्मा योऽयं पवते एष हीदं सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेव दक्षिणैव भूयिष्ठं वात्यर्थावर्त्तात् तस्य मनो वैश्वकर्मणम् इत्यादि तुल्यव्याख्यानं चतसृष्वपि कण्डिकासु ॥ ५५ ॥

अथ पश्चात् । अयं पश्चाद्विश्वव्यचाः असौ वादित्यो विश्वव्यचा यदा ह्येवैष उदेति अथेदं सर्वं व्यचनवद् भवति तद्यत्तमाह पश्चादित्यादि क्रियानिर्देशः ॥ ५६ ॥

अथोत्तरतः । इदमुत्तरात्स्वः । दिशो वा उत्तरा तद्यत् तमाहोत्त-

रादित्युत्तरात्तर्ह्येतस्मात्सर्वस्माद् दिशः । अथ यत्स्वरित्याह स्वर्गो हि लोको दिशः ॥ ५७ ॥

अथ मध्ये । इयमुपरि मतिः । चन्द्रमा वा उपरि तद्यत्तमाहोप-रीति उपरि हि चन्द्रमाः । अथ यन्मतिरित्याह वाग्वै मतिः । समानं व्याख्यानम् लोकं ता इन्द्रमिति तिस्रः प्रतीकगृहीताः । लोकं पृण छिद्रं पृण ता अस्य सूददोहसः । इन्द्रं विश्वा अवीवृधत् ॥ ५८ ॥

इति श्रीमदुव्वटकृतौ मन्त्रभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥

आनन्दपुरवास्तव्यवज्रटस्य च सूनुना ।
उव्वटेन कृतं भाष्यमुज्जयिन्यां स्थितेन तु ॥ १ ॥

---

## अथ चतुर्दशोऽध्यायः ॥ १४ ॥

---

द्वितीयां चितिं देवा अपश्यन् तस्यां चितौ पञ्चाश्विन्यो यजुर-न्ताः । अश्विनाध्वर्यू इत्यादि यजुः । प्रथमा विराट् द्वितीयाद्याश्चत-स्रस्त्रिष्टुभः । ध्रुवक्षितिः । या त्वं ध्रुवक्षितिः स्थिरनिवासा ध्रुवयो-निश्च अनश्वरस्थाना च ध्रुवा चासि स्वत एव तां त्वां ब्रवीमि ध्रुवं स्थिरं योनिं स्थानमासीद अधितिष्ठ साधुया साधुम् । द्वितीयैकव-चनस्य स्थाने या उख्यस्याग्नेः । केतुं प्रज्ञानं प्रथममाद्यम् । जुषाणा सेवमाना उख्यस्याग्नेः प्रथमं प्रज्ञानम् इयमेव प्रथमा चितिः तस्या-श्चोपरिष्टान्निधीयते तस्मादेवमुच्यते उत्तरं यजुः । किञ्च अश्विनौ चाध्वर्यू सादयताम् इह रेतः सिग्वेलायाम् त्वा त्वाम् केचिच्चतुर्थ मेतं पादं कल्पयन्ति त्रिष्टुभं च ॥ १ ॥

कुलायिनी कुलायं गृहं तदाकारा कुलायिनी सा हि रेतः सि-ग्वेलायामिष्टकाभिरुपहिताभिर्गृहाकारा भवति घृतवतीभविष्यता योगेन इह हि वसोर्धाराज्याहुतयः होष्यन्ते । पुरन्धिः । बहु हि इष्टकाजातमिह धारयति चितिसम्बद्धम् या त्वामित्थम्भूता तां त्वां ब्रूमः । स्योने सीद सदने पृथिव्याः । सुखरूपे उपविश स्थाने पृथि-व्याः । किञ्च अभि त्वा अभिगृणन्तु त्वां रुद्रादयः । किञ्च । इमा

ब्रह्म पीपिहि । इमा इमानि ब्रह्माणि पीपिहि आप्यायस्व सौभगाय महते ऐश्वर्याय अश्विनेति व्याख्यातम् ॥ २ ॥

स्वैर्दक्षैः । स्वैर्वीर्यैः । दक्षस्य पिता वीर्यस्य पालयित्री सती इह द्वितीयायां चितौ सीद अवस्थानं कुरु दक्षशब्द इह वीर्यवचनः । प्रयोजनमाह देवानां सुम्ने सुखाय कथं तु नाम देवाः सुखं प्राप्नुयुरिति बृहते रणाय महते च रमणीयाय यज्ञक्रतवे किञ्च पितेवैधि सूनवे । पिता इव भव सुताय आ सुशेवा । आङ् मर्यादायां साधु सुखयित्री किञ्च स्वावेशा स्वावेशयेति विभक्तिव्यत्ययः । स्वावेशया तन्वा आत्मना संविशस्व अवस्थानं कुरु अश्विनाध्वर्यू उक्तार्थः ॥ ३ ॥

पृथिव्याः पुरीषम् । या त्वं पृथिव्याः प्रथमायाश्चितेः पुरीषमिवासि । पृथिवी वै प्रथमा चितिः तस्या एतत् पुरीषमिव यद् द्वितीयेति श्रुतिः । अप्सो नाम रसो नामेति अप्स इति रसपर्यायं दर्शयति । अपः सुनोतीति अप्सः अपां हि रसो गुणः । तस्य वा एतस्य यजुषो रस एवोपनिषदित्येतत् श्रुतिर्दर्शयति तां त्वामुपचीयमानां विश्वे देवा अभिगृणन्तु अभिष्टुवन्तु त्वमपि च स्तोमपृष्ठा घृतवती च इह सीद द्वितीयस्यां चितौ यां स्तोमनस्यान्तꣳस्यमानो भवति तैरेषा स्तोमपृष्ठा घृतवती च वसोर्द्धारादिभिर्होमैः ततः प्रजावदस्मे द्रविणा यजस्व प्रजासंयुक्तानि अस्मभ्यम् द्रविणानि देहि यजति दानार्थः । शेषमुक्तम् ॥ ४ ॥

अदित्यास्त्वा । या त्वम् ऊर्मिः कल्लोलराशिः द्रप्सः रसः अपामसि यस्याश्च ते तव विश्वकर्मा प्रजापतिर्ऋषिः द्रष्टा तां त्वाम् अदित्याः पृष्ठे पृथिव्याः पृष्ठे प्रथमायाश्चितेरुपरि सादयामि कथम्भूतामित्यत आह अन्तरिक्षलोकस्य धारयित्रीम् । विष्टम्भनीं संस्तम्भनीम् । अन्तरिक्षस्यैव दिशामधिपत्नीम् । दिशामीशिनीम् । भूतजातानां च शेषं सामानोदर्कम् ॥ ५ ॥

ऋतव्य उपदधाति । शुक्रश्च शुचिश्च व्याख्यातम् ॥ ६ ॥

वैश्वदेवीरुपदधाति विश्वेषां देवानामार्षम् । सजूर्ऋतुभिः । यथा समानजोषणः ऋतुभिः प्रजापतिर्भूत्वा इष्टकामुपहितवान् यथा च समानजोषणः विधाभिः । आपो वै विधाः । अद्भिर्हीदं सर्वं विहितं यथा च समानजोषणः देवैः । यथा च सजूर्देवैर्वयोनाधैः । प्राणा वै देवा वयोनाधाः । प्राणै-

हीदं सर्वं वयुनं नद्धम् । अथो छन्दांसि वै देवा वयोनाधाः । छन्दोभिर्हीदं सर्वं वयुनं प्रज्ञानम् । एवमहमपि एताभिर्देवताभिः समानप्रीतिर्भूत्वा उपदधामि । अग्नये वैश्वानराय त्वाम् । संवत्सरो वा अग्निर्वैश्वानरः । अश्विनाध्वर्यू सादयतामिह त्वाम् । अश्विना अश्विनौ अश्विनौ च देवानामध्वर्यू त्वां सादयताम् । एवमुत्तरेष्वपि मन्त्रेषु वसुरुद्रादित्या विश्वेदेवा योज्याः ॥ १ ॥

प्राणभृत उपदधाति । प्राणं मे । प्राणं मे मम पाहि गोपाय । अपानं मे पाहि । व्यानं मे पाहि । चक्षुर्म्मे मम उर्व्या विस्तीर्णया विभाहि । प्रकाशय । श्रोत्रं मे श्लोकय कीर्तय । श्लोक इति वाग्नामसु पठितम् । श्लोकयुक्तं श्रोत्रं कुरु । अपस्या उपदधाति । अपः पिन्वौषधीर्जिन्व । अपः पिन्व । पिन्वतिः सेचनार्थः । ओषधीर्जिन्व । जिन्वतिः प्रीतिकर्मा । द्विपादव । द्विपादमिति विभक्तिव्यत्ययः । अवगोपाय । चतुष्पात् । चतुष्पादं पाहि रक्ष । दिवो वृष्टिमेरय । द्युलोकात् वृष्टिम् । आ ईरय । आगमय ॥ ८ ॥

वयस्या उपदधाति । अत्र श्रुत्युक्तं निदानम् । प्रजापतेर्विस्रस्तात्पशव उदक्रामंश्छन्दाᳪंसि भूत्वा तान् गायत्रीछन्दो भूत्वा वयसाप्नोत्तद्यद्गायत्र्यादेतच्छन्द आविशᳪंस्ता तद्‌ भूत्वा प्रजापतिः । मूर्धा वयः प्रजापतिश्छन्दः । चतुर्भिर्म्मन्त्रैः गायत्रीरूपः प्रजापतिः कल्पते । मूर्द्धा प्रजापतिः प्राधान्यात् वयः शरीरावस्था प्रजापतिः स्वयमेव छन्दो हीदं सर्वं विष्टभ्नोति । अधिपतिश्छन्दः । आपो वै प्रजापतिः परमेष्ठी अयमष्टावयवो गायत्रीरूपः प्रजापतिः पञ्च दश वक्ष्यमाणान् पशून् गृह्णाति । प्रजापतिः मयं सुखं ददाति क्षत्रं वयो मयन्दछन्दः । प्रजापतिर्वै क्षत्रं स वयोभवन्मयन्दं छन्द इति । अनिरुक्तत्वात् । मयन्दं विष्टम्भो वयः प्रजापतिर्वै विष्टम्भः स प्रजापतिर्वा आधिपतिः विश्वकर्मा वयः प्रजापतिर्वै विश्वकर्मा परमेष्ठीछन्दः परमे स्थाने तिष्ठति प्रजापतिरेव क्षत्रं वयः प्रथमतो ज्ञेयम् । आपो वै प्रजापतिः पश्चात् वस्तो वयो विवलं छन्दः । वस्तः पशुः विवलं छन्दोरूपमाश्रित्योदक्रमीत् । तं प्रजापतिः गायत्रीरूपो वयसाप्नोत् । एकपदा वै विवलं छन्दः तद्विविधं वलमुत्कृष्टं पुरुषसम्बन्धि हि छन्दः । एकपदा ह भूत्वा या उच्चक्रमुरिति श्रुतिः । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् । वृष्णिर्वयो विशालं छन्दः वृष्णि

मेषं वयसाप्नोत् विशालं द्विपदं छन्द आप्नोत् द्विपदा भूत्वा वय उच्चक्रमुः । पुरुषो वयस्तन्द्रं छन्दः । पुरुषं वयसाप्नोत् तन्द्रं छन्द इति । पङ्क्तिर्वै तन्द्रं छन्दः । पाङ्क्तिर्हि भूत्वा पुरुषा उच्चक्रमुः । व्याघ्रो वयोऽनाधृष्टं छन्दः । व्याघ्रं वयसाप्नोत् । विराड् वा अनाधृष्टं छन्दः । अन्नं वै विराडन्नमनाधृष्टं विराड् भूत्वा व्याघ्रा उच्चक्रमुः । सिंहो वयश्छदिश्छन्दः । सिंहं वयसाप्नोत् अतिच्छन्दा वै छदिश्छन्दः । सा हि सर्वाणि छन्दांसि छादयति अतिच्छन्दा हि भूत्वा सिंहा उच्चक्रमुः । अथातो निरुक्तान्नेव पशून्निरुक्तानि छन्दांस्युपदधाति । पष्ठवाडित्यादिदश निगदव्याख्याताः । लोकं ता इन्द्रमित्युक्तम् ॥ १० ॥

तृतीयां चितिमिन्द्राग्नी च विश्वकर्म्मा चापश्यन् । तत्र स्वयमातृण्णा प्रथमा । इन्द्राग्नी अव्यथमाना अनुष्टुप् । पूर्वोऽर्द्धर्च ऐन्द्राग्न उत्तरः स्वयमातृण्णायाः । अत्र च उत्तरोऽर्द्धर्चः प्रथमं व्याख्येयः । तत्र विबाधस इति पुरुषव्यत्ययः । येयं पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधते अभिभवति तां हे इन्द्राग्नी अव्यथमानां चलन्तीमिष्टकां दृंह तं दृढीकुरु तं युवं युवाम् ॥ ११ ॥

विश्वकर्मा । प्रजापतिः त्वां सादयत्वित्यादिपूर्ववद्व्याख्येयम् । अन्तरिक्षस्य पृष्ठे वायुष्ट्वा इति विशेषः ॥ १२ ॥

पञ्चदिश्या वायुरपश्यत् । राज्ञ्यसीति प्रतिमन्त्रम् ॥ १३ ॥

विश्वज्योतिषमुपदधाति । विश्वकर्म्मा त्वा । वायुदेवत्या ॥ १४ ॥

ऋतव्या उपदधाति । नभश्च । नभः श्रावणः नभस्यः भाद्रपदः । शेषं पूर्ववत् ॥ १५ ॥

अथानन्तरम् । इषश्च । इष आश्विनः ऊर्ज्जः कार्त्तिकः ॥ १६ ॥

दश प्राणभृत उपदधाति । आयुर्मे पाहि गोपाय । वाचम्मे पिन्व । त्रयीलक्षणं वाचं मम पिन्व सिञ्च कामैः पूरय । मनो मे जिन्व । जिन्वतिः प्रीतिकर्म्मा । ज्योतिर्मे यच्छ देहि सुखबोधमन्यत् ॥ १७ ॥

षट्त्रिंशच्छन्दस्या उपदधाति । मा छन्दः अयं लोको मित इव माछन्दश्छादनात् । प्रमा छन्दः अन्तरिक्षलोको वै प्रमा । अन्तरिक्षलोकः अस्माल्लोकात् प्रमित इव दृश्यते । प्रतिमा छन्दः । द्यौः प्रतिमा सा हि अन्तरिक्षलोके प्रतिमिता अस्तीवयः । यदेभ्यो लोके-

भ्य आहुतिपरिणामभूतमन्नं भवति तदन्नीवयः । परतो निरुक्तानि छन्दांसि पङ्क्तिरादीनि ॥ १८ ॥

पृथिवी छन्द इति । यान्येतद्देवत्यानि छन्दांसि तान्येवैतदुपदधाति । छादयन्तीति छन्दांस्युच्यन्ते ॥ १९ ॥

अग्निर्देवता वातो देवतेत्येता वै देवता छन्दांसि अपि छादयन्ति ॥ २० ॥

चतुर्दश बालखिल्या उपदधाति द्वाभ्यां त्रिष्टुबुष्णिग्भ्याम् । मूर्द्धासि राट् । मूर्द्धा शिरोभूतासि । राट् । राजृ दीप्तौ । दीप्ता चासि ध्रुवासि स्थिरासि धरुणा धारयित्री च धर्त्री धारयित्री धरणी च मर्यादाभूता च एवं त्रिलोकसंस्तवस्तिसृणामिष्टकानाम् । आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा उपदधामीति शेषः । एतासां चतसृणां वालखिल्यानां पशुसंस्तवः ॥ २१ ॥

परतोऽपि तिसृणां द्युलोकप्रभृतिलोकसंस्तवः । यन्त्री राट् । यमनी दीप्ता चासि । यन्त्री असि । यमनी ध्रुवा असि । धरित्री पशुसंस्तवः पूर्ववत् । इषे त्वा ऊर्जे त्वा रय्यै त्वा पोषाय त्वा । चतुष्पादः पशव इत्येतदभिप्रायम् । लोकं ता इन्द्रमिति खिल्यमन्त्रा व्याख्याताः ॥ २२ ॥

चतुर्थीञ्चितिमृषयोऽपश्यत् । आशुस्त्रिवृदित्यष्टादशेष्टकाः । प्रतिमन्त्रमुपदधाति । स्तोमसंख्योपलक्षितैर्मन्त्रैः स्तोमानुपदधातीति श्रुतेः । प्रकटार्था मन्त्राः श्रुत्या व्यक्ततास्तथापि किञ्चिदुच्यते । आशुस्त्रिवृत् । य एव त्रिवृत् स्तोमः । सोमोऽनेन मन्त्रेणोक्तः एकं व्याख्यानम् । अथो वायुर्वा आशुः शीघ्रः त्रिवृत् । त्रिलोकसंचारी । एवमुपरितनानि व्याख्येयानि । भान्तः पञ्चदशः । य एव पञ्चदशः स्तोमस्तं तदुपदधाति भान्त इति । वज्रो वै भान्तो वज्रः पञ्चदशः अथवा चन्द्रमा वै भान्तः पञ्चदशः चन्द्रमा उच्यते । स हि ताभिः पञ्चदशाहान्या पूर्यते चापक्षीयते च व्योमा सप्तदशः । संवत्सर उक्तः । य एव सप्तदशः स्तोमस्तमेव तदुपदधाति व्योमेति । प्रजापतिर्वै व्योमा प्रजापतिः सप्तदशः संवत्सरो वा व्योमा । स हि विविधमवति प्राणिनः सप्तदशावयवः । तस्य द्वादशमासाः पञ्चर्त्तवः । हेमन्तशिशिरसमावेशेन धरुण एकविंशः आदित्यः स्तोमो वोच्यते । प्रतिष्ठा वै धरुणः प्रतिष्ठैकविंशः स्तोमः । आदित्यो

वा प्रतिष्ठा मासादिभिः द्वादशमासादिभिः द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोकाः असावेवादित्य एकविंशावयवश्च । परतः संवत्सररूपाणि व्याख्येयानि। प्रतूर्त्तिः संवत्सरः। स हि सर्वाणि भूतानि प्रतरयति प्रवर्द्धयति । अष्टादशावयवः द्वादश मासाः पञ्चर्त्तवः । हेमन्तशिशिरसमावेशेन अष्टादशः संवत्सरः । तपः संवत्सरो हि सर्वाणि भूतानि तपति शीतोष्णवर्षैः । नवदशः द्वादशमासाः षड्तवः संवत्सर एव नवदशः अभीवर्त्तः स विंशः । य एव सविंशस्तोमस्तं तदुपदधाति । अथो संवत्सरो वा अभीवर्त्तः संवत्सरो हि सर्वाणि भूतान्यभिवर्त्तते तेन हि अभिवृत्तेन ऋतुलिङ्गानि भूतेषु दृश्यन्ते । सविंशस्तस्य द्वादशमासाः सप्तर्त्तवः । अधिकमासाभिप्रायेण संवत्सरश्च वर्चो द्वाविंशः य एव द्वाविंशः स्तोमस्तं तदुपदधाति वर्चः संवत्सरो हि सर्वेषां भूतानां वर्चास्वितमः इति वर्चस्तमत्वं श्रुतिर्दर्शयति। वर्चस्वी महाभाग्यवान् द्वाविंशः द्वादशमासाः।सप्तर्त्तवः द्वे अहोरात्रे संवत्सरश्च संभरणस्त्रयोविंशः । य एव त्रयोविंशः स्तोमस्तं तदुपदधाति । अथो संवत्सरो वा संभरणः । संवत्सरो हि सर्वाणि भूतानि संभरति उत्पादयति संहरति वा विनाशयति त्रयोविंशः त्रयोदशमासाः सप्तर्त्तवः द्वे अहोरात्रे संवत्सरः । एवं योनिश्चतुर्विंशः । य एव चतुर्विंशः स्तोमस्तं तदुपदधाति । संवत्सरो योनिः स्थानं तस्य चतुर्विंशतिरर्द्धमासाः । गर्भाः पञ्चविंश इति । य एव पञ्चविंशः स्तोमस्तं तदुपदधाति । अथो संवत्सरो वा गर्भाः पञ्चविंशस्तस्य चतुर्विंशतिरर्द्धमासाः संवत्सर एव गर्भाः पञ्चविंशस्तद्यत्तमाह गर्भा इति । त्रयोदश मासा इहोच्यन्ते । स च गर्भो भूत्वा ऋतून्प्रविशति । कथं पुनस्त्रयोदशो मास ऋतुं प्रविशति । उच्यते । एकोनषष्ट्यहोरात्रैः चन्द्रो द्विर्द्वादशराशीन् बिभ्रन् भ्रमति स चान्द्र ऋतुर्भवति । आदित्यस्तु एकषष्ट्या दिवसै राशिद्वयमतिक्रामति स सौर ऋतुर्भवति तैश्च सौरैः षड्ऋतुभिस्संवत्सरो भवति ततश्चैकस्मिन् ऋतौ सौरचान्द्रौ ऋतू भवतः । तिथिद्वयं च । एवं षड्तुषु द्वादशतिथयः प्रविशन्ति । अपरेषु ऋतुष्वपरा द्वादश अपरेषु त्रिषु षट्तिथयः । य एवार्द्धतृतीयेषु संवत्सरेषु चान्द्रो मासः प्रविशति स एवाधिकमासः स एव च त्रयोदशो मासः सौरान् ऋतून् द्वाभ्यां तिथिभ्यां प्रविशति । ओजः त-

त्रापि मतुब्लोपः । ओजस्त्रिणवः य एव त्रिणवः स्तोमस्तं तदुप-दधाति । वज्रो वा ओजो वज्रस्त्रिणवोऽथो संवत्सरो वा ओजस्ते-जस्तेजस्वी त्रिनावः चतुर्विंशतिरर्द्धमासाः । द्वे अहोरात्रे संवत्सर एवोजस्त्रिणवः । संवत्सरो हि सर्वेषां भूतानामोजस्वितमः क्रतुरे-कत्रिंशः । य एवैकत्रिंशः स्तोमस्तं तदुपदधाति । संवत्सरो वा क्र-तुः संवत्सरो हि सर्वाणि भूतानि करोति एकत्रिंशः तस्य चतुर्विं-शतिरर्द्धमासाः । षडृतवः संवत्सर एव क्रतुरेकत्रिंशः । प्रतिष्ठात्र-यस्त्रिंशः य एव त्रयस्त्रिंशः स्तोमस्तं तदुपदधाति । अथो संवत्सरो वा प्रतिष्ठात्रयस्त्रिंशस्तस्य चतुर्विंशतिरर्द्धमासाः । षडृतवो द्वे अ-होरात्रे संवत्सर एवं प्रतिष्ठात्रयस्त्रिंशः । संवत्सरे हि सर्वं प्रतिष्ठि-तमिति प्रतिष्ठा । ब्रध्नस्य विष्टपं चतुस्त्रिंशः । य एव चतुस्त्रिंशः स्तो-मस्तं तदुपदधाति । अथो वा ब्रध्नस्य विष्टपं चतुस्त्रिंशस्तस्य च-तुर्विंशतिरर्द्धमासाः सप्तर्त्तवः द्वे अहोरात्रे संवत्सर एव ब्रध्नस्य वि-ष्टपं स्वाराज्यं वै ब्रध्नस्य विष्टपं स्वाराज्यं स्वतन्त्रता । नाकः षट्-त्रिंशः । य एव षट्त्रिंशस्तोमस्तं तदुपदधाति । अथो संवत्सरो वा नाकः । काम्यते इति कं सुखं तद्विपरीतम् अकं दुःखं नास्त्यकमस्मि-न्निति नाकः । नहि तत्र गताय कस्मै च नाकं भवतीति श्रुतिः । षट्त्रिंशः चतुर्विंशतिरर्द्धमासा द्वादश मासाः । विवर्त्तोऽष्टाचत्वारिं-शः । य एवाष्टाचत्वारिंशः स्तोमस्तं तदुपदधाति । संवत्सरो वा विवर्त्तः । विविधं वर्त्तन्तेऽत्र गतानि भूतानि इति विवर्त्तः । पितृ-यानमष्टाचत्वारिंशः तस्य षड्विंशतिरर्द्धमासास्त्रयोदशमासाः सप्त-र्त्तवः द्वे अहोरात्रे अधिमासाभिप्रायेण । संवत्सराद्धि सर्वाणि भूता-नि विवर्त्तन्ते तदेतद्रूपमुपदधातीति श्रुतिः । धर्त्रं चतुष्टोमः । धर्त्रं धारणं वायुर्वा धर्त्रं चतुष्टोमः चतुरुत्तरः स्तोमश्चतुष्टोमः मध्यपद-लोपी समासः । स हि आभिश्चतसृभिः दिग्भिः स्तूयते । वायुर्वा सर्वेषां भूतानां प्रतिष्ठेति श्रुतिः ॥ २३ ॥

अग्नेर्भागोऽसि । दश इष्टका उपदधाति । दशभिर्मन्त्रैः । अग्ने-र्भागोऽसीत्यादिभिः । तत्रार्थवादः । स देवानब्रवीद्युष्माभिः सहेमा-नि सर्वाणि भूतानि पाप्मनो मृत्योः स्पृणवानीति किं नस्ततो भ-विष्यतीति वृणीध्वमित्यब्रवीत्तं भागो नोऽस्त्वित्येके ब्रुवाणाधिप-त्यं नोऽस्त्वित्येके स भागमेकेभ्यः कृत्वाधिपत्यमेकेभ्यः सर्वाणि

भूतानि पाप्मनो मृत्योरस्पृणोत्तस्मात्स्पृत इत्यादिभिः स्तोमैरिष्टकोच्यते । या त्वम् । अग्नेर्भागोऽसि यस्यां च त्वयि दीक्षाया आधिपत्यं यया च त्वया ब्रह्म ब्राह्मण्यं स्पृतं पाप्मनो मृत्योरपनीतं त्रिवृत् त्रिवृता स्तोमः स्तोमेनेति विभक्तिव्यत्ययः । तां त्वामुपदधामीति शेषः । यद्वा या त्वमग्नेर्भागोऽसि यस्यां च त्वयि त्रिवृत्स्तोमः यस्यां च त्वयि दीक्षाया आधिपत्यं यया च त्वया ब्रह्म मृत्योर्म्मोचितं तां त्वामुपदधामि । एवमन्यदपि व्याख्येयम् । इन्द्राय भागं कृत्वा विष्णवे आधिपत्यमकरोत् । क्षत्रं प्रजानां पञ्चदशेन स्तोमेन पाप्मानो मृत्योरपनीतम् । नृचक्षसाम् । देवा वै नृचक्षसः विड् वै जनित्रं विशं प्रजानां सप्तदशेन स्तोमेन मित्रस्य प्राणो वै मित्रोऽपानो वरुणः प्राणाय भागं कृत्वापानायाधिपत्यमकरोत् दिवो वृष्टिर्वातः स्पृतः वृष्टिं च वातं च प्रजानामेकविंशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ २४ ॥

वसूनां भागः । वसुभ्यो भागं कृत्वा रुद्रेभ्य आधिपत्यमकरोत् । चतुष्पात् प्रजानां चतुर्विंशेन स्तोमेन आदित्येभ्यो भागं कृत्वा मरुद्भ्य आधिपत्यमकरोत् । गर्भाः प्रजानां पञ्चविंशस्तोमेन अदित्यै भागं कृत्वा पूष्ण आधिपत्यमकरोत् । ओजः प्रजानां त्रिणवेन स्तोमेन देवाय सवित्रे भागं कृत्वा सर्वा दिशः प्रजानां चतुष्टोमेन समीचीः सम्यगञ्चनाः ॥ २५ ॥

यवानाम् । पूर्वपक्षा वै यवाः अपरपक्षा अयवाः । पूर्वपक्षेभ्यो भागं कृत्वा अपरपक्षेभ्य आधिपत्यमकरोत् । प्रजाः स्पृताः । चतुश्चत्वारिंशेन स्तोमेन ऋतुभ्यो भागं कृत्वा विश्वेभ्यो देवेभ्य आधिपत्यं भूतानि त्रयस्त्रिंशेन स्तोमेन पाप्मनो मृत्योः अस्पृणोत् । एवमयं यजमानस्त्रयस्त्रिंशेन स्तोमेन पाप्मनो मृत्योः स्पृणोति ॥२६॥

ऋतव्ये उपदधाति । सहश्च सहस्यश्च द्वौ मासौ ऋतुः ॥ २७ ॥

सृष्टीरुपदधाति । सप्तदशेष्टकाः सप्तदशभिर्मन्त्रैः । एकया स्तूयतेत्यादिभिः । तत्र निदानभूता श्रुतिः । एतद्वै प्रजापतिरित्युपक्रम्य ते वै केन स्तोष्यामह इति मया चैव युष्माभिश्चेति तथेति ते प्राणैश्चैव प्रजापतिना चास्तुवतेति । एकया वाचा अस्तुवत स्तुतवान् । कः सामर्थ्यात् प्रजापतिः । इदानीं फलमाह प्रजा अधीयन्त । याः

प्रजाः प्रजापतेरासन् ताः प्रजापत्यर्थमस्थाप्यन्त स्थिताः। प्रजापतिरधिपतिरासीत् अस्यां स्तुतौ। एवं षोडशानामिष्टकानां मन्त्रा व्याख्येयाः। तिसृभिरस्तुवत प्राणोदानव्यानैः प्रजापतिः स्तुतवान्। फलमाह ब्रह्मासृज्यत। प्रजापतिरधिपतिरासीत्। पञ्चभिः। मनः पञ्चभिः प्राणैः स्तुतवान्। सर्वत्र प्रजापतिनैव भूतानि पृथिव्यादीनि अत्रासृज्यन्त अस्थाप्यन्त। भूतानां पतिः स्तुतौ अधिपतिरासीत्। सप्तभिरस्तुवत। सप्तशीर्षप्राणैः स्तुतवान्। सप्त ऋषयोऽत्रासृज्यन्त धाताधिपतिरासीत्॥ २८॥

नवभिः। सप्तशीर्षण्प्राणान् अवाञ्चो द्वौ तैरेव तदस्तुवत। एकादशभिः। दश प्राणाः आत्मैकादशः आर्तवाः ऋतुभवाः त्रयोदशभिः दश प्राणाः द्वे प्रतिष्ठे। आत्मा त्रयोदशः अयनद्वयात्मकः संवत्सरः पञ्चदशभिः दशहस्ता अङ्गुलयः चत्वारि दोर्बाहवाणि यदूर्ध्वं नाभेस्तत्पञ्चदशम्। इन्द्रः ऐश्वर्यशाली सप्तदशभिः दशपाद्या अङ्गुलयः चत्वार्यूर्वष्ठीनि द्वे प्रतिष्ठे यदर्वाङ्नाभेस्तत्सप्तदशम्। ग्राम्याः पशवः गवादयः॥ २९॥

नवदशभिः दशहस्ताङ्गुलयो नव प्राणाः शूद्रार्यौ असृज्येताम्। अर्यो वैश्यः। अर्यः स्वामिवैश्ययोः। एकविंशत्या दशहस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशः एकशफा अश्वादयः त्रयोविंशत्या दशहस्त्या अङ्गुलयो दशपाद्याश्चत्वार्यङ्गानि आत्मा पञ्चविंशः सप्तविंशत्या दशहस्त्या दशपाद्याः द्वे प्रतिष्ठे चत्वार्यङ्गानि आत्मा सप्तविंशः॥ ३०॥

नवविंशत्या दशहस्त्या दशपाद्या नव प्राणा एवं नवविंशतिः एकत्रिंशता दशहस्त्या दशपाद्या दश प्राणाः आत्मैकत्रिंशः। त्रयस्त्रिंशता दशहस्त्या दश पाद्या दश प्राणाः द्वे प्रतिष्ठे आत्मा त्रयस्त्रिंशः भूतान्यशाम्यन्। सर्वाणि भूतान्यत्राशाम्यन्। प्रजापतिः पाता प्रजानां परमेष्ठी परमे स्थाने तिष्ठतीति अधिपतिः स्वामी आसीत् बभूव। लोकं ता इन्द्रम्। इति गतार्थम्॥ ३१॥

उव्वटकृतौ मन्त्रभाष्ये चतुर्दशोऽध्यायः॥ १४॥

## अथ पञ्चदशोऽध्यायः ॥ १५ ॥

अग्ने जातान् । पञ्चमीं चितिं परमेष्ठ्यपश्यत् । तत्रादौ पञ्चासपत्ना उपधीयन्ते तत्राद्ये द्वे त्रिष्टुभावाग्नेय्यौ पुरस्तादुपदधाति। हे अग्ने जातानुत्पन्नान् प्रणुद प्रेरय नाशय अपुनरागमाय नः अस्माकं सपत्नान् समानपतित्वदर्शिनः शत्रून् । प्रत्यजातान् । प्रतिज्ञाय अजातान् अनुत्पन्नान् जनिष्यमाणान्नुद प्रेरय । हे जातवेदः । किञ्च अधि नो ब्रूहि सुमना अहेडन् । एवं निर्द्धारितेषु सपत्नेषु गृहीतेषु च तद्धनेषु अधिब्रूहि अधिवद उपदिश यज्ञसम्बन्धिनीमितिकर्त्तव्यतां नः अस्माकं सुमनाः स्नेहानुबन्धमनाः । अहेडन् अक्रुध्यन् तव च स्याम भवेम शर्म्मन् शरणे आश्रये । त्रिवरूथे वरूथं गृहम् त्रिगृहे त्रिपुरे । उद्भौ द्विपदचतुष्पदधनधान्योद्भूतशक्तौ । यद्वा त्रिवरूथे यज्ञगृहे स्याम । त्रीणि ह यज्ञगृहाणि सदोहविर्द्धानाग्नीध्राणि । उद्भौ उद्भेत्तरि अन्येषां यज्ञक्रतूनाम् ॥ १ ॥

अथ पश्चात् । सहसा जातान् बलेनोद्भूतशक्तीन् प्रणाशय अस्माकं सपत्नान् । यद्वा सहसा बलेन स्वशक्त्या उत्पन्नान् प्रेरय अस्मच्छत्रून् । प्रत्यजातान् जातवेदो नुदस्व । प्रति नुदस्व अजान् अनुत्पन्नान् जातवेदः । किञ्च अधि नो ब्रूहि सुमनस्यमानः । अधिब्रूहि अधिवद नः अस्माकं सुमनस्यमानः शोभनचित्तः यथा च वयं स्याम भवेम तथा कुरु भूयोभूयश्च प्रणुद नः अस्माकं सपत्नान् ॥ २ ॥

दक्षिणतः षोडशीस्तोमः । यस्यास्तव षोडशी आदित्यः पञ्चदशकपालस्य वज्रस्य भर्ता स्तोमभूताः ओजो बलं च द्रविणं धनन्तां त्वामुपदधामि । उत्तरतः । चतुश्चत्वारिंशः । यस्यास्तव चतुश्चत्वारिंशस्त्रिष्टुब् वज्राक्षरसंमितः स्तोमः वज्रश्च द्रविणं तं त्वामुपदधामि । पञ्चमी । अग्नेः पुरीषम् । त्रिष्टुप् । या त्वमग्नेः स्थलरूपस्य पूरयित्री व्याख्यातमन्यत् ॥ ३ ॥

चत्वारिंशद्विराजश्चत्वारिंशद्भिर्यजुर्भिरुपदधाति । एवश्छन्दः यथाश्रुति व्याख्येयम् । या त्वम् एवं अवनात्पृथिवीलोकः छन्दः छादनात्तां त्वामुपदधामीति व्याख्याधर्मप्रदर्शनम् । अयं वै लोक

एवश्छन्दोऽन्तरिक्षं वरिवः अस्माल्लोकादुपरिष्टामिति वरिवः । शम्भूः द्यौर्वै शम्भूश्छन्दः शं सुखं भवत्यस्मिन्निति शम्भूः । परिभूश्छन्दइति । दिशो वै परिभूश्छन्दः । आच्छच्छन्दः इति अन्नं वा आच्छच्छन्द इति मनः प्रजापतिर्वै मनश्छन्द इति व्यचः असौ वा आदित्यो व्यचः विविधम् अञ्चति व्यचः सिन्धुः प्राणो वै सिन्धुश्छन्दः मनो वै समुद्रः सरिरं वाग्वै सरिरं ककुप् प्राणो वै ककप्छन्दः त्रिककुप् उदानो वै त्रिककुप् । काव्यं त्रयी वै विद्या काव्यम् । अङ्कुपम् आपो वा अङ्कुपम् । अक्षरपङ्क्तिः, असौ वै लोकोऽक्षरपङ्क्तिः पदपङ्क्तिः अयं वै लोकः पदपङ्क्तिश्छन्दः विष्टारपङ्क्तिः क्षुरोभ्रजः असौ आदित्यः क्षुरोभ्रजः ॥ ४ ॥

आच्छच्छन्दः प्रच्छच्छन्दः । अन्नं वा आच्छच्छन्दः अन्नं प्रच्छच्छन्दः संयत् रात्रिर्वा संयच्छन्दः वियत् असौ वै लोको वियच्छन्दः । बृहत् असौ वै लोको बृहत् रथन्तरम् अन्तरिक्षं वै रथन्तरं निकायः वायुर्वै निकायः विवधः अन्तरिक्षं वै विवधः गिरः अन्नं वै गिरश्छन्दः भ्रजः अग्निर्वै भ्रजः सꣳस्तुप्छन्दोऽनुष्टुप् छन्दः वागेव सꣳस्तुप्छन्दःवागनुष्टुप् छन्दः एवः वरिवः पूर्वं व्याख्याते वयः अन्नं वै वयःवयस्कृत् । अग्निर्वै वयस्कृत् विष्पर्द्धाः असौ वै लोको विष्पर्द्धाः विशालम् अयं वै लोको विष्पर्द्धाः विशालम् । अयं वै लोको विशालम् । छदिश्छन्दः अन्तरिक्षं वै छदिश्छन्दः दूरोहणम् । असौ वा आदित्यो दूरोहणं तन्द्रं पङ्क्तिर्वै तन्द्रम् । अङ्काङ्कम् । आपो वै अङ्काङ्कम् ॥ ५ ॥

एकोनत्रिंशत्स्तोमभागानुपदधाति । रश्मिना सत्याय सत्यं जिन्वेति । अत्र श्रुतिकृता व्याख्या । अमुनादो जिन्व अदोऽस्यमुष्मै त्वा । अधिपतिनोर्ज्जोर्ज्जं जिन्वेति त्रेधा विहिता मन्त्राः तत्र प्रथमस्य मन्त्रगणस्य द्विकण्डिकावधिपरिपठितस्य व्याख्यानम् । अमुना रश्मिना अदः सत्यं जिन्व जिन्वातिस्तर्पणार्थः । रश्मिनानेन सत्याय उपहिता सती सत्यं तर्प्पय । प्रेतिना अनेन धर्मणा धर्मायेति विभक्तिव्यत्ययः । धर्माय उपहिता धर्मं जिन्व । एवं द्वितीयान्तं पदं चतुर्थ्यन्तं कर्त्तव्यं सर्वमन्त्रेषु अन्वित्या अनेन दिवा दिवे अर्थाय उपहिता सती दिवं जिन्व ॥ ६ ॥

द्वितीयस्य मन्त्रवर्गस्य व्याख्यानम् । अदोऽस्यमुष्मै त्वा अदः असि ॥ ७ ॥ ८ ॥

त्रिवृदसि । अमुष्मै त्वा त्रिवृते त्वा वाक्यधर्मः । यतस्त्रिवृदसि त्रिगुणासि । अन्नं हि त्रिगुणं कृषिर्वृष्टिर्बीजम् । अन्नं च अतस्त्रिवृते अर्थाय त्वामुपदधामि । प्रवृणोति भूतानीति प्रवृत् अन्नं यतस्त्वं प्रवृदसि अतः प्रवृते अर्थाय त्वामुपदधामीति । तृतीयो व्याख्यायते । अधिपतिना ईश्वरेण ऊर्जा अन्नरसेन ऊर्जमन्नरसं जिन्व तर्प्पय । अभिधेये गतां क्रियां पर्यालोच्याभिधाव्युत्पत्तिः कर्त्तव्या ॥ ९ ॥

नाकसद उपदधाति । राज्ञ्यसि । या त्वं राज्ञी । राजृ दीप्तौ । ईश्वरी असि प्राची च दिक् । यस्याश्च वसवस्तेन देवाः अधिपतयः अधिष्ठातारः यस्याश्च अग्निर्हेतीनामस्त्राणां वधहेतुभूतानां प्रतिधारयिता तां त्वां ब्रवीमि । त्रिवृत् स्तोमः पृथिव्यां श्रयतु स्थापयतु । आज्यं च उक्थं च अव्यथायै अचलनाय स्तभ्नातु स्थिरीकरोतु । रथन्तरं च साम प्रतिष्ठित्यै प्रतिष्ठानाय स्तभ्नातु अन्तरिक्षे लोके ऋषयश्च त्वां प्रथजाः प्राणा वा ऋषयः देवेषु मध्ये दिवः द्युलोकस्य मात्रया मानेन वरिम्णा । च उरुत्वेन च प्रथन्तु पृथ्वीं कुर्वन्तु प्रथयन्त्विति प्राप्ते णिचो लोपः । विधर्त्ता चायमधिपतिश्च । विधर्त्ता वाक् अधिपतिर्मनः एते च प्रथयताम् । एते च वस्वादयो यथोक्ताः संविदाना एकमत्येनावस्थिताः नाकस्य पृष्ठे स्वर्गलोके यजमानं च त्वां च सादयन्तु ॥ १० ॥

उत्तरासु कण्डिकासु देवाः हेतीनां प्रतिधर्त्तारः स्तोमाः । उक्थानि सामानि चान्यानि भविष्यन्ति समानमन्यत् ॥ ११—१४ ॥

पञ्चचूडा उपदधाति । अयं पुरः । योऽयमग्निः पुरः पुरस्तादुपचायोपचीयते इति पुर इत्युच्यते । हरिकेशश्च हरितज्वालः सुवर्णवर्णार्चिरिति यावत् । सूर्यरश्मिश्च सूर्यस्येवाग्नेरश्मयः तस्याग्नेः रथगृत्सश्च रथेऽवस्थितो गृत्सः मेधावी । गृणातेः स्तुतिकर्मणः रथयुद्धकुशल इत्यर्थः । रथौजाश्च । रथे ओजोऽस्येति रथौजाः चकारौ समुच्चयार्थीयौ सेनानीग्रामण्यौ । सेनां नयतीति सेनानीः ग्रामं नयतीति ग्रामणीः । वासन्तिकौ तावृतू इति श्रुतिः । पुञ्जिकस्थला चक्रतुस्थला चाप्सरसौ । पुञ्जीकृतरूपलावण्यसौभाग्यगुणस्थला क्रतूनां सङ्कल्पानां स्थलमिव स्त्रीद्रव्यस्य रूपादिपरिज्ञानं सङ्कल्पः तन्मूलकस्तु कामः ते च दिशश्च उपदिशश्चेति माहित्थिः सेना च समितिश्चेति श्रुतिः । दंक्ष्णवः पशवो हेतिः । दशनशीलाः

पशवो हेतिर्वज्रः आयुधम् । पौरुषेयः पुरुषजनितो बधः विनाशः प्रहेतिः प्रकृष्टमायुधं तेभ्यो नमो नमोऽस्तु तेभ्यो हेतिप्रहेतिभ्यः नमस्कारोऽस्तु । ते च नः अस्मान् अवन्तु गोपायन्तु ते नः मृडयन्तु ते अस्मान्सुखयन्तु ते वयं हेतिः प्रहेतिभ्यः गुप्यमाना यं पुरुषं द्विष्मः यस्यानिष्टं चिन्तयामः यश्च पुरुषः न अस्मान् द्वेष्टि अस्मान्प्रति अप्रीतिं करोति तं पुरुषम् । एषां हेतिप्रहेतीनां वयं जम्भे दंष्ट्राकरालमुखे दध्मः प्रक्षिपामः ॥ १५ ॥

उत्तरेषु । अयं दक्षिणा । दक्षिणतो विश्वकर्मा सर्वस्य कर्त्ता वायुः तस्य वायोः रथस्वनः रथेऽवस्थितो महास्वनः स्वनः शब्दः । रथे चित्रः । रथे स्थितो विचित्रयोधी मेनका च सहजन्या च । मानयन्त्येनां समानानां जनानां सहजन्या अप्सरसो हि सामान्याः यातुधानाः रक्षांसि ॥ १६ ॥

अयं पश्चात् । विश्वव्यचा आदित्यो विश्वव्यचाः स ह्युदयेन सर्वं व्यञ्जनवत्करोति तस्य रथप्रोतश्च रथेऽवस्थितः प्रोत इव असमरथः अन्यैरथिभिरतुल्यरथः प्रम्लोचन्ती चानुम्लोचन्ती च तं तं पुमांसं प्रति आत्मानं प्रम्लोचन्ती च दर्शयन्ती च स हितस्याः स्वभावः अनुम्लोचन्ती च पूर्ववद्याख्याताः । व्याघ्राः सर्पाः ॥ १७ ॥

अयमुत्तरात् । अयं यतः उत्तरतः संयद्वसुः संयन्ति वसुनो धनस्य लिप्सवो यं प्रति स संयद्वसुर्यज्ञः । दीयते हि तत्र प्रसृतेभ्यः तार्क्ष्यस्तीक्ष्णे अन्तरिक्षे क्षिपति पक्षाविति तार्क्ष्यः । अरिष्टनेमिः । अनुपहिंसितायुधः विश्वाची च सर्वप्रत्यञ्चनशीला साधारणा हि सा घृताची च घृताञ्चना । घृतं चाप्सरसामन्नम् । तथा चोर्वशीवाक्यम् । घृतस्य स्तोकं सकृदह्नः प्राश्नामीति आपः वातः ॥ १८ ॥

मध्ये । अयमुपरि । अयं पर्जन्यः उपरि अर्वाग्वसुः अर्वागञ्चितं वसु धनम् उदकलक्षणं प्रजाभ्यो ददात्यर्वाग्वसुः पर्जन्यः तस्य सेनजिच्च । सेनां जयतीति सेनजित् सुषेणश्च शोभनसेनः । उर्वशी च । उरुः पृथुः वशः कामोऽस्या इति उर्वशी । पूर्वचित्तिश्च पूर्वं प्रथमं पुंसां चेतस्तामभ्युपैति सौभाग्यातिशयात् । अवस्फूर्जन् पर्जन्यो हेतिः स्फूर्जतिर्वज्रनिर्घोषार्थः विद्युत्प्रहेतिः ॥ १९ ॥

छन्दस्या उपदधाति । अग्निमूर्द्धा । आग्नेयः प्राक् तपश्च तपस्यश्चेत्यतः । प्रथमः स्पृचो गायत्रः । प्रथमा व्याख्याता ॥ २० ॥

अयमग्निः । ऋषिरभिनयेन दर्शयति । अयमग्निः सहस्रिणः सहस्राणि बहूनि विद्यन्ते यस्य तस्य वाजस्यान्नस्य शतिनश्च पतिरधिपतिः । मूर्द्धा कवी रयीणाम् । अग्निर्हि सर्वेषां धनानां प्रधानं धनं दृष्टादृष्टसाधनं हि । कविः क्रान्तदर्शनश्च अतः स्तुमः ॥२१॥

त्वामग्ने पुष्कराद् व्याख्यातम् ॥ २२ ॥

भुवो यज्ञस्य त्रैष्टुभस्त्र्यृचः प्रथमा व्याख्याता ॥ २३ ॥

अबोध्यग्निः । योऽयमग्निः अबोधि प्रतिबुध्यते कर्म्माणि स्वमधिकारं समिधा समिन्धनेन जनानामग्निहोत्रिणां सत्यातिथिभोजनज्ञानश्रद्धासंपन्नानाम् । कथमिव प्रतिबुध्यते धेनुमिवायतीम् । यथा धेनुमागच्छन्तीं वत्सः प्रतिबुध्यते यथा च उषसमागच्छन्तीं मनुष्याः प्रतिबुध्यन्ते । तस्याहुतिभिर्दीप्तस्य यह्वा इव प्रवयामुज्जिहानाः । यह्वा इति महतो नामधेयम् । यथा महान्तो जातपक्षाः पक्षिणः वयां वृक्षशाखां प्रोज्जिहानाः परित्यजन्तः ऊर्ध्वं गच्छेयुः । एवं प्रभानवः सिस्रते प्रसर्पन्ति भानवः अर्चींषि महान्ति नाकमच्छ । अच्छाभेराप्तुमिति शाकपूणिः । स्वर्गलोकमभि ॥ २४ ॥

अवोचाम । उद्गातारो ब्रुवन्ति । अवोचाम उक्तवन्तः वयं कवये क्रान्तदर्शनाय मेध्याय यज्ञियाय वचः स्तुतिलक्षणं वाक्यं वन्दारु वन्दनशीलं वृषभाय वर्षित्रे आहुतिपरिणामाभिप्रायमेतत् । वृष्णे सेक्रे यूने परिणामरहिताय । इदानीं गविष्ठिरः होता गवि वाचि स्थिरः अप्रकम्प्यः तस्य अग्निराधिष्ठात्री देवता । नमसा अन्नेन संयुक्तं स्तोमं स्तुतिम् । अग्नौ आहवनीयाख्ये अश्रेत् आसञ्जयिष्यति अग्निसंबन्धं करिष्यति । कथमिव दिवीव रुक्मम् । यथा द्युलोके रुक्मं रोचनमादित्यम् । उरुव्यञ्चं बह्वीभिः स्तुतिभिर्युक्तं स्वरसौष्ठवादियुक्तस्तोम आदित्येनोपमीयते ॥ २५ ॥

अयमिह । जागतस्तृचः प्रथमा व्याख्याता ॥ २६ ॥

जनस्य गोपाः । यो यजमानस्य गोपाः गोपायिता अजनिष्ट जातः जागृविः जागरणशीलः उत्कृष्टज्ञानः अग्निः सुदक्षः शोभनोत्साहः सुविताय नव्यसे सुप्रसूताय कर्म्मणे नवतराय स घृतप्रतीको घृतमुखो बृहता भानुना दिविस्पृशा । द्युतिमद्विभाति । शुचि शोचतेर्ज्वलतिकर्म्मणः । यद्वा मनुष्येभ्यो विजायमानः मनुष्यसंबद्धैर्दोषैर्न लिप्यते ॥ २७ ॥

त्वामग्ने । यं त्वां हे अग्ने अङ्गिरसः ऋषयः गुहाहितं निगूढे प्रदेशेऽवस्थितम् । अप्सु अग्निर्देवेभ्यः उदक्रामत्सोऽपः प्राविशत् इत्येवमादिनिदानमस्य मन्त्रस्य । अन्वविन्दल्लब्धवन्तः । पुनरपि नष्टं सन्तं शिश्रियाणं वने वनेऽवस्थितमोषधिवनस्पतिषु अन्वविन्दन्नङ्गिरस इति वर्त्तते । स त्वमिदानीमपि जायसे अरणिकाष्ठेभ्यो मथ्यमानः । सहो महत् । सहसा बलेन महता इति विभक्तिव्यत्ययः । अतश्च कारणात् त्वामाहुः ऋषयः सहसः पुत्रं बलस्य पुत्रं हे अङ्गिर इत्यग्नेः संबोधनम् ॥ २८ ॥

सखायः सम् । आनुष्टुभस्त्र्यृचः । यजमान ऋत्विजः संबोधयति । हे सखायः संगत्य शृणुत वः युष्मान् ब्रवीमि सम्यञ्चं संगतम् । एकीभूतम् इषं हविर्लक्षणमन्नं स्तोमं च त्रिवृत्पञ्चदशादि । अग्नये आभरत । कथंभूताय अग्नये वर्षिष्ठाय क्षितीनां मनुष्याणां पृथुतमाय । ऊर्जो नप्त्रे अपां पौत्राय । अद्भ्यः ओषधिवनस्पतयो जायन्ते ताभ्योऽग्निः । सहस्वते बलवते ॥ २९ ॥

संसमित् । समनुदोङ्: पादपूरणे इत्युपसर्गाभ्यासः । इदिति पादपूरणः । युवस इति विकरणव्यत्ययः । यः त्वं संयौषि संगमयसि हे वृषन् वर्षितः अग्ने विश्वानि वसूनि अर्यः ईश्वरः सन् आलोक्यालोक्य यजमानानाम् इडायाश्च गोः पदे कर्मार्थं समिध्यसे । यद्वा इडायाः पृथिव्याः पदे उत्तरवेदौ संदीप्यसे स नः अस्मभ्यं वसूनि धनानि आभर आहर देहि ॥ ३० ॥

त्वां चित्रश्रवस्तम । चित्रं नानारूपं श्रवो धनम् अतिशयेन यस्य स चित्रश्रवस्तमः तस्य संबोधनं हे चित्रश्रवस्तम हवं ते त्वामाह्वयन्ति विक्षु मनुष्येषु मध्ये स्थितं जन्तवो मनुष्याः । कथंभूतं शोचिष्केशम् । शोचन्ति दीप्यन्ते ज्वालाः केशस्थानीयाः अस्येति शोचिष्केशम् हे पुरुप्रिय बहवो यजमानाः प्रिया अस्येति पुरुप्रियः बहूनां वा यजमानानां प्रियः बहु वा हविः प्रियमस्येति समासविशेषाः । तस्य संबोधनं हे पुरुप्रिय । किमर्थमाह्वयन्ति हव्याय वोढवे हवींषि वोढुं विभक्तिपरिणामः ॥ ३१ ॥

एना वः । प्रगाथोऽयम् । तत्र च बृहती पूर्वा सतोबृहत्युत्तरा तत्र प्रगथनधर्मेण तिस्रो बृहत्यः संपादिताः । द्वयोस्तु व्याख्यानम् । नहि शास्त्रे व्यूढानां मन्त्राणामर्थान्तरं विद्यते । तथा च । आ

त्वा जिघर्मीति श्रुतिव्यतिषिक्ताभ्यां होममुक्त्वा प्रगुणाभ्यामेव व्याख्यानं करोति । अतः प्रगुणो व्याख्यायते । एना अनेन नमसा अन्नेन । व इति पादपूरणोऽर्थासम्भवात् । अग्निम् । ऊर्जो नपातम् । अपां पौत्रम् आहुवे आह्वयामि प्रियं सर्वजनप्रियम् । चेतिष्ठम् । अतिशयेन चेतनायुक्तम् । अरतिम् अलमतिं पर्याप्तमतिं स्वध्वरं शोभना यज्ञा अस्य विद्यन्त इति स्वध्वरः । विश्वस्य सर्वस्य यजमानजनस्य दूतम् । अमृतम् । अमरणधर्म्माणम् ॥ स योजते । स एवाग्निः योजते युनक्ति अरुषा अरोचनावश्वौ रथे विश्वभोजसा सर्वस्य भोक्तारौ द्वितीयाद्विवचनस्य स्थाने द्वयोः प्रातिपदिकयोराकारः । स एव च दुद्रवत् । गच्छति । स्वाहुतः शोभनेन प्रकारेणाहुतः सन् क गच्छतीत्यत आह यत्र सुब्रह्मा यज्ञः । सुब्रह्मग्रहणं सर्वर्त्विगुपलक्षणार्थं शोभनर्त्विग्यज्ञः सुशमी च । शमीति कर्मनाम । शोभनानि कर्माणि यस्मिन् यज्ञे स सुशमी वसूनां देवं वसूनां रुद्राणामादित्यानां देवानां यस्मिन् यज्ञे लक्तानि सवनानि । एवमध्याहारेण विभक्तिव्यत्ययेन च वाक्यसामञ्जस्यम् । राधो जनानां राधो धनं च यत्र जनानां उपलक्तं तत्र स योजत इति सम्बन्धः ॥ ३२ ॥ ३३ ॥ ३४ ॥

अग्ने वाजस्य उष्णिहस्त्यृचः । हे अग्ने यस्त्वं वाजस्यान्नस्य गोमतो गोभिः संयुक्तस्य ईशान ईश्वरः । हे सहसो यहो बलस्य पुत्र । सह इति बलनाम । यहुरिति पुत्रस्य नाम मथ्यमानो जायते तस्मादेनमाह सहसस्पुत्रमित्यादि । स त्वमस्मे धेहि अस्मभ्यं देहि हे जातवेदः महि महत् श्रवः श्रवोऽन्नलक्षणं धनं गोभिः संयुक्तम् ॥ ३५ ॥

स इधानः । य उक्तगुणः स इधानो दीप्यमानः वसुः उपकारभूतः वासयिता वा कविः मेधावी अग्निः ईडेन्यः स्तुत्यः गिरा वाचा त्रयीलक्षणया । परस्तु पादः प्रत्यक्षकृतः । अतो भिन्नं वाक्यं रेवत् रयिमत् धनवत् अस्मभ्यम् । अस्मदर्थम् । हे पुर्वणीक बहुमुख अनीकं मुखं पुरु बहु नाम । यतो ह्येवं कुतश्चाग्नावभ्यादधाति तत एव प्रदहतीति श्रुतिः । दीदिहि दीप्यस्व एकं वाक्यं कृत्वा व्याख्यायते । यत्तदोर्व्यत्ययेन । यः त्वामिधानो दीप्यमानः वसु धनं तापपाकप्रकाशैः उपकारकः कविः क्रान्तदर्शनः । अग्निः ईडेन्यः स्तुत्यः ऋषिभिर्गिरा वाचा तं त्वां ब्रवीमि रेवद्धनवदस्मदर्थं प्रकी-

र्णस्य दीप्यस्व ॥ ३६ ॥

क्षपो राजन् । यस्त्वं क्षपः क्षपयिता हे राजन् रक्षसाम् । उत-त्मना अप्यात्मनैव स्वभावत एव हे अग्ने वस्तोः अह्नः सम्बन्धिनां रक्षसाम् उत उषसः अपि उषसः सम्बन्धिनां सः । हे तिग्मजम्भ वज्रदंष्ट्र । तिग्ममिति वज्रनाम । रक्षसो दह प्रतीत्येत्यर्थः ॥ ३७ ॥

भद्रो नः । द्वे ऋचौ । पूर्वा ककुप् बृहत्युत्तरा । तिस्रः ककुभः सम्पादिताः सुभगेति चित्यमग्निं सम्बोध्य प्रार्थयति भद्रः भन्दनीयः नः अस्माकम् । अग्निः आहुतः अभिहुतः भवत्विति शेषः । भद्रा रातिः । रा दाने । रातिः दानं भवतु हे सुभग महदैश्वर्ययुक्त

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ॥

ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ।

भद्रश्चाध्वरो यज्ञो भवतु । किञ्च भद्रा उत प्रशस्तयः । प्रशंसनानि भवन्तु अस्माकं भद्रं मनः । भद्रं स्तुत्यं मनः कुरुष्व वृत्रतूर्ये । शत्रुवधाय तुर्यतिर्वधकर्मा । येना समत्सु । येन मनसा समत्सु संग्रामेषु सासहः । षह मर्षणे छन्दस्यभिभवे च अभिभवसि । किञ्च । अव स्थिरा तनुहि । अवतनुहि अवतारय स्थिराणि कठिनानि धनूंषि भूरि शर्द्धतां बहुप्रकारं बलमात्मनि कुर्वताम् । शर्द्ध इति बलनाम । अतिबलायमानानाम् । ततो वयं शत्रुभिरप्रतिबध्यमाना वनेम सम्भजेमहि । तानेव शत्रून् ते तव अभिष्टिभिः अभिष्टयागैः ॥ ३८ ॥ ३९ ॥ ४० ॥

अग्निं तं मन्ये । पाङ्क्तस्त्र्यृचः । तमहमग्निं मन्ये जाने । यो वसुः धनं तापपाकप्रकाशैरुपकुर्वन् धनमित्युच्यते । यद्वा वसुर्वासयिता । अस्तं यं यन्ति धेनवः । यं चाग्निमुद्धृतं ज्ञात्वा प्राप्तोऽस्माकं दोहकाल इति । अस्तं गृहं यन्ति धेनवः । अस्तं गृहमर्वन्तः अश्वाः आशवः शीघ्राः यन्ति स्वामी हि पशूनामग्निः । स तज्जातः पशून् विन्दतेत्युपक्रम्य तस्मात्सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति श्रुतिः । अस्तं च नित्यासः शाश्वतिकाः वाजिनः सुहयाः सैन्धवाभिप्रायमेतत् । य उपास्यमान एतत्सर्वं यजमानस्योत्पादयति तमग्निं मन्ये । अधस्तनाश्चत्वारः पादाः परोक्षकृताः । अयं तु प्रत्यक्षकृतोऽध्याहारेण परिपूर्त्तिः । यदि स त्वमग्निः इषमन्नं स्तोतृभ्यः यजमानेभ्यः आभर देहि ॥ ४१ ॥

सोऽग्निः । स एवाग्निः यो वसुरिति गीयते स्तोतृभिः संयमायन्ति धेनवः समायन्ति च यं धेनवः समर्वन्तो रघुद्रुवः समायन्ति च अर्वन्तोऽश्वा लघुद्रवणा समागच्छन्ति वसुजातासः कल्याणजन्मानः सूरयः पण्डिताः । एतदुक्तं भवति । किं तेनाग्निना यत एतत्सर्वमात्मद्वारेण यजमानस्य नोपगमयतीति स चेत्त्वम् इषं स्तोतृभ्य आभर ॥ ४२ ॥

उभे सुश्चन्द्र । हे अग्ने सुश्चन्द्र शोभनश्चन्द्र इव धनानामुत्पादक शोभने हि चन्द्रमसि धनान्युत्पद्यन्त इति ज्योतिः शास्त्रविदः प्रतिजानते । यद्वा कल्याणह्लादन उभे दर्वी उभौ हस्तौ दर्व्याकारौ कृत्वा श्रीणीषे श्रयसि आसनि आस्ये मुखे सर्पिषः पानाय उतो न उत्पुपूर्याः अपि चैवं ब्रूमो यदि नाम उत्क्षिप्य सर्प्पिषो भाण्डमत्यर्थमञ्जलिं पूरयेदस्माकं साधु कृतं स्यात् । उक्थेषु यज्ञेषु हे शवस्पते बलपते यद्येवमिषं स्तोतृभ्य आभर ॥ ४३ ॥

अग्ने तमद्य । पद्पाङ्क्तस्तृचः । हे अग्ने तं तावकं क्रतुं यज्ञम् अद्य ऋध्याम समर्द्धयेमहि । कथमिव अश्वं न स्तोमैः । यथाश्वम् आश्वमेधिकं स्तुतिभिः समर्द्धयेयुरेवं समर्द्धयेमहि क्रतुं संकल्पमिव ते तव सम्बन्धिभिः ओहैः वहैरेतद्रूपं प्रापणैः त्वन्नामबन्धुकर्मरूपयुक्ताभिः स्तुतिभिः दक्षिणाभिश्च यज्ञं समर्द्धयेमहि इति समस्तार्थः ॥ ४४ ॥

अधा ह्यग्ने । अध अथ समनन्तरमेव । हिः पादपूरणः । हे अग्ने क्रतोः भद्रस्य सङ्कल्पस्य भेदं वीर्यस्य दक्षस्य तस्यैव समृद्धस्य समृद्धो हि सङ्कल्पो दक्ष इत्युच्यते । साधोः अतिशययुक्तस्य रथीः इव बभूथ भव ऋतस्य यज्ञस्य बृहतो भव च ॥ ४५ ॥

एभिर्नः । एभिः अर्कैः मन्त्रैर्नः अस्माकं सम्बन्धिभिः स्तूयमान इति शेषः । अस्मान् अर्वाङ् । अभिमुखाञ्चनः । कथमिव स्वर्णज्योतिर्यथा स्वराख्यं ज्योतिरुदयादारभ्यार्वागञ्चनं सर्वप्राणिनोऽनुगृह्णाति । एवं भवावार्गञ्चनोऽनुग्रहपरतया हे अग्ने विश्वेभिः अनीकैः सर्वैर्मुखैः अनीकं मुखं सुमना शोभनमनस्कः सन् ॥ ४६ ॥

अग्निं होतारम् । अतिच्छन्दाः । अग्निरत्याष्टिर्वा । तमहमग्निं होतारं मन्ये जानामि दास्वन्तं दानवन्तं वसुं वासयितारं सूनुं सहसः बलस्य पुत्रं जातवेदसं जातप्रज्ञानं विप्रं न जातवेदसं विप्र-

मिव जातप्रज्ञानं यः देवः दानादिगुणयुक्तः ऊर्ध्वया ज्वालया स्वध्वरः साधुयज्ञः । देवाच्या कृपा । देवान् प्रत्यक्तया देवान्प्रति गतया कृपा कल्पितया घृतस्य विभ्राष्टिम् । अनुवष्टि शोचिषा घृतस्य विभ्रंशं पातम् । अनुकामय ते दीप्त्या आजुह्वानस्य आहूयमानस्य सर्पिषो घृतस्य तमहमग्निं होतारं मन्य इति सम्बन्धः ॥४७ ॥

अग्ने त्वं द्विपदः । त्र्यृचो व्याख्याताः ॥ ४८ ॥

येन ऋषयः । अष्टाभिर्ऋग्भिः पुनश्चितिश्चीयते तत्र षट् त्रिष्टुभः । द्वे अनुष्टुभौ । येन तपसा ऋषयः सत्रम् आयन् । आगतवन्तः इन्धानाः अग्निम् । आदीपयन्तोऽग्निम् । उष्यं स्वराभरन्तः । स्वीकुर्वाणास्तेनैवाहं तपसा सत्रमागत्याग्निमादीप्य स्वर्लोकं च स्वीकृत्य तस्मिन् अहं निदधे स्थापयामि नाके अग्निं न विद्यते अकं यत्र गतानां स नाकः स्वर्गो लोकः । यमाहुः मनवः मननप्रधानाः स्तीर्णबर्हिषं सर्वैर्यज्ञसाधनैः संपादितसुखमित्यर्थः ॥ ४९ ॥

ते पत्नीभिः । तदः श्रवणात् यदोऽध्याहारः । द्वितीयार्द्धर्चात् व्याख्येया । यं नाकं गृह्णानाः स्वीकुर्वन्तः ऋषयः सुकृतस्य लोके साधुकृतस्य स्थाने तृतीये पृष्ठे अधिरोचने ऽवस्थिता दिव एकदेशीभूते यत्रादित्यस्तपतीति तं पत्नीभिः सह अनुगच्छेम । हे देवाः पुत्रैर्भ्रातृभिः अपि च हिरण्यैः ॥ ५० ॥

आ वाचो मध्यमरुहत् । आरुहद् वाचो मध्यं यत्रैष चीयते भुरण्युः भर्ता अयम् अग्निः सत्पतिः शोभमानानां पतिः चेकितानः चेतयमानः । किञ्च पृष्ठे पृथिव्याः निहितः स्थापितः दविद्युतत् दीप्यमानः । अधस्पदं पादयोः अधः कृणुतां करोतु ये पृतन्यवः ये पाप्मानः तान्सर्वान् ॥ ५१ ॥

अयमग्निः । अयमग्निः वीरतमः अतिशयेन वीरः वयोधाः वयोऽन्नं हविर्लक्षणमस्मिन् धीयते सहस्रियः सहस्रार्हः द्योतताम् दीप्यताम् । अप्रयुच्छन् अप्रमत्तः । किञ्च विभ्राजमानः सरिरस्य मध्ये । इमे वै लोकाः सरिरं दीप्यमान एषु लोकेषु उपप्रयाहि यात्विति पुरुषव्यत्ययः परोक्षकृतत्वान्मन्त्रस्य दिव्यानि धाम धामानीति बहुवचनेन सङ्गतिः स्थानानीति पर्यायः ॥ ५२ ॥

ऋषीनाह मन्त्रदृक् । सम्प्रच्यवध्वमेतमग्निम् । उपसंप्रयात च त्वां हे अग्ने पथः देवयानानृषीणां कृणुध्वं कुरु इति वचनव्यत्य-

यः । किञ्च पुनरपि कृण्वानाः कुर्वाणाः ऋषयः पितरा युवाना वाक् मनश्च पितरा युवानेति श्रुतिः । वाङ्मनसी युवाना तरुणे अयातयामे अन्योऽन्यं संगते वा । संगते हि वाक् च मनश्च यज्ञं साधयतः । अन्वातांसीत् त्वयि तन्तुमेतम् । अन्वातापत त्वयि तन्तुं यज्ञमेतं हे अग्ने ॥ ५३ ॥

उद्बुध्यस्व । प्रतिबुद्धो भव । हे अग्ने प्रतिजागृहि च त्वं तत इष्टापूर्त्ते संसृजेथां त्वत्प्रसाद्यजमानेन सह अयं यजमानः इष्टापूर्त्ताभ्यां संसृष्टो भवतु ततः संसृष्टेष्टापूर्त्तः सन् गतकल्मषः सन् अस्मिन् सधस्थे सहस्थाने देवैः । पुनरपि विशिनष्टि अध्युत्तरस्मिन् सर्वोत्कृष्ट आदित्यलोके विश्वे देवा यजमानश्च सीदत सीदन्तु विश्वैर्देवैर्यजमानस्य समानलोकता प्रार्थ्यते ॥ ५४ ॥

येन वहसि । येन हेतुना सामर्थ्येन वा वहसि प्रापयसि सहस्रम् । येन हे अग्ने सर्ववेदसं सर्वधनं तेन इमं यज्ञं नः अस्मत्संबन्धिनं नय प्रापय स्वर्देवेषु गन्तवे स्वर्गं लोकं देवान्प्रति गमनाय । यज्ञे हि स्वर्गलोकं गतेऽस्माकमपि गमनं भवति । तदुक्तम् । सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणायां ददाति सैति दक्षिणामन्वारभ्य यजमान इति ॥ ५५ ॥

अयं त इति व्याख्यातम् ॥ ५६ ॥

ऋतव्ये तपश्च । तपस्यश्चेति व्याख्यातम् ॥ ५७ ॥

विश्वं ज्योतिषम् परमेष्ठी त्वेति व्याख्यातम् ॥ ५८ ॥

लोकं पृण ॥ ५९ ॥

ता अस्य ॥ ६० ॥

इन्द्रं विश्वा इति व्याख्यातम् ॥ ६१ ॥

विकर्णीमुपदधाति । प्रोथदश्वः । आग्नेयी त्रिष्टुप् । मथ्यमानोऽग्निः प्रोच्यते । प्रोथतिः शब्दार्थः । शब्दायतेऽग्निः । अश्वो न यवसेऽविष्यन् । अश्व इव यवसे घासे विषयभूते अविष्यन् ग्रसिष्यन् यदा यस्मिन् काले महः महतः संवरणाद् संव्रियतेऽस्मिन्नग्निमिति संवरणमरणिकाष्ठमुच्यते । अरणिकाष्ठात् व्यस्थात् व्युत्तिष्ठति प्रकाशीभवति । आत् अथानन्तरमेवास्याग्नेः वातः अनु वाति शोचिः संदीपनः । अध अथ समानार्थौ छन्दसि । स्म निपातोऽनर्थकः । ते एतस्येत्यर्थः । न ह्यत्र युष्मदः प्रयोगः परोक्षकृतत्वान्म-

न्त्रस्य । श्रुतिरप्यमुमर्थं दर्शयति । अथैतस्य व्रजनं कृष्णं भवतीति । व्रजति गच्छत्यनेनेति व्रजनं कृष्णं भवति ॥ ६२ ॥

स्वयमातृण्णामुपदधाति । आयोष्ट्वा । आ या द्यां भासीत्यारम्भः । यच्छब्दयोगात् । आ या द्यां भासि । द्युलोकसंस्तवोऽस्याः स्वयमातृण्णायाः । आभासि प्रकाशयसि या त्वं द्यां द्युलोकम् । आपृथिवीम् । आभासि च पृथिवीम् । उर्वन्तरिक्षम् । आभासि च उरु विस्तीर्णम् । अन्तरिक्षं तां त्वां रश्मिवतीं रश्मिसंयुक्तां भास्वतीं भासा संयुक्ताम् । आयोः अयनस्य आदित्यस्य त्वां सदने अवस्थाने सादयामि अवतः अवनस्य पालयितुः दीप्यतो वा छायायाम् । आश्रये समुद्रस्य समुन्दनस्यादित्यस्य हृदये प्रधानप्रदेशे आदित्यो हि सर्वं समुन्दतीति समुद्र उच्यते ॥ ६३ ॥

परमेष्ठी त्वा सादयत्विति व्याख्यातम् ॥ ६४ ॥

अग्निं प्रोक्षति । हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रम् । सहस्रस्य प्रमा प्रमाणं भवसि । सहस्रस्य प्रतिमा प्रतिमानं भवसि । सहस्रस्य उन्मानं भवसि तुलामानं भवसि । साहस्रः सहस्रार्होऽसि । अतः सहस्राय त्वां प्रोक्षामि॥६५॥

उव्वटकृतौ मन्त्रभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥

---

## अथ षोडशोऽध्यायः ॥ १६ ॥

---

शतरुद्रियहोमः । अथातः शतरुद्रियं जुहोति इत्युपक्रम्य स एषोऽत्राग्निश्चितो बुभुक्ष्यमाणो रुद्ररूपेणावतिष्ठते तस्य तर्पणं देवैः कृतं द्वितीयं दर्शनं यद्वैतच्छतरुद्रियं जुहोतीत्युपक्रम्य प्रजापतेर्विस्रस्तादित्यभिधाय मन्त्रार्थानुगुण्येन श्रुतिर्भवति स एव शतशीर्षा रुद्रः समभवदिति । नमस्ते रुद्र मन्यवे । रौद्रोऽध्यायः परमेष्ठिन आर्षं देवानां प्रजापतेर्वाद्योऽनुवाकः षोडशभिर्ऋग्भिः तत्र एको रुद्रो देवता । एका गायत्री तिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्तानुष्टुभो द्वे जगत्यौ । नमोऽस्तु ते । हे रुद्र तव सम्बन्धिने मन्यवे क्रोधाय उतो अपि च तव सम्बन्धिने इषवे काण्डाय नमोऽस्तु । बाहुभ्यामुत अपि ते तव सम्बन्धिभ्यां नमोऽस्तु ॥ १ ॥

या ते रुद्र शिवा तनूः । या ते तव हे रुद्र शिवा शान्ता तनूः शरीरम् । अघोरा अविषमा । अपापकाशिनी । पापमसुखं या प्रकाशयति सा पापकाशिनी न पापकाशिनी अपापकाशिनी तया । नः अस्मान् तन्वा शन्तमया सुखतमया सुखयितृतमया अतिशयेन सुखयित्र्या हे गिरिशन्त । गिरौ पर्वते कैलाशाख्ये अवस्थितः शं सुखं तनोतीति गिरिशन्तः । यद्वा गिरि वाच्यवस्थितः सुखं तनोति । यद्वा गिरौ मेघेऽवस्थितो वृष्टिद्वारेण सुखं तनोति तस्य सम्बोधनं गिरिशन्त अभिचाकशीहि । अभिपश्य सुखयितुमेवेति शेषः । चाकशीतिः पश्यतिकर्म्मा ॥ २ ॥

यामिषुम् । यामिषुं काण्डं हे गिरिशन्त गिरौ पर्वतेऽवस्थितः कैलाशाख्ये सुखं तनोति इति गिरिशन्तः तस्य सम्बोधनम् । हे गिरिशन्त हस्ते बिभर्षि धारयसि अस्तवे असितुं क्षेप्तुमित्यर्थः । शिवाम् । हे गिरित्र गिरौ कैलाशेऽवस्थितः त्रायते भूतानीति गिरित्रः तस्य सम्बोधनं हे गिरित्र तां कुरु । किञ्च मा हिꣳसीः मा वधीः पुरुषं जगत् जङ्गमं च गवादि ॥ ३ ॥

शिवेन वचसा । शिवेन वचनेन त्वा त्वां हे गिरिश गिरौ कैलाशाख्ये शेरत इति गिरिशः । अच्छावदामसि । अच्छाभेराप्तुमिति शाकपूणिः । इदन्तो मसि । अभिवदामः । तथा अभिवदामः । यथा येन प्रकारेण नः अस्माकं सर्वमित् । इच्छब्द एवार्थे सर्वमेव जगत् जङ्गमादि । अयक्ष्मं यक्ष्मा व्याधिस्तद्रहितं सुमनाश्च शोभनमनस्कम् । असत् भूयात् ॥ ४ ॥

अध्यवोचत् । अधीत्युपरिभावमैश्वर्यं वा अधिवदतु ब्रवीतु कश्चित्स्वकीयं पुरुषं भगवान् रुद्रः अधिवक्ता ऐश्वर्येणैव यो वदितुं जानाति । प्रथमो दैव्यो भिषक् । देवसम्बन्धी भिषक् वैद्यः । किमधिवदत्वित्यत आह अहींश्च सर्वान् जम्भयन् । जभ जृभी गात्रविनामे । सर्वान् सर्वप्रकारान् । नाशयन् सर्वाश्च यातुधान्यः अधराचीः परासुव क्षिपतु ॥ ५ ॥

असौ यः । आदित्यरूपेणात्र रुद्रः स्तूयते । अभिनयेन दर्शयन्नाह असौ यस्ताम्रवर्ण उदयकाले । अस्तमनकाले च अरुणः उत बभ्रुः अपि च बभ्रुवर्णः बभ्रुः कपिशो वर्णः सुमङ्गलः शोभनानि मङ्गलानि यस्येति सुमङ्गलः । अवास्य हेड ईमह इत्यनुषङ्गः । ये

च एनं भगवन्तमादित्यं रुद्राः रश्मयः अभितः इतश्चेतश्च दिक्षु सर्वासु च श्रिताः स्थिताः सहस्रशः असंख्याताः । अव एषां हेड ईमहे । अव ईमहे अवनयामः एषां संबन्धि । हेड इति क्रोधनामसु पठितम् । यद्वा रुद्र एवोच्यते । असौ यस्ताम्रवर्णः अरुणवर्णः अपि च बभ्रुवर्णः सुमङ्गलः अनेकानि रूपाणि रुद्रः करोति कार्यवशात् । समञ्जसमन्यत् ॥ ६ ॥

असौ यः । आदित्योऽवसर्पति । अवाचीनं सर्पति गच्छत्यस्तमयकाले नीलग्रीवः । नीलग्रीव इवास्तं गच्छन् लक्ष्यते धनुर्मात्रेण प्राप्तलोहितमण्डलाभिप्रायम् । उतैनं गोपा अदृश्रन् । अथैनं गोपालाः पश्यन्ति गवां प्रवेशनकालं मन्यमानाः । अदृश्रन्नुदहार्यः । अस्मान् अत्यन्तमृदुहृदयतम इत्यभिप्रायः । यद्वा रुद्र एवोच्यते । ऋषिराह । असौ यः अवाचीनं सर्पति अभिमुखमागच्छति नीलग्रीवो नीलकण्ठः विलोहितः विगतकलुषभावः उतैनं गोपाः अदृश्रन्नदृश्रन्नुदहार्य इति । आगोपालाङ्गनादिप्रसिद्धिं दर्शयति । समञ्जसमन्यत् ॥ ७ ॥

नमोऽस्तु नमस्कारोऽस्तु नीलग्रीवाय नीलकण्ठाय सहस्राक्षाय बह्वक्षाय मीढुषे । मिह सेचने । सेक्त्रे तरुणाय अविपरिणामीति स्तूयते । अथो अपि च ये अस्य सत्वानः सत्वभूता रुद्राः अहं तेभ्यः अकरं करोमि नमस्कारम् ॥ ८ ॥

प्रमुञ्च धन्वनः । धनुषः त्वमुभयोः आर्त्न्योर्धनुरन्तयोः ज्याम् । याश्चते तव हस्ते इषवः काण्डानि ताः परावप पराक्षिप हे भगवन् ॥ ९ ॥

विज्यं धनुः । विगतगुणं धनुः कपर्दिनः कपर्दोऽस्यास्तीति कपर्दी कपर्दोऽस्य जटाबन्धः । विशल्यः शल्यरहितः बाणवान् बाणा अस्य सन्तीति बाणवान् इषुधिः उत अपि च अनेशन् । णश अदर्शने । नष्टा अस्य या इषवः आभुः रिक्तः अस्य निषङ्गधिः निषज्यत इति निषङ्गः खड्गमुच्यते तद्यस्मिन् धीयत इति स निषङ्गधिः । न्यस्तसर्वशस्त्र इत्यभिप्रायः ॥ १० ॥

या ते । या तव हेतिः आयुधं हे मीढुष्टम । मिह सेचने । सेक्तृतम युवतम परिणामनिषेधद्वारेण स्तुतिः । अस्मात्सर्वं भवति हस्ते बभूव ते इति अनर्थकः । धनुरिति हेतिविशेषणम् । तया हेत्या अस्मान् विश्वतः सर्वतस्त्वम् अयक्ष्मया व्याधिरहितया परिभुज

परिपालय ॥ ११ ॥

परि ते । परिवृणक्तु परिवर्जयतु ते तव धन्वनः धनुषः संबन्धिनी हेतिः आयुधं काण्डलक्षणम् अस्मान्विश्वतः । अथो अपि च य इषुधिर्बाणवान् तव अस्मत्तः आरे दूरे निधेहि स्थापय तमिषुधिम् ॥ १२ ॥

अवतत्य अवतार्य धनुः त्वं हे सहस्राक्ष शतेषुधे । शतशब्दो बहुपर्यायः । निशीर्य शल्यानां मुखा । शातयित्वा फलानां मुखानि शिवः शान्तः नः अस्माकं सुमनाः शोभनमनस्कश्च भव ॥ १३ ॥

नमस्ते । नमोऽस्तु ते तव आयुधाय अनातताय अवतारिताय धृष्णवे धर्षणशीलाय सुशल्याय उभाभ्याम् उत अपि च तव नमोऽस्तु बाहुभ्यां तव धन्वने धनुषे नमस्कार इत्यनुवर्त्तते ॥ १४ ॥

मा नः । मा बधीः नः अस्माकं महान्तं वृद्धं वयःप्रभृतिभिः उत मा नो अर्भकम् । अपि च मा बधीः नः अस्माकम् अर्भकम् अल्पकम् । मा न उक्षन्तम् । मा बधीः नः अस्माकम् उक्षन्तम् । उक्ष सेचने । सिञ्चन्तं तरुणमिति यावत् । उत मा न उक्षितम् अपि च मा बधीः नः अस्माकम् । उक्षितं सिक्तं गर्भस्थमित्यर्थः । मा नो बधीः नः अस्माकं पितरम् । आदरार्थं पुनर्वचनम् । महान्तमिति सिद्धत्वात् । मोत मातरं मा बधीः अपि च मातरं मा नः प्रियास्तन्वः रुद्र रीरिषः । रिषतिर्हिंसार्थः । मा च रीरिषः मा हिंसीः न अस्माकं प्रियाः तन्वः प्रियाणि शरीराणि पुत्रपौत्रप्रपौत्रलक्षणानि हे रुद्र ॥ १५ ॥

मा नः । मा रीरिषः । रिषतिर्हिंसाकर्म्मा । मा हिंसीः नः अस्माकं तोके पुत्रविषये तनये पौत्रविषये मा हिꣳसीः नः अस्माकम् । आयुषि विषयभूते मा नो गोषु मा हिꣳसीः । नः अस्माकं गोषु विषयभूतासु मा नो अश्वेषु मा हिꣳसीः । नः अस्माकमश्वेषु विषयभूतेषु । यद्वा विभक्तिव्यत्ययेन व्याख्यानम् । मा रीरिषः अस्माकं तोकं तनयम् । आयुः गाः आश्वान् । मा नो वीरान् रुद्र भामिनो बधीः । नः अस्माकं वीरान् हे रुद्र भामिनः । भाम क्रोधे । क्रोधिनः क्रोधयुक्तान् । कः प्रत्युपकार इति चेत् हविष्मन्तः हविषा संयुक्ताः सन्तः सदाकालम् । इत् इच्छब्द एवार्थे त्वामेवाह्वयामहे । आह्वयामो यागार्थम् अनन्यशरणा वयमित्यभिप्रायः ॥ १६ ॥

नमो हिरण्यबाहवे । इत् उत्तरं यजूंषि द्रापे अन्धसस्पत इति यावत् । द्वयोर्द्वयो रुद्रयोः स्तुतिः । तिस्रोऽशीतयो रुद्राणां कण्डिकायां कण्डिकायाम् अष्टौ रुद्राः तेषां च उभयतो नमस्काराः अन्ये अन्यतरतो नमस्काराः । अन्ये रुद्राः ते ह ते घोरतराः अशान्ततराः ये उभायतो नमस्कारा इति । नमोऽस्तु हिरण्यालङ्कारभूषितबाहवे । सेनान्ये । च सेनां नयतीतिसेनानीः दिशां च पतये नमः । नमो वृक्षेभ्यो हरिकेशेभ्यः । वृक्षरूपेभ्यो नमस्कारः हरितानि पर्णानि केशा इव येषां लक्ष्यन्ते । पशूनां पतये नमः । नमः शष्पिञ्जराय । नवप्ररूढानि तृणानि शष्पं तद्वर्णाय । त्विषि दीप्तिः तद्वत् पथीनां पतये नमः । पथामिति प्राप्ते छान्दसम् । नमो हरिकेशाय लोहितकेशाय उपवीतिने यज्ञोपवीतिने पुष्टानां पतये नमः ॥ १७ ॥

नमो बभ्लुशाय बभ्रुवर्णाय बभ्रुः कपिलः । व्याधिने विध्यतीति व्याधी अन्नानां पतये नमः । नमो भवस्य हेत्यै । भवः संसारः हेतिरायुधं संसारस्य छेत्रे जगतां पतये नमः जगतां जङ्गमानाम् । नमो रुद्रायाततायिने । आततायिने आततेन धनुषा एतीत्याततायी उद्यतायुधाय क्षेत्राणां पतये नमः । सूताय सूतः सारथिः अहन्त्यै अहन्त्रे नहि सूतः किञ्चापि हन्ति । वनानां पतये नमः ॥ १८ ॥

नमो रोहिताय । वर्णतो निर्देशः । स्थपतये स्थपतिर्गृहादीनां कर्त्ता विश्वकर्मरूपेण । वृक्षाणां पतये नमः । नमो भुवन्तये भुवं पृथिवीं तनोति विस्तारयतीति भुवन्तिः वारिवस्कृताय वरिवो धनं तत्कृतं येन स वरिवस्कृतः दीर्घत्वं छान्दसम् । ओषधीनां पतये नमः । नमो मन्त्रिणे । प्रसिद्ध एव मन्त्री । वाणिजाय । वणिगेव वाणिजः । कक्षाणां पतये नमः । नदीकक्षः पर्वतकक्षो वा । नमः उच्चैर्घोषाय महाशब्दाय आक्रन्दते आक्रन्दः प्रसिद्धः । पत्तीनां पतये नमः । हस्त्यश्वरथपदातिः पत्तिः ॥ १९ ॥

नमः कृत्स्नायतया । कृत्स्नायततयेति प्राप्ते तकारलोपः छान्दसः । कृत्स्नश्चासावायतश्चेति कृत्स्नायतः पूरितधनुः तस्य भावः कृत्स्नायतता तया हेतुभूतया धावते । आकर्णपूरं पूरितेन धनुषेत्यर्थः । सत्वनाम् । सत्वानां पतये नमः । सहमानाय अभिभवनशीलाय निव्याधिने । नितरां विध्यतीति निव्याधी आव्याधिनीनां पतयेन नमः । आविध्यन्ति याः सेनाः ताः आव्याधिन्यः । नमो निष-

ङ्गिणे । निषङ्गः खड्गः ककुभाय ककुभ इति महन्नामसु पठितम् । स्ते- नानां पतये नमः । स्तेनश्चौरः नमो निचेरवे । नितरां चरतीति नि- चेरुः परिचराय सर्वतो गन्त्रे अरण्यानां पतये नमः ॥ २० ॥

नमो वञ्चते । वञ्चतिर्गत्यर्थः गन्त्रे परिवञ्चते सर्वतो गन्त्रे । स्तायूनां पतये नमः स्तायुश्चौर एव नमो निषङ्गिणे इषुधिमते । इषुधिरस्यास्तीति इषुधिमान् । तस्कराणां पतये नमः । तस्कर- श्चौर एव । नमः सृकायिभ्यः सृक इति वज्रनामसु पठितम् । सृकेन गृहीतेन एतुं शीलमेषामिति सृकायिनः जिघांसद्भ्यः । हन्तुमिच्छद्भ्यः मुष्णतां पतये नमः । मुष स्तेये । नमोऽसिमद्भ्यः । असिः खड्गः तत्संयुक्तेभ्यः नक्तञ्चरद्भ्यः रात्रौ गच्छद्भ्यः । विकृ- न्तानां पतये नमः । विकर्त्तनशीला विकृन्ताः ॥ २१ ॥

नम उष्णीषिणे । उष्णीषो यस्यास्तीति उष्णीषी उष्णीषः शि- रोवेष्टनम् । गिरिचराय गिरौ पर्वते चरति । कुलुञ्चानां पतये नमः । कुत्सितं लुञ्चति कुलानि वा लुञ्चतीति कुलुञ्चाः नम इषु- मद्भ्यः धन्वायिभ्यश्च वो नमः । व्याख्याधर्मः प्रदर्श्यते नमोऽस्तु ये यूयमिषुमन्तस्तेभ्य इषुमद्भ्यः । धनुषा गृहीतेन एतुं शीलमेषा- मिति धन्वायिनः । वा संज्ञायामिति धनुषोऽनङ् । धन्वायिभ्य- श्च । चकारः समुच्चयार्थीयः । वः युष्मभ्यं नमः । नम आतन्वाने- भ्यः । उक्षिप्तज्याकानि धनूंषि कुर्वाणेभ्यः । प्रतिदधानेभ्यश्च वो नमः । प्रतिदधानाः सन्दधानं कुर्वाणाः नम आयच्छद्भ्यः आकर्ष- द्भ्यो धनूंषि । अस्यद्भ्यश्च वो नमः । असु क्षेपणे काण्डानि क्षिप- द्भ्यः ॥ २२ ॥

नमो विसृजद्भ्यः । काण्डानि विक्षिपद्भ्यः । योद्धारं प्रति वि- ध्यद्भ्यश्च वो नमः । विध्यन्ति ताडयन्ति ये शरैः तेभ्यो विध्यद्- भ्यः नमः । स्वपद्भ्यः जाग्रद्भ्यश्च वो नमः । नमः शयानेभ्य श्च वो नमः । नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः । शतृशानज- न्तान्येतानि पदानि ऋजून्येव ॥ २३ ॥

इत उत्तरं जातेभ्यो जुहोति । जाता जातिविशेषाः इहोच्य- न्ते । रुद्राद्वैतप्रतिपादनाय । रुद्रलोके किलेत्थम्भूता रुद्राः सन्ति । तदुक्तम् । अथो एवꣳहैतानि रुद्राणां जातानि । नमः सभाभ्यः । सभादिभ्यो रुद्रदृष्टिः कर्त्तव्येति तात्पर्यार्थः । सभापतिभ्यश्च वो

नमः । नमोऽश्वेभ्यो अश्वपतिभ्यश्च वो नमः । आव्याधिनीभ्यः आविध्यन्तीत्याव्याधिन्यः सेनाः । विविध्यन्तीभ्यश्च वो नमः । विविधं विध्यन्तीति विग्रहः सेना एवाभिधेया । नम उगणाभ्यः । उद् उपसर्गस्यान्तलोपः । उद्गूर्णा गणाः समूहा यासु सेनासु ता एवमुच्यन्ते । तृंहतीभ्यश्च वो नमः । तृंहतिः हिंसाकर्मा । हिंसन्तीभ्यः ॥ २४ ॥

नमो गणेभ्यः । गणः समूहः गणपतिभ्यश्च वो नमः । व्रातेभ्यः व्रातमर्हन्तीति व्राता गणविशेषा एव । व्रातपतिभ्यश्च वो नमः । नमो गृत्सेभ्यः । गृत्सो मेधावी । गृत्सपतिभ्यश्च वो नमः । नमो विरूपेभ्यः निकृष्टरूपेभ्यः नानारूपेभ्यो वा विश्वरूपेभ्यश्च वो नमः । विश्वरूपाः सर्वरूपाः ॥ २५ ॥

नमः सेनाभ्यः । सेना चमूः । सेनानिभ्यश्च वो नमः । सेनां नयतीति सेनानीः नमो रथिभ्यः । रथा येषां सन्ति ते रथिनः अरथिभ्यश्च वो नमः । अरथा रथवर्जिता योद्धारः । नमः क्षत्तृभ्यः रथानामधिष्ठातारः क्षत्तारः । संगृहीतृभ्यश्च वो नमः । संगृहीतारः सारथयः । नमो महद्भ्यः महान्तो जातिविद्यादिभिरुत्कृष्टाः । अर्भकेभ्यश्च वो नमः । अर्भकाः अल्पकाः । प्रमाणादिभिः ॥ २६ ॥

नमः तक्षभ्यः रथकारेभ्यश्च वो नमः । रथं करोतीति तक्ष्णो विशेष एव । नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः । कुलालाः । कुम्भकाराः । कर्मकाराः । लोहकाराः । नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमः । निषादा मात्सिकाः पुञ्जिष्ठाः जात्यन्तरसम्बद्धाः । पुल्कसादयः । नमः श्वनिभ्यश्च । शुनो नयन्तीति श्वन्यः । तेभ्यः श्वनिभ्यः । नयते ह्रस्वत्वं छान्दसम् । श्वगणिका उच्यन्ते । मृगयुभ्यश्च वो नमः । इदंयुरिदं काययते इति यास्कः । मृगान् कामयन्त इति मृगयवः पापर्द्धिकाः तेभ्यो मृगयुभ्यः ॥ २७ ॥

नमः श्वभ्यः श्वपतिभ्यश्च वो नमः । उभयतो नमस्काराः समाप्ताः । नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमः । इत आरभ्य ये वः शब्दाः अतिक्रान्ताः ते पूजावचना वा न युष्मदादेशाः । इत उत्तरं रुद्रनामानि । नमो भवाय च रुद्राय नमः सर्वाय पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च । नीलग्रीवः शितिकण्ठः श्वेतकण्ठः ॥ २८ ॥

नमः कपर्दिने च व्युप्तकेशाय । कपर्दी जटामुकुटधारी व्युप्ताः मुण्डिताः केशा अस्येति व्युप्तकेशाः नमः सहस्राक्षाय शतधन्वने च बह्वक्षाय बहुधनुष्काय नमो गिरिशयाय शिपिविष्टाय च । गिरौ शेत इति गिरिशयः । शिपिविष्टः शिप इव निर्वेष्टितः खलतिरभिधेयः प्रजननवत् वेष्टनरहितः । यद्वा उदितमात्र आदित्य उच्यते । शिपिशब्देन बाला रश्मय उच्यन्ते । नमो मीढुष्टमाय चेषुमते च । मीढुष्टमः सेक्तृतमः युवा परिणामरहित इत्यर्थः । इषुमान् इषु संयुक्तः ॥ २९ ॥

नमो ह्रस्वाय च वामनाय च । रूपतो नमस्काराः ह्रस्वो लघुप्रमाणः वामनः सङ्कुचितावयवः । नमो बृहते च वर्षीयसे च बृहते महते वर्षीयसे वृद्धतराय । नमो वृद्धाय च सवृधे च वृद्धः प्रसिद्धः सवृधः तेन समानवयाः । नमोऽग्र्याय च प्रथमाय च । अग्रे भवोऽग्र्यः प्रथमो मुख्यः ॥ ३० ॥

नम आशवे चाजिराय च । शीघ्रनामनी । आशुरध्वनो व्यापारः अजिरः । अज गतिक्षेपणयोः । अजतीत्याजिरः । नमः शीघ्र्याय च शीभ्याय च । शीघ्रशीभशब्दौ क्षिप्रनामनी । एवं तत्र भव इति छान्दसो यत्प्रत्ययः । अधिष्ठात्री देवतावचनः उपरितनेष्वेवमेव योज्यम् उर्म्याय चावस्वन्याय च ऊर्मिर्जलकल्लोलः । अवाचीनम् । उदकस्य गच्छतः स्वनः ध्वनिः अवस्वनः नमो नादेयाय च द्वीपाय च नद्यां भवः द्वीपे भवः द्वीपं नद्या मध्ये उदकरहितः प्रदेशः ३१॥

नमो ज्येष्ठाय च कनिष्ठाय च वयोऽवस्थाभिप्रायः । षट् नमस्काराः । नमः पूर्वजाय चापरजाय च । पूर्वो जातः पूर्वजः अपरो जातः अपरजः । नमो मध्यमाय चापगल्भाय च । मध्ये भवो मध्यमः अपगतगर्भः अपगल्भः एकगर्भान्तरितः । नमो जघन्याय च बुध्न्याय च । जघनं पश्चाद्भागः बुध्नमादिः तत्र भवः इति द्वादशयत्प्रत्ययान्ता रुद्राः ॥ ३२ ॥

नमः सोभ्याय च प्रतिसर्य्याय च । सोभ इति गन्धर्वनगरम् । सुभमिति वा । अभिचारकर्मप्रतिसरः प्रत्यभिचारः । नमो याम्याय च क्षेम्याय च नमः । श्लोकाय चावसान्याय च । श्लोकः शब्दः अवसानं समाप्तिः । नम उर्वर्याय च खल्याय च उर्वरः सीतयारे-

न्तरं सर्वसस्याढ्ययोः सीतयोर्लाङ्गलमार्गयोरन्तरं खलो धान्यखलः ॥ ३३ ॥

नमो वन्याय च कक्षाय च । वनं वृक्षसमूहः उदकं वा । कक्षो नदीकक्षः पर्वतकक्षो वा । नमः श्रवाय च प्रतिश्रवाय च श्रवः शब्दः प्रतिश्रवः प्रतिशब्दः । नम आशुषेणाय चाशुरथाय च । आशुसेनः शीघ्रसेनः आशुरथः । नमः शूराय चावभेदिने च । शूरः शवतेः अवाचीनं भेत्तुं शीलमस्येति अवभेदी ॥ ३४ ॥

नमो बिल्मिने च कवचिने च । बिल्ममस्यास्तीति, बिल्मं भासनम् । उत्तराङ्गमुच्यते । कवचं पटस्यूतं कर्पासगर्भम् । नमो वर्म्मिणे च वरूथिने च । वर्म्म लोहं वरूथं हस्तिन उपरि गृहस्याकारः कोष्ठकः । नमः श्रुताय च श्रुतसेनाय च । श्रुताय सर्वलोकविदिताय श्रुतसेनाय श्रुतसेना प्रसिद्धा च । सूर्यस्य । नमो दुन्दुभ्याय चाहनन्याय । दुन्दुभौ भवः दुन्दुभ्यः आहनने भवः आहनन्यः ॥ ३५ ॥

नमो धृष्णवे च प्रमृशाय च धृष्णुः प्रगल्भः प्रमृशः सर्वं परिमृशति पण्डित इत्यर्थः । नमो निषङ्गिणे चेषुधिमते च । निषङ्गं खड्गं तदस्यास्तीति निषङ्गी इषुधिमान् इषवः धीयन्तेऽस्मिन्निति इषुधिः । नमस्तीक्ष्णेषवे चायुधिने च । तीक्ष्णा इषवो विद्यन्तेऽस्येति । आयुधमस्यास्तीत्यायुधी । नमः स्वायुधाय सुधन्वने च । शोभनायुधः स्वायुधः शोभनधनुः सुधन्वा ॥ ३६ ॥

नमः स्रुत्याय च पथ्याय च । नद्या एकदेशोदकवाहिनी स्रुतिः तत्र भवः स्रुत्यः पथि भवः पथ्यः । नमः काट्याय च नीप्याय च । काटे भवः काट्यः काटः कूपः । नीचैर्यान्ति यत्र यत्रापः स नीपः तत्र भवो नीप्यः । नमः कुल्याय च सरस्याय च कुल्यायां भवः कुल्यः सरसि भवः सरस्यः । नमो नादेयाय च वैशन्ताय च । नद्यां भवो नादेयः स्त्रीभ्यो ढक् वेशन्तस्तडागस्तत्र भवः वैशन्तः ॥ ३७ ॥

नमः कूप्याय चावट्याय च । कूपे भवः कूप्यः अवटे भवः अवट्यः अवटो गर्त्तः । नमो वीध्र्याय चातप्याय च । इन्धी दीप्तौ । विगतदीप्तिः वीध्रः घनागमः तत्र भवो वीध्र्यः । आतपे भवः आतप्यः । नमो मेघ्याय च विद्युत्याय च निगदव्याख्यातम् । नमो वर्ष्याय चावर्ष्याय च । वर्षे भवो वर्ष्यः । अवर्षे भवोऽवर्ष्यः ॥ ३८ ॥

नमो वात्याय च रेष्म्याय च । वाते भवो वात्यः रिषतिर्हिंसार्थः ।

अन्येभ्योऽपि दृश्यन्त इति मानिन् । रेष्म तत्र भवो रेष्म्यः । नमो वास्तव्याय च वास्तुपाय च वास्तु गृहं तत्र भवो वास्तव्यः वास्तु पाति वास्तुपः । नमः सोमाय च रुद्राय च । नामतो नमस्काराः । नमस्ताम्राय चारुणाय च । वर्णतो नमस्काराः ॥ ३९ ॥

नमः शङ्गवे च पशुपतये च । शं सुखं गवां करोतीति शङ्गुः । पशूनां पतिः पशुपतिः । नम उग्राय च भीमाय च । उग्रः उद्गूर्णः भीमो भीषणः नमोऽग्रेबधाय च दूरेबधाय च अग्रेस्थितः हन्ति अग्रेबधः दूरे स्थितः हन्ति दूरेबधः । नमो हन्त्रे च हनीयसे च । हन्तीति हन्ता हनीयान् । हन्तृतमः । नमो वृक्षेभ्यो हरिकेशेभ्यः । हरितानि पर्णानि येषां वृक्षाणां केशा इव लक्ष्यन्ते त एवमुच्यन्ते । नमस्ताराय । तारयति उत्तारयति संसारात् ॥ ४० ॥

नमः संभवाय च मयोभुवाय च । शमु दमु उपशमे । अस्य शं सुखनाम । यद्वा शं च आनन्दरूपश्च कालदेशानवच्छिन्नं भवनशक्तिश्च आनन्दविज्ञानघन इत्यर्थः । इयमेव व्याख्या मयोभुवशब्दस्य । नमः शङ्कराय च मयस्कराय च । शं करोतीति शङ्करः मयः करोतीति मयस्करः । नमः शिवाय च शिवतराय च । शिवः शान्तः निर्विकारः शिवतरस्ततोऽभ्यधिकः निरतिशयः सर्वबीजः॥४१॥

नमः पार्याय च । पारे भवः पार्यः अवारे भवः अवार्यः । प्रतरणाय चोत्तरणाय च । प्रतरन्ति येन तत्प्रतरणम् उदकमुच्यते उत्तरन्ति येन तत् उत्तरणं नौः उच्यते । नमस्तीर्थ्याय च कूल्याय च । तीर्थे भवस्तीर्थ्यः कूले भवः कूल्यः । नमः शष्प्याय च फेन्याय च । नवप्ररूढानि तृणानि शष्पमित्युच्यते तत्र भवः शष्पः फेने भवः फेन्यः ॥ ४२ ॥

नमः सिकत्याय च प्रवाह्याय च । सिकतासु भवः सिकत्यः प्रवाहे भवः प्रवाह्यः । नमः किꣳशिलाय च क्षयणाय च । किमेतदुदकं हिमीभूतमुत शिलेति यत्र वितर्कः सः किंशिलः । यद्वा किं शिला उत कर्कराः । क्षिपन्त्यस्मिन्नाप इति क्षयणः । नमः कपर्दिने च पुलस्तये च कपर्दी जटामुकुटधारी । पुरस्तिष्ठतीति पुलस्तिः शुभाशुभदिदृक्षया । नम इरिण्याय च प्रपथ्याय च । इरिणे भवः इरिण्यः निरुदकप्रदेश इरिणः प्रपथे भवः प्रपथ्यः ॥ ४२ ॥

ती। हे द्रापे। द्रा कुत्सायां गतौ । द्रापयतीति द्रापिः अयथोक्तकारिणं कुत्सितां गतिं नयति। हे अन्धस्पते सोमस्य पते हे दरिद्र निष्परिग्रह हे नीललोहित। नामानि चास्यैतानि रूपाणि-चेति श्रुतिः। एवं संबोध्य रुद्रमथेदानीमभयं याचते। आसां प्रजानामस्मदीयानाम्। एषां पशूनां मा भेः। मा त्वं भैषीः मा रोक्। रुजो भङ्गे। अरिभ्यश्च मा त्वं भाङ्क्षीः मोचनः। किञ्च नाममत्। मा-च नः अस्माकं किञ्चन अपत्यादिकम्। आममत्। अम रोगे मा अमीः मा चास्माकमपत्यादिकं रोगसंयुक्तं कृथा इत्यर्थः ॥ ४७ ॥

इमा रुद्राय। जगती। इमाः मतीर्याभिः स्तूयते ता रुद्राय तवसे महते बलवते वा। उभयत्र हि तवःशब्दः पठ्यते कपर्दिने जटाजूटधारिणे क्षयद्वीराय क्षिपन्ति निवसन्त्यस्मिन्वीरा इति क्षयद्वीरः तस्मै क्षयद्वीराय। प्रभरामहे प्रेरयामः तथा च प्रेरयामः यथा येन प्रकारेण शमसद् द्विपदे चतुष्पदे। शं सुखम् असत् भवति। द्विपदां चतुष्पदां च यथा विश्वं सर्वं पुष्टं ग्रामे अस्मिन् अनातुरम्। आपद्रहितं स्वस्थं भवति ॥ ४८ ॥

या ते रुद्र। अनुष्टुप्। हे रुद्र या ते तव शिवा शान्ता तनूः शरीरं शिवा अतिशयार्थे पुनर्वचनम्। विश्वाहा भेषजी सर्वदाभिषक्त्वेन वर्तते शिवारुतस्य व्याधेः भेषजी। रुतशब्दो व्याधिवचनः। यद्वा शिवारुतस्य शिवाफेत्कृतस्य शब्दस्य भेषजी अपशकुनहन्त्रीत्यर्थः। तया तन्वा नः अस्मान् मृड सुखय जीवसे जीवनाय॥४९॥

परि नः। अनुष्टुप्। परिवृणक्तु परिवर्जयतु नः अस्मान्। रुद्रस्य हेतिः आयुधम्। परित्वेषस्य दुर्मतिरघायोः। परिवृणक्तु त्वेषस्य क्रोधिनो ज्वलितस्य दुर्मतिः दुष्टा मतिः। अघायोः अघं पापं यः कामयते परस्मै कर्त्तुं स अघायुः तस्य अघायोः। उत्तरोऽर्द्धर्चः प्रत्यक्षकृतो द्वितीयं वाक्यम्। अवस्थिरा मघवद्भ्यः। तनुष्व। अवतनुष्व अवतारय शिथिलीकुरु। स्थिरा स्थिराणि धनूंषि। केभ्योऽर्थाय अवतनुष्व मघवद्भ्यः। मघं धनं हविर्लक्षणं येषामस्ति ते मघवन्तः तेभ्यो मघवद्भ्यो यजमानेभ्योऽर्थाय नतु अयागशीलेभ्यः प्रतिषिद्धसेविभ्यः। किञ्च हे मीढ्वः। मिह सेचने। सेक्तः। मध्यस्थानो वृष्टिकर्मणा स्तूयते। युवा वा कृत्वा अपरिणामित्त्वेन स्तूयते। तोकाय

तनयाय मृड तोकाय पुत्राय तनयाय पौत्राय । मृड सुखय ॥ ५० ॥

मीढुष्टम । यवमध्या त्रिष्टुप् । हे मीढुष्टम सेक्तृतम । हे शिवतम शिवो नः अस्माकं सुमनाः शोभनमनस्कश्च भव । किञ्च । परमे वृक्षे दूरदेशावस्थायिनि आयुधं निधाय स्थापयित्वा । कृत्तिं चर्म वसानः । आचर । आचरणमनुष्ठानम् । पिनाकं बिभ्रत् । पिनाकं कोदण्डः तं धारयन् आगहि आगच्छ ॥ ५१ ॥

विकिरिद्र । द्वे अनुष्टुभौ । हे विकिरिद्र विकिरन्निषून् द्रावयतीति विकिरिद्रः । विलोहित विगतकल्मषभाव । नमस्ते अस्तु हे भगवन् । एवमभिष्टुत्य याचते । यास्तव सहस्रं हेतयः । हेतिरायुधं सहस्रशब्दोऽनन्तवचनः । अन्यस्मिन्निवपन्तु ताः । अस्मत्तोऽन्यं पुरुषं निवपन्तु ताः ॥ ५२ ॥

सहस्राणि बहूनि सहस्रशः । संख्यैकवचनाच्च वीप्सायामिति शस् । असंख्यातानि सहस्राणि । अनन्तत्वप्रतिपादनार्थम् । बाह्वोस्तव हेतयः आयुधानि तासां हेतीनामीशानः सन् हे भगवन् रुद्र । मतुवसो रुः सम्बुद्धौ छन्दसीति विसर्जनीयः । भगवन् पराचीनानि पराञ्चितानि पराङ्मुखानि मुखा कृधि कुरु ॥ ५३ ॥

असंख्याता । बहुरुद्रदेवत्या दशानुष्टुभः । पृथिवीस्थानां नमस्कारः । असंख्यातानि सहस्राणि ये रुद्रा अधिभूम्याम् भूम्यामुपरि स्थिताः । तेषां सहस्रयोजने अध्वनि अवस्थितानामनेन हविषा अवधन्वानि तन्मसि । अवतन्मसि अवतनुमः अवतारयामः धन्वानि धनूंषि ॥ ५४ ॥

अस्मिन्महति मध्यस्थानाः अस्मिन्महति अर्णवे । अर्णः उदकनामसु पठितम् । वा मत्वर्थीयः । अर्णवति अन्तरिक्षे भवा रुद्राः । अधि उपरि स्थिताः ये तेषामिति कृतं व्याख्यानम् ॥ ५५ ॥

नीलग्रीवाः । द्युस्थाना उच्यन्ते । नीलग्रीवाः । कृष्णवचनो नीलशब्दः शितिकण्ठाः शितिशब्दः श्वेतवचनः । दिवं द्युलोकं रुद्राः उपाश्रिताः अधिष्ठिताः अध्याश्रिताः ये तेषामित्युक्तम् ॥ ५६ ॥

नीलग्रीवाः । पृथिव्या अधो ये रुद्राः त उच्यन्ते । नीलग्रीवाः शितिकण्ठाः सर्वा रुद्राः अधः क्षमाचराः अधः पृथिव्यां सञ्चरन्ति ये तेषामित्युक्तम् ॥ ५७ ॥

ये वृक्षेषु । आसते शष्पिञ्जराः शष्पिञ्जरवर्णाः । नवप्ररूढानि

तृणानि शष्पशब्देनोच्यन्ते । नीलग्रीवाः विलोहिताः विगतकलुषभावाः । विविधं वा लोहिता लोहितशब्देन वा धातवो लक्ष्यन्ते । त्वग्लोहितमज्जादिवियुक्ता विमुक्तेत्यर्थः । तेषामित्युक्तम् ॥ ५८ ॥

ये भूतानां प्राणिनामधिपतयः ईश्वराः विशिखासः विशिखाः एव विशिखासः सर्वमुण्डा इत्यर्थः । कपर्द्दिनः जटिलाः तेषामित्युक्तम् ॥ ५९ ॥

ये पथाम् । ये रुद्राः पथां मार्गाणाम् । अधिपतय इति शेषः । ये च पथि रक्षसः । पन्थानं ये रक्षन्ति । ऐलबृदाः इलानामन्नानां समूह ऐलं ये बिभ्रति ते ऐलभृतः सन्तोऽपि परोक्षवृत्तिना शब्देन ऐलबृदा इत्युच्यन्ते । आयुर्युधः आयुर्जीवनं पणीकृत्य ये युध्यन्ति ते आयुर्य्युधः चौरादयो वा रुद्रा वा । तेषामित्युक्तम् ॥ ६० ॥

ये तीर्थानि । ये रुद्राः तीर्थानि प्रयागप्रभृतीनि प्रचरन्ति सृकाहस्ताः । सृका इत्यायुधनाम । आयुधहस्ताः निषङ्गिनः खड्गिनः तेषामित्युक्तम् ॥ ६१ ॥

येऽन्नेषु । ये अन्नेषु अवस्थिताः विविध्यन्ति अतिशयेन ताडयन्ति येषामयमधिकारः अन्नस्य भक्षयितारो व्याधिभिर्ग्रहीतव्या इति पात्रेषु च स्थिताः पिबतो जनान्ये विध्यन्ति तेषामित्युक्तम् ॥ ६२ ॥

य एतावन्तश्च । ये रुद्रा एतावन्तश्च भूयाँसश्च बहुतराश्चोक्तेभ्यो दिशः रुद्रा वितस्थिरे विष्टभ्य स्थिताः तेषामित्युक्तम् ॥ ६३ ॥

इत उत्तरं त्रीणि यजूंषि त्रिस्थानाश्च रुद्राः स्तूयन्ते । नमोऽस्तु । नमः अस्तु रुद्रेभ्यः ये दिवि द्युलोके येषां रुद्राणां वर्षं वृष्टिरिषवः आयुधस्थानीयाः तेभ्यो रुद्रेभ्यो दश प्राचीरङ्गुलीः करोमि नमस्कारार्थमिति सर्वत्र सम्बध्यते दश दक्षिणा दश प्रतीचीः दश उदीचीः दश ऊर्ध्वाः तेभ्यो नमः अस्तु ते नः अस्मान् अवन्तु रक्षन्तु ते नः अस्मान् मृडयन्तु ते वयं तर्पितरुद्राः सन्तः यं पुरुषं द्विष्मः यश्च नः अस्मान् द्वेष्टि तम् । एषां रुद्राणां जम्भे मुखे दध्मः । यद्वा ते रुद्राः वयं च यं द्विष्मः यश्च नः द्वेष्टि तमेषां रुद्राणां जम्भे दध्मः समञ्जसमेव ॥ ६४ ॥

द्वे कण्डिके उक्तार्थे ॥ ६५ ॥ ६६ ॥

इति मन्त्रभाष्ये षोडशोऽध्यायः ॥ १६ ॥

## अथ सप्तदशोऽध्यायः ॥ १७ ॥

अग्नीन् परिषिञ्चति । अश्मन्नूर्जम् । यजुर्म्मारुतम् तान्न इषमूर्ज्जं धत्तेति तदः श्रवणात् यदोऽत्राध्याहारः कर्त्तव्यः । या अश्मन् अशनवति मेघे ऊर्जमुदकलक्षणं शिश्रियाणाम् आश्रिताम् । या च पर्वते पर्ववति मेघे शिश्रियाणा आश्रिता उदकलक्षणैव या च अद्भ्यः अधिसकाशात् ओषधीभ्य अधिसकाशात् वनस्पतिभ्य अधिसकाशात् सम्भृतं पयः सम्भृता पयोलक्षणा गोद्वारेण । गोर्हि अपः पिबति ओषधिवनस्पत्यादीनि खादत्यथ पयो जायते तान्न इषमूर्ज्जं धत्त तामेतामुभयरूपां मेघप्रभवामुदकलक्षणां गोप्रभवां च पयोलक्षणाम् । अस्मभ्यम् । इषमूर्ज्जं धत्त दत्त हे मरुतः । मरुतो वै वर्षस्येशते शꣳरराणाः संरममाणाः । अश्मनि कुम्भं स्थापयति. अश्मंस्ते क्षुत् । अश्मन् ते तव क्षुत् अशनाया अस्तु आदत्ते कुम्भं मयि त ऊर्क् । तव संबन्धिनी ऊर्क् मयि अस्त्विति शेषः । कुम्भं प्रक्षिपति यं द्विष्मः तं ते शुगृच्छतु । यं पुरुषं द्विष्मः तं तव संबन्धिनी शुक् शोकः ऋच्छतु ॥ १ ॥

इमा मे । द्वाभ्यां कण्डिकाभ्यामग्निमभिमृश्येष्टका धेनूः कुरुते । तत्र प्रथमं यजुः द्वितीया बृहती वा पङ्क्तिर्वा । अग्निस्त्वासां धेनुकरणस्येष्ट इत्यग्निरुच्यते । इमाः मे मम हे अग्ने इष्टका धेनवः धेनुरिवोपजीवनीयाः सन्त्वस्मिन् लोक इति शेषः । किंसंख्याकाः । एका च दश च । दश च । शतं च । शतं च । सहस्रं च । सहस्रं चायुतं च । अयुतं च नियुतं च । नियुतं च प्रयुतं च । प्रयुतं चार्बुदं च । अर्बुदं च न्यर्बुदं च । न्यर्बुदं च समुद्रश्च । मध्यं च अन्तश्च परार्द्धश्च । एवमेकाप्रभृतिदशसंख्यागुणितं परार्द्धपर्यन्तं पूर्वोत्तरं संख्याविशेषसमुच्चितं प्रवर्द्धमानसंख्येयानिष्टं संख्याजातमभिधायाग्निमाह । एता मे मम हे अग्ने इष्टका धेनवः सन्तु । अमुत्र अमुष्मिंल्लोके अमुत्रेति जन्मान्तरनिर्देशः । अमुष्मिल्लोक इतीष्टकालोकनिर्देशः ॥ २ ॥

ऋतव स्थ । या यूयम् । ऋतव स्थ ऋतावृधः ऋतवो भवथ । सत्यस्य वर्द्धयित्र्यश्च । ऋतुष्ठा स्थ । ऋतुषु तिष्ठन्तीति ऋतुष्ठा अहोरात्राणि स्थ भवथ । ऋतावृधः । अतिशयार्थं पुनर्व्वचनम् । ता घृ-

तश्च्युतः मधुश्च्युतः सत्यः । घृतं याश्च्योतन्ति ता घृतश्च्युतः मधुश्च्युतश्च सत्यः । विराजो नाम । नाम्ना च विराज इति ख्याताः सत्यः दश दशलोकं पृणा उपधीयन्ते तदभिप्रायमेतत् नामकरणम् । कामदुघाः कामानां दोग्ध्र्यो भवथ अक्षीयमाणाश्च परिपूर्यमाणाः ॥ ३ ॥

अग्निक्षेत्रं सप्तभिर्ऋग्भिः विकर्षत्याग्नेयीभिः । तत्राद्ये गायत्र्यौ । समुद्रस्य त्वा । हे अग्ने यं त्वां समुद्रस्य समुन्दनस्योदकस्य अवकया शेवालेन परिव्ययामसि परिव्ययामः स त्वं परिवीतः पावकः पावयिता अस्मभ्यं शिवः शान्तो भव ॥ ४ ॥

हिमस्य त्वा । यं त्वां हिमस्य जरायुणा शीतस्य प्रशीतेन हे अग्ने परिव्ययामसि परिवेष्टयामः स त्वं परिवीतः सन् पावकः अस्मभ्यं शिवो भव ॥ ५ ॥

उपज्मन् । जगती वा त्रिष्टुब् वा । उपज्मन् । उपावत ज्मन् ज्मतेः ज्मा पृथिवी । पृथिव्यामुपवेतसे उपावतर वेतसे वेतसशाखायां मण्डूकावका वेतसशाखास्तत्र बद्धा भवन्ति वंशे तदयं मन्त्रोऽभिवदति । नदीष्वा आ उपसर्गः अध्यर्थे । अवतर च नदीषु अधि । नदीशब्देनात्र लक्षणया अवका उच्यन्ते तत्प्रभवत्वात् । कस्मात्पुनस्त्वमेवमस्माभिः प्रार्थ्यसे इत्यत आह हे अग्ने पित्तमपामसि यश्च यस्यावयवभूतो भवति न स तद्भिन्नस्ति तद्धर्मा च भवति । एवमग्निं संबोध्याथेदानीं मण्डूकीमाह हे मण्डूकि ताभिरद्भिः सहिता आगहि आयाहि यासामग्निः पित्तं याभिर्वा सह त्वमुत्पन्ना या च त्वम् अग्नेः शान्त्यर्थमितश्चेतश्च नीयसे सा इमं नः अस्माकं यज्ञं चयनलक्षणं पावकवर्णमग्निवर्णं शिवं शान्तं कृधि कुरु ॥ ६ ॥

अपामिदम् । बृहती । अपामिदं न्ययनं नितरामयनं यदेतन्मण्डूका वेतसशाखालक्षणं समुद्रस्य च उदकनिधेः निवेशनं निविशन्त्यस्मिन्निति निवेशनं यत एवमतो ब्रवीमि अन्यान्पुरुषान् ते तव अस्मत् अस्मत्तः तपन्तु दहन्तु हेतयः अस्त्राणि अर्चींषि । त्वं च पावकः पावयिता सन् अस्मभ्यं शिवो भव ॥ ७ ॥

अग्ने पावक । द्वे गायत्र्यौ हे अग्ने पावक पावयितः रोचिषा रोचनेन ज्वालासमूहेन आहवनीयात्मना स्थित इति शेषः । मन्द्र-

या मन्दनीयया च हे देव जिह्वया होतृत्वेनावस्थित इति शेषः । आ-देवान्वक्षि यक्षि च । आवक्षि च आवह च देवान् यक्षि यज चेति द्वौ ह्यग्नेरधिकारौ । होतृरूपेण हौत्रं चाहवनीयरूपेण हविर्ग्रहणं च त एवं स्तूयते ॥ ८ ॥

स नः पावक । यस्त्वमुक्ताधिकारः स नः अस्माकं हे पावक पावयितः दीदिवः दीप्तिमत् हे अग्ने देवान् इह आवह । उपयज्ञं यज्ञसमीपं ततोऽनन्तरं हविश्च नः संबन्धि देवान् प्रापयेति शेष ॥ ९ ॥

पावकया । जगती । पावकया पावयित्र्या योऽग्निः चितयन्त्या परिदृढकारिण्या कृपा समर्थया । कृपू सामर्थ्ये । अस्य क्विपि तृतीया । क्षामन् पृथिव्याम् । क्षामेति पृथिवीनाम । रुरुचे देदीप्यते उषसो न भानुना उषस इव ज्योतिषा यश्च तूर्वन्नयामन् त्वरमाण इव आधानकर्मणि यामशब्दः कर्मवचनः । एतशस्याश्वस्य । नु अनर्थकः । रणे रमणीये पदे । आधीयते आध्वर्युणा आदितश्च यः घृणेन । घृणिरिति दीप्तिनाम । घृण्या दीप्त्या । न इत्यनर्थकः ततृषाणः तृष्यन्पिपासुः पूर्णाहुतिं पूर्णाहुत्या हि तं तत्र शमयति पीत्वा च अजरः संपद्यते तमवकादिभिः शमयाम इति शेषः ॥ १० ॥

नमस्ते । चित्यारोहिणी बृहती आग्नेयी नमस्तव हरसे च शोचिषे च नमः ते अस्तु अर्चिषे च हरतेर्हरः शोचतेः शोचिः । अन्यांस्त इति व्याख्यातम् ॥ ११ ॥

स्वयमातृण्णायां जुहोति पञ्चभिर्यजुर्भिः आग्नेयैः । नृषदे वेट् । नृषु मनुष्येषु सीदतीति नृषत् तस्मै नृषदे वेडिति परोक्षं वषट्कारः । अप्सु उदके सीदति बर्हिषदे ओषध्यो बर्हिः वनसदे वनं वृक्षसमूहः स्वर्विदे स्वःशब्दोऽव्ययम् इहादित्यवचनः । विद्यतेरत्र ग्रहणं सीदतिनार्थसन्निकर्षात् स्वरादित्ये विद्यते योऽग्निस्तस्मै स्वर्विदे ॥ १२ ॥

दधिमधुघृतेनाग्निं प्रोक्षति द्वाभ्यां देवाभ्याम् ये देवाः । प्राणाः उत्कृष्टा देवानाम् । यज्ञिया यज्ञियानां यज्ञार्हाः यज्ञियानाम् । अतिशयार्थं वचनम् । संवत्सरीणं संवत्सरेण प्राप्यत इति संवत्सरीणोऽन्नभागः । संवत्सरं हि भूत्वाग्निश्चीयते उपभागमासते उपासते भागं ते अहुतादः अन्ये देवाः अग्निप्राप्तामाहुतिमदन्ति प्रा-

णास्तु साक्षादन्नमदन्ति हविषः स्वमंशं यज्ञेऽस्मिन् स्वयं पिबन्तु मधुनो घृतस्य दध्नश्चेति शेषः ॥ १३ ॥

ये देवा देवेषु । अधि उपरि अधिष्ठातृत्वेन देवत्वं देवभावमुपायन्नुपगताः ये ब्रह्मणः पुरः एतारो अस्य ये च ब्रह्मणः । अयमग्निर्ब्रह्म तस्मै ते पुर एतार इति श्रुतिः । प्राणा हि प्राणिनः पुर एतार एव । येभ्यश्च प्राणेभ्यः न ऋते वियोगे पवते वर्त्तते धाम स्थानं जन्म वा । किञ्चन । न किञ्चिदपि इत्यभिप्रायः । य इत्थम्भूताः प्राणा देवाः क्व पुनस्ते आसते । न ते दिवः द्युलोकस्याश्रयणीयेषु प्रदेशेषु नच पृथिव्या आश्रयणीयेषु प्रदेशेषु ये लभ्यन्ते अधिस्नुषु । स्नु प्रस्रवणे प्रस्रवाणि श्रोतांसि चक्षुरादीनि प्राणायतनानि तेषूपलभ्यन्ते स हि तेषां विशिष्टः प्रदेशः ॥ १४ ॥

अवरोहति प्राणदाः । आग्नेयी बृहती पङ्क्तिर्वा । यस्त्वं प्राणदाः अपानदाः व्यानदा वर्च्चोदाः अन्नस्य दातासि । वरिवोदा वरिवो धनं तस्य दातासि तं त्वां ब्रवीमि अन्यांस्ते अस्मत् इति व्याख्यातम् ॥ १५ ॥

पञ्चगृहीतं जुहोति । अग्निस्तिग्मेन । आग्नेयी गायत्री । अग्निः तिग्मेन तिग्मं तेजतेरुत्साहकर्म्मणः । उत्साहवता शोचिषा दीप्त्या यासत् । यसु उपक्षये । उपक्षयति विश्वं सर्वं न्यत्रिणं नितरामत्तारं खादकम् । उपद्रवकारिणम् । अग्निश्च नः अस्मभ्यं वनते वनोतिर्दानार्थः । ददाति रयिं धनम् ॥ १६ ॥

षोडशगृहीतं जुहोति । य इमा विश्वाः । पञ्चदशभिर्वैश्वकर्मणीभिः त्रिष्टुब्भिः कल्पान्तरीणं यजमानं ज्ञानकर्मसमुच्चयकारिणं विश्वकर्मभावमात्मत्वेनोपासकं तदुपासकत्वेनैवोपक्षपितकल्मषं कल्पादावभिव्यज्यमानं धर्म्मज्ञानवैराग्यैश्वर्ययुक्तं सुप्तप्रतिबुद्धन्यायेनापरोक्षज्ञानमात्मत्वेनोपगताः प्रजाः सृजमानमृषिः पश्यन्नाचष्टे य इमा विश्वा भुवनानि जुह्वत् । य इमानि विश्वानि भुवनानि भूतजातान्यात्मनि जुह्वदात्मत्वेन पश्यन्नृषिः साक्षात्कृतधर्मा होता आह्वाता देवानां कल्पादौ न्यसीदत् निषण्णः । पिता पाता नः अस्मत्प्रभृतीनां स एव ऋषिर्मनुष्यादिभावमुपगतः सन् यज्ञसम्बन्धिन्या आशिषा द्रविणं यज्ञफलमिच्छमानः प्रथमच्छत् प्रथमछादकः प्रथमो मूर्तो मूर्त्तशरीरग्राही अवरान् द्विपदचतुष्पदस्थाव-

रादीन् आविवेश आविष्टः परिणामतः ॥ १७ ॥

एवं विश्वकर्माद्वैतमुक्त्वाऽथेदानीं यथा जगतत्सृजति तत्प्रश्नप्रतिप्रश्नाभ्यामाह किᳪस्वित् वितर्के । किं पुनरासीत् अधिष्ठानम् । अधितिष्ठत्यस्मिन्निति अधिष्ठानम् । अधिकरणं विश्वकर्मणो द्यावापृथिव्यौ सृजतः अधिष्ठानरहिताः इदानीन्तनाः कर्तारो न किञ्चिदपि कुर्वाणा दृश्यन्ते । आरम्भणं कतमत्स्वित् । आरभ्यते अस्मात् इत्यारम्भणं प्रकृतिद्रव्यं मृद्द्रव्यमिव घटादीनाम् । कथासीत् कथंभूता च तत्र क्रिया आसीत् चक्रसलिलसूत्रादिभिर्घटादयो निष्पाद्यन्ते । यतो भूमिं जनयन् विश्वकर्मा यतो यदेत्यर्थः । यदा भूमिं द्यां च जनयन् विश्वकर्मा विद्यामौर्णोत् व्यौर्णोत् । ऊर्णुञ् आच्छादने आच्छादितवान् द्यां पृथिवीं चेत्यध्याहारः । महिना महाभाग्येन ऐश्वर्येण विश्वचक्षाः सर्वतो दर्शनः अतीतानागतवर्त्तमानकालानां युगपत् ज्ञाता ॥ १८ ॥

अत्रोत्तरं ददाति विश्वतश्चक्षुः । सर्वतश्चक्षुः उत विश्वतो मुखः अपि च सर्वतो मुखः विश्वतो बाहुरुत विश्वतस्पात् अपि च सर्वतः पादः सन्धमति बाहुभ्यां धर्माधर्माभ्यां धमतिर्गत्यर्थः सङ्गमयति बाहुभ्यां सङ्गच्छते वा सम्पतत्रैः पद्भिः महाभूतैः पद्भिः ऐश्वर्ययोगाद् बहवोऽपि पादाः सम्भवन्ति । द्यावाभूमी जनयन् देव एकः अद्वितीयः ॥ १९ ॥

किᳪ स्वित् । अयमपि मन्त्रः प्रश्नरूपेण । किं पुनस्तद्वनं कश्च स वृक्षः आस अभूत् यतः यस्माद्द्यावापृथिवी निष्टतक्षुः । तक्षतिः करोतिधर्मा बहुवचनं पूजार्थम् । यस्माद्वृक्षात् द्यां पृथिवीं च निष्कृष्य चकार यदि हि वनं वृक्षो वा भवेत् तदा एवमप्याशङ्केत तक्षाणो हि वृक्षादीनादाय चमसादीन् निष्कर्षयन्ति अयं त्वात्मारम्भण ऊर्णनाभिवदित्यभिप्रायः । विस्मित इव द्वितीयं प्रश्नं करोति । हे मनीषिणः मेधाविनः मनसा पर्यालोच्य पृच्छत इत् उ तत् । एतदपीति पदत्रयस्यार्थः । यदत्र यद्यर्थः यदि अध्यतिष्ठत् यद् भुवनानि भूतजातानि सह द्यावापृथिवीभ्यां धारयन् उपरिष्टादास्ते ॥ २० ॥

या ते धामानि । यानि ते तव धामानि स्थानानि परमाणि उत्कृष्टानि यावमा यानि चावमानि कनीयांसि । या मध्यमा । यानि

मध्यमानि हे विश्वकर्मन् उतेमा अपि चेमानि यानि प्रत्यक्षतः उपलभ्यन्ते तेभ्यो द्रव्यमुपादाय शिक्षा सखिभ्यः देहि समानख्यानेभ्यः यजमानेभ्यः । हविषि अभ्युद्यते । हे स्वधावः अन्नवन् क उपकार इति चेत् नोत्सहे वक्तुम् । अहं त्वां यज इति अतः स्वयं त्वं यजस्व इति । को हि नाम मनुष्यस्त्वां यष्टुं समर्थः अत एवं ब्रवीमि स्वयं यजस्व । तन्वं शरीरं वृधानः । वर्द्धयमानः ॥२१॥

विश्वकर्मन् । हे विश्वकर्मन् मदीयेन हविषा वावृधानः । वर्द्धमानः उपसञ्जातहर्षः सन् मदीये यज्ञे स्वयमेव यजस्व मदनुग्रहाय पृथिवीं पृथिव्याश्रयाणि भूतानि । उत द्याम् अपि च द्युलोकाश्रयाणि भूतानि । किं च त्वत्प्रसादाच्चास्माकं मुह्यन्तु मोहमागच्छन्तु । अन्ये अभितोऽवस्थिताः सन्तः सपत्नाः परिपन्थिनः किं च त्वत्प्रसादादेव इह अस्माकं मघवान् धनवानिन्द्रः सूरिः पण्डितः अस्तु आत्मज्ञानोपदेशकः ॥ २२ ॥

वाचस्पतिम् । विश्वकर्मन् । व्याख्याते ॥ २३ ॥ २४ ॥

चक्षुषः पिता । अत्र द्वितीयोऽर्द्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् । यदा इत् । इच्छब्द एवार्थे । यदैव अन्ता अन्तानिति द्वितीया । द्यावापृथिव्योरदृहन्त दृंहतेरेतद्रूपम् । दृढीकृतवन्तः । के ये पूर्वे ऋषयो वसिष्ठप्रभृतयः आत् इत् अथेत्यर्थः। अथानन्तरं द्यावापृथिव्यौ अप्रथेतां पृथ्व्यौ अभूतां ततोऽनन्तरं चक्षुषः पिता। चक्षुर्नाम ऋषिस्तस्य पिता प्राणः प्रजया स्तूयते मनसा हि धीरः मनसा च धीमान् घृतमेने अजनत् घृतमुदकम् । एते द्यावापृथिव्यौ प्रति अजनयन् जगदनुग्रहाय नम्नमाने नममाने विष्कम्भयन्निति शेषः ॥ २५ ॥

विश्वकर्म्मा विमनाः । विभूतमनाः आद्विहायाः अपि च महान् व्यापकः धाता धारयिता विधाता विदधाति कर्म्माणि परमोतसंदृक् परमश्च संद्रष्टा भूतानां तेषामिष्टानि समिषा मदन्ति । येषां भूतानां विश्वकर्मा द्रष्टा तेषां भूतानां मध्ये यानि इष्टानि अभिमतानि दमदानदयादिभिर्युक्तानि तानि इषा अन्नेन आहुतिरसभूतेन संमोदन्ते सर्वद्वन्द्वावियुक्तानि भूतानि संमोदन्ते यत्र यस्मिन्प्रदेशे सप्त ऋषीन् विश्वकर्मणः प्राणभूतान् वशिष्ठप्रभृतीन् परः परेण विश्वकर्म्मणा एकमाहुः एकं वदन्ति स हि साध्यानां लोकः तेऽपि विश्वकर्मत्वं प्रार्थयन्ति ॥ २६ ॥

यो नः। योऽस्माकं पिता पाता जनिता जनयिता यश्च विधाता विधारणसेतुः। यश्च धामानि स्थानानि वेद जानाति भुवनानि भूतजातानि विश्वा विश्वानि यश्च देवानां नामधा नामानि दधाति करोति। नाम च पितैव करोति यश्चैक एवाद्वितीयः तं विश्वकर्माणं संप्रश्नं स्वाधिकारं संप्रश्नयितुम् भुवना भूतजातानि यन्ति गच्छन्ति अन्या आन्यानि च स एव स्वाधिकारेषु नियुक्त इत्यभिप्रायः॥ २७॥

त आयजन्त। अत्र द्वितीयोऽर्द्धर्चः प्रथमो व्याख्यायते यच्छब्दयोगात्। असूर्ते असुसमीरिते असवः प्राणाः सप्तदशकलिङ्गयुक्ता वात्मानः सूर्त्ते सुष्ठु समीरिते रजस्यन्तरिक्षलोके निषत्ते निर्गतसत्ताके निरालम्बने निषत्तानुत्तप्रतूर्त्तेत्यादिना निपातनम्। अवस्थिताः सन्तो ये भूतानि समकृण्वन् कृतवन्तः इमानि ते आयजन्त यजतिर्दानार्थः। आभिमुख्येन दत्तवन्तो द्रविणं धनमुदकलक्षणं जीवनाय समस्मै संगत्य अस्मै भूतग्रमाय ऋषयः पूर्वे वसिष्ठप्रभृतयः जरितारः स्तोतारः न भूना नात्यन्तं बहुयुक्त्या कामवर्षित्वेनेत्यर्थः। ये वशिष्ठादयो भूतानि सृजन्ति त एवोदकदानेन जीवयन्तीति समस्तार्थः॥ २८॥

परो दिवाः। प्रश्नप्रतिप्रश्नरूपा मन्त्राः। परब्रह्मविषयः प्रश्नो विभक्तिव्यत्ययबहुलो मन्त्रः। परः सूक्ष्मः दिवः परश्च अस्या एना पृथिव्याः परश्च देवेभ्यः परश्च असुरेभ्यः यदस्ति यच्च सदाकालमस्ति तत्परं ब्रह्मेति शेषः। कᳬस्वित्। स्विच्छब्दो वितर्के। कं पुनर्गर्भं दध्रे धारितवत्य आपः यत्र गर्भे देवाः सङ्गताः प्रजापतिनाऽपश्यन्त दृष्टवन्तो जगदिदं पूर्वे प्रथमजाः तदुक्तम्। आपो ह वा इदमग्रे सलिलमेवासेत्यादिना॥ २९॥

प्रतिप्रश्नः तमिद्गर्भम्। इच्छब्दो निपात आश्चर्यवचनः। तमाश्चर्यभूतं गर्भं प्रथमं दध्रे आपः। यत्र देवाः समगच्छन्नसङ्गता विश्वे सर्वे। नन्वस्याण्डस्याद्भिः सहितस्य क आधार इत्याशङ्कायामाह अजस्य न जायत इत्यजः। नाभौ मध्य अधि उपरि एकमविभक्तमनन्यभूतमर्प्पितं समर्प्पितं यस्मिन्नजे ब्रह्मणि विश्वानि भूतजातानि पुरो ब्रह्माण्डात् तस्थुः स्थितानि नतु तस्याप्यन्य आधार इति स्वप्रतिष्ठं हि परं ब्रह्म॥ ३०॥

इदानीं विश्वकर्मा मनुष्याणामुपदेशं ददाति । न तं विदाथ । तं न विदाथ न जानीथ यः इमा एतानि भूतानि जजान जनयति यत् उपरिष्टम्भनं भवति । अतः कारणात् युष्माकं च तस्य पुरुषस्य अन्यन्महदन्तरं बभूव । पुरुषो जनको यूयं जन्याः पुरुषो भ्रामको यूयं भ्राम्याः यदि तु ज्ञात्वात्मत्वेनोपास्यते तदा न संसृतिः स्यात् इत्याभिप्रायः । एवं प्रत्यक्षमुक्त्वाथेदानीं परोक्षमभिनयेन दर्शयन्नाह ये चैते नीहारेणाविद्यया प्रावृता अवगुण्ठिताः ये च जल्पा अनृतजल्पनेन प्रावृताः पक्षहेतुदृष्टान्तैरात्मज्ञानजल्पैः तार्किकाभिप्रायमेतत् । ये च असुतृपः असून्प्राणांस्तर्पयन्तीति असुतृपः अलङ्करिष्णवः तेषां च तदेवान्तरं बभूव ये च उक्थशासः उक्थानां शंसितारः उक्थानि च यज्ञे शस्यन्ते ततो यज्वानो गृह्यन्ते तादृशा भूत्वा भवन्तश्चरन्ति ऐहिकामुष्मिकभोगमतयः सर्वदा प्रवर्तन्ते तस्मादज्ञानमिथ्याज्ञानपराधीनानां भवतां नास्ति तत्त्वज्ञानमित्यर्थः । ये यज्ञशीलाः ते पुरुषं प्रति विचरन्ति ये तु पुरुषविदः ते पुरुष एव भवन्ति नीहारप्रावृतास्तु नरकयायिनः ॥ ३१ ॥

विश्वकर्मा हि । विश्वकर्मा आदित्यान्तरपुरुषः । अजनिष्ट जातः देवः दानादिगुणयुक्तः । आत् इत् निपातौ । अथानन्तरं गन्धर्वः गोर्वाचो धारयिता पृथिव्या वा धारयिता गन्धर्वोऽग्निर्गाना-द्वा गन्धर्वोऽग्निः । अथो आहुतिरग्निरेवास्यै पृष्ठे सर्वः कृत्स्नो मन्यमानोऽगायदित्यादिश्रुतिः । अभवत् द्वितीयः । सहायाय तृतीयः पिता पालयिता जनयिता च ओषधीनां पर्जन्योऽभवत् स चोत्पन्नः सन् अपामाहुतिपरिणामभूतानां गर्भं व्यदधात् धारयति पुरुत्रा बहुनां त्राता । यद्वा अपां गर्भं विदधाति पृथिव्यां बहुप्रकारम् ॥ ३२ ॥

आशुः शिशानः । अनुवाकः अप्रतिरथ ऋषिः ऐन्द्रोऽप्रतिरथोऽपश्यत् मर्माणि इत्यन्तः । आदितो द्वादशैन्द्र्यः त्रिष्टुभो ब्रह्मा दक्षिणतो जपति । आशुः शीघ्रः शिशानः । शो तनूकरणे । शिशानो वज्रम् । वृषभो न भीमः वृषभ इव भीमः भीमो बिभ्यत्यस्मादिति । घनाघनः हनहनेत्येवं वक्ता यद्वा घनशरीरः क्षोभणश्चर्षणीनां सञ्चालकश्चर्षणीनां मनुष्याणाम् । संक्रन्दनः । समाह्वाता संग्रामकारिणाम् । आहूय च अनिमिषः अप्रमादी यद्वा अनिमिषो देवाः ।

एकवीरः । एक एवासहायो विक्रान्तः य ईदृग्गुणविशिष्टः स शतं बह्वीः सेनाः अजयत् जयति साकं सहैव चेन्द्रः ॥ ३३ ॥

संक्रन्दनेन शब्दकारिणा अनिमिषेण एकचित्तेन अप्रमाद्यता वा जिष्णुना जयशीलेन युत्कारेण । युध संप्रहारे । अस्य क्विपि युत् संप्रहारकारिणा दुश्च्यवनेन अप्रच्याव्येन अप्रच्युतस्वभावेन वा धृष्णुना प्रसहनशीलेन तदिन्द्रेण जयत ईदृग्गुणविशिष्टेनेन्द्रेण तज्जयत यद् दुर्जयमिति शेषः । तच्च सहध्वं तच्चाभिभवत हे युधः युध संप्रहार इत्यस्यैतत् क्विपि च बहुवचनं हे योद्धारः पादादावामन्त्रितस्य चेत्यादिरुदात्तः । हे नरः मनुष्याः इषुहस्तेनेन्द्रेण वृष्णा वर्षणशीलेन ॥ ३४ ॥

स इषुहस्तैः । स इन्द्रः इषुहस्तैः संस्रष्टा संसृजति इषुहस्तानेव योद्धॄन् योद्धृभिः स एवेन्द्रो निषङ्गिभिः षड्गिभिः संसृजति निषङ्गिना एव योद्धॄन् स्वान् वशी कान्तः सर्वजनप्रियः स्वतन्त्रो वा निगृहीतारिषड्वर्गो वा ईश्वरो वा स एवेन्द्रो युधः योद्धॄन् स्वान् शत्रुगणेन संस्रष्टा किञ्च संसृष्टजित् संसृष्टान् जयति शत्रून् । सोमपाश्च बाहुशर्द्धी च बाहुबलः सांयोगिकबलनिरपेक्षः । शर्द्ध इति बलनाम । उग्रधन्वा उद्यतधनुः प्रतिहिताभिरस्ता शत्रुशरीरेषु प्रतिनिहिताभिरिषुभिः इन्द्रः अस्ता क्षेप्तेत्यनुमीयते लघुसन्धानो लक्ष्यपाती चेत्यभिप्रायः ॥ ३५ ॥

बृहस्पते । हे बृहस्पते परिदीया दीयतिर्गतिकर्मा । परि पाहि रथेन रक्षोहा रक्षसां हन्ता सन् अमित्रान् शत्रून् अपबाधमानः किञ्च प्रभञ्जन् प्रमर्द्दयन् सेनाः प्रमृणश्च युधा जयन् मृणातिर्हिंसार्थः । तस्य क्विपि द्वितीयाबहुवचनं प्रमृणः हिंसकान् युधा युद्धेन जयन् अस्माकम् एधि भव अविता गोप्ता रथानां बृहस्पतिरपि इन्द्रस्य पुरोहित इतीन्द्रसम्बन्धेनैव स्तूयते ॥ ३६ ॥

बलविज्ञाय स्थविरः । यस्त्वं बलमाविः कुर्वन् विज्ञायसे अयमिन्द्र इति स्थविरश्च सर्वानुशासकः सर्वमान्यो वा चिरन्तनो वा प्रवीरश्च प्रकृष्टो वीरः सहस्वांश्च बलवान् वाजी च वेजनवान् । सहमान उग्रश्च अभिभवन् विषमः । यद्वा अभिभवन् क्रुद्धश्च अभिवीरश्च वीरं वीरमभि अभिवीरः । अभिसत्वा च सत्वं सत्वमभिसत्वा सहोजाश्च । सह इति बलनाम । बलाज्जातः न ह्यन्यस्माज्जात

इत्थंबलः स्यात् । स त्वं जैत्रं जेतारं हे इन्द्र रथमातिष्ठ । गोवित् स्तुतिवित् सन् गोशब्दो वाग्वचनः ॥ ३७ ॥

गोत्रभिदम् । असुरगोत्रं भिनत्तीति गोत्रभित् । यद्वा । गोत्र इति मेघनाम । स हि ताः अपः त्रायते तस्य भेत्तारं वृष्ट्यर्थं गोविदम् । अपां लब्धारं यद्वा वाग्विदं स्तुतिविदं पण्डितं वा । वज्रबाहुं वज्रपाणिं जयन्तम् । अज्म अज्मेति संग्रामनाम । अयतेर्गत्यर्थस्य । प्रमृणन्तम् ओजसा मृणातिर्हिंसाकर्म्मा । प्रमर्दयन्तं बलेन इमं रुद्रं हे सजाताः समानजन्मानो देवाः अनुवीरयध्वं वीरकर्म्म कुर्वाणमनुगम्य वीरकर्मणैव प्रोत्साहायत हे सखायः समानख्याना देवाः अनुसंरम्भध्वमनुसंगम्य संरम्भं कुरुत ॥ ३८ ॥

अभि गोत्राणि । अभिगाहमानः गोत्राणि असुरकुलानि मेघवृन्दानि वा सहसा बलेन अदयो निर्घृणः वीरः विक्रान्तः शतमन्युः बहुक्रोधः इन्द्रः दुश्च्यवनः । अप्रच्याव्यः पृतनाषाट् पृतनां संग्रामं सहते अभिभवति अयुध्यः अविद्यमानप्रतियोधः य इत्थभूतः इन्द्रः । सोऽस्माकं सेनाः अवतु प्रपालयतु युत्सु युद्धेषु ॥ ३९ ॥

इन्द्र आसां देवसेनानां व्यूहरचनानाम् । आसां नेता भवतु बृहस्पतिश्च मन्त्रप्रणीतानि कार्याणि राजा करोति दक्षिणा यज्ञः दक्षिणतो यज्ञ एतु पुनः एतु सोमः पुरस्तात् आगच्छतु सोमः । यद्वा दक्षिणा च पुरस्तादेतु यज्ञश्च सोमश्च । केषामित्यत आह देवसेनानाम् । अभिभञ्जन्तीनां भञ्जो आमर्द्दने जयन्तीनां च मरुतः गणभूता यन्तु अग्रं निरुध्य ॥ ४० ॥

इन्द्रस्य वृष्णः । इन्द्रस्य वर्षितुः वरुणस्य राज्ञः आदित्यानां मरुतां च शर्द्धः बलं हस्त्यश्वरथपदातिलक्षणम् उग्रं उद्गूर्णायुधम् । उदस्थादित्यनुषङ्गः । यदा चैतदुदस्थादथानन्तरमेव महामनसाम् असंश्लिष्टमनसां भुवनच्यवानां भुवनच्यवनसमर्थानां घोषः शब्दः देवानां जयताम् । उदस्थात् उत्थितः जितं जितमिति ॥ ४१ ॥

उद्धर्षय । उद्भूतहर्षान्कुरु हे मघवन् आयुधानि उत्सत्वनाम् । उद्धर्षय च सत्वानां मनुष्याणां मामकानां मदीयानां मनांसि उद्धर्षय हे वृत्रहन् वाजिनां वाजिनानि वेजनानि चञ्चलत्वं ह्यश्वस्य गुणः । उद्रथानां जयतां यन्तु घोषाः उद्यन्तु च त्वत्प्रसादा-

द्रथानां जयतां घोषाः ॥ ४२ ॥

अस्माकमिन्द्रः । अस्माकं तावत् समृतेषु सङ्गतेषु ध्वजेषु शत्रुबलध्वजलोलीभूतेषु इन्द्रो रक्षिता भवतु इन्द्रप्रसादादेवास्माकं या इषवस्ता जयन्तु । अस्माकं च वीरा उत्तरे विजयिनो भवन्तु । अस्मान् उ । विनिग्रहार्थीय उकारः अस्मानेव हे देवाः अवत रक्षत हवेषु आह्वानेषु ॥ ४३ ॥

अमीषां चित्तम् । अप्वा देवता सा च पुनर्व्याधिर्वा भयं वा यस्मादनया विद्धो व्याप्तः अपचीयते अपचयते तया भक्षणात्तस्मादप्वा अपशब्दान्त्याकारलोपो वाते उत्तरतः । ऐन्द्र्योऽभिरूपा द्वादश भवन्तीति श्रुतेः। एषापि इन्द्रसेना सम्बन्धिनी । अमीषां शत्रुबलसम्बन्धिनां मनुष्याणां चित्तं चित्तानीति विभक्तिव्यत्ययः प्रतिलोभयन्ती । लुभ विमोहने । विमोहयमाना गृहाण शत्रूणामङ्गानि हे अप्वे तन् परेहि परागच्छ परतरान् शत्रून् ग्रहीतुम् । अतो भूयोभूयः करणेनैतानेव शत्रूनभिप्रेहि निर्दह चैषां हृदयानि शोकैः हृत्स्विति सप्तमीबहुवचनं द्वितीयाबहुवचनस्य स्थाने । तथा चैषां हृदयानि निर्दह शोकैर्यथा अन्धेनाध्यानलक्षणेन अमित्राः तमसा सचन्तां तमसा संसेव्यन्तां तमसाश्लिष्यन्ताम् । द्वादशैन्द्र्यः समाप्ताः ॥ ४४ ॥

पृथग् विनियोगमन्त्राः । अवसृष्टा इषुदेवत्या अनुष्टुप् । अवसृष्टा निक्षिप्ता परापत परागच्छ । हे शरव्ये । शरमयी इषुः शरव्या हे ब्रह्मसंशिते ब्रह्मणा मन्त्रेणाभिमन्त्र्य नितरां तीक्ष्णीकृते गच्छ परापत गच्छेत्यतिशयार्थम् । एकार्थयोराख्यातयोर्द्विर्वचनम् । अमित्रान् प्रपद्यस्व मा चामीषाममित्राणां कञ्चन उच्छिषः उच्छेषय उद्धृतमूलान् कुर्वित्यभिप्रायः ॥ ४५ ॥

प्रेता । योद्धॄन् स्तौति । अनुष्टुप् । हे नरः मनुष्याः प्रेत गच्छत जयत इन्द्रश्च वः शर्म्म शरणं परित्राणं यच्छतु ददातु । उग्राः उद्गूर्णायुधा वः युष्माकं सन्तु बाहवः अनाधृष्या अप्रधृष्याः यथा यूयम् । असथ भवथ तथा उग्राः वः सन्तु बाहवः इत्यनुषङ्गः ॥४६॥

असौ या । मारुती त्रिष्टुप् । असौ या सेना हे मरुतः परेषां शत्रूणाम् । अभ्यैति अभ्यागच्छति नः अस्मान् प्रति । ओजसा बलेन स्पर्द्धमाना तां सेनां गूहत व्याप्नुत तमसा अपव्रतेन व्रत-

मिति कर्म्मनाम । अपगतकर्मणा येन तमसा व्याप्तानां नश्यन्ति कर्माणि तदपव्रतं तमः तेनापव्रतेन तमसा तथा गूहत यथा अमी अन्योऽन्यं न जानन् यथा अमी सैनिकाः अन्योऽन्यं परस्परं न जानीयुः ॥ ४७ ॥

यत्र बाणाः। लिङ्गोक्तदेवता पङ्क्तिः । यत्र बाणाः इषवः सम्पतन्ति अनिर्मर्यादम् । कथमिव कुमारा विशिषा इव यथा कुमाराः अदृष्टपरिकारिणः विगतशिखाः सर्वमुण्डा क्रीडार्थे तं तमर्थं सन्निपतेयुरेवं सम्पतन्ति तत्र तत्रेत्यर्थः । अस्माकमिन्द्रः शर्म्म शरणं यच्छतु ददातु बृहस्पतिः शर्म्म यच्छतु अदितिः शर्म्म यच्छतु विश्वाहा सदाकालं च शर्म यच्छतु इन्द्रः बृहस्पतिः अदितिः ॥ ४८ ॥

मर्माणि ते । लिङ्गोक्तदेवता त्रिष्टुप् । कवचं प्रयच्छति मर्म्माणि ते वर्मणा कवचेन छदयामि सोमश्च राजा त्वाम् । अमृतेन अनुवस्ताम् । आच्छादयतु । किञ्च उरोर्वरीयो वरुणस्ते कृणोतु पृथोरपि प्रथीयो वरुणस्तव कवचं करोतु । किञ्च जयन्तं त्वामनुमदन्तु उत्साहयन्तु देवताः ॥ ४९ ॥

उदेनम् । समिध आदधाति तिसृभिरनुष्टुभिः । तत्र प्रथमाग्नेयी द्वितीयैन्द्री तृतीया लिङ्गोक्तदेवता । उदेनमुत्तरां नय एनं यजमानम् । उद्गततराम् । ऊर्ध्वतरां हे अग्ने घृतेन आहुतिसम्बद्धेन आहुत । जुहोतेरेतद्रूपं नतु ह्वयतेः । रायस्पोषेण च धनपुष्ट्या संसृज प्रजया च बहुपुत्रपौत्रसङ्कुलं कृधि कुरु ॥ ५० ॥

इन्द्रेमम् । हे इन्द्र इमं यजमानं प्रतरां प्रगततरां नय । सजातानां समानजन्मनाम् । असत् भवतु वशी कान्तः ईश्वरो वा । किञ्च समेनं वर्चसा सृज संसृज च एनं यजमानं वर्चसा स्वेन कर्मणा वर्णानामुत्कर्षो वर्चः देवानां च भागदाः असत् भवतु । यज्ञसमाप्तिं त्वत्प्रसादात् प्राप्नोत्वित्यर्थः ॥ ५१ ॥

यस्य कुर्मः । यस्य यजमानस्य कुर्मः गृहे हविः तं हे अग्ने वर्द्धय त्वं प्रजया पशुभिश्च तस्मै देवा अधिब्रुवन् । उपरिभावेन यत्प्रशस्तं कल्याणं तद्ब्रुवन्तु । अयं च ब्रह्मणस्पतिरग्निः ॥ ५२ ॥

अग्निमुद्यच्छति । उदु त्वेति व्याख्यातम् ॥ ५३ ॥

चित्यं गच्छन्ति । पञ्चभिर्ऋग्भिः यज्ञाग्निसाधनसंवादिनीभिः पञ्च दिशः । द्वे त्रिष्टुभौ । पञ्च दिशः दैवीः देवानां संबन्धिन्यः यज्ञ-

भवन्तु पालयन्तु स्वयं च देव्यः किं कुर्वाणाः यज्ञमवन्तु अमतिं दुर्मतिं बाधमानाः अमतिम् अमननमज्ञानम् अशनायां दुर्मतिं च । किञ्च रायस्पोषे धनस्य पुष्टौ यज्ञपतिं यजमानम् आभजन्तीः भागिनं कुर्वन्त्यः रायस्पोषे च अधि उपरि यज्ञः अस्थात् तिष्ठतु दिग्भिरेव स्थापितः ॥ ५४ ॥

समिद्धे अग्नौ । असंबद्धानि वाक्यानि यद्योगात्तद्योगाच्च संबद्धानि भवन्ति यः समिद्धे सम्यग्दीप्ते अग्नौ प्रणीयमान अधिमामहानः । यजमानो वै मामहान इति श्रुतिः । मह पूजायाम् उपरिभावेन देवानामत्यर्थं पूजकः आत्मानं वा कृतकृत्यं मन्यमानो अग्निमुपगच्छति यस्य तु उक्थपत्रोऽग्निः प्रणीयमानोऽग्निष्टोमे उक्तानि भवन्ति तदङ्गभूतश्चायमग्निः । इध्यः कृतयश्रियः गृहीतः धारितोऽध्वर्युणा यस्य च मामहानस्य तप्तं रुचितं घर्मं परिगृह्य परीशासाभ्याम् अयजन्त ऋत्विजः यस्य च ऊर्जा अन्नेन हविर्लक्षणेन यज्ञमयजन्त संगतं कृतवन्तः देवाः ऋत्विजः सोऽयं कृतकृत्य इति शेषः ॥ ५५ ॥

दैव्याय धर्त्रे । बृहती वा पङ्क्तिर्वा । यस्मै अग्नये दैव्याय देवानां संबन्धिनं धर्त्रे धारयित्रे । जगतः जोष्ट्रे जोषयितृतमाय पयोदानार्थं नीयत इति वाक्यशेषः । यश्च देवश्रीः देवा अस्य श्रियः श्रीमनाः भक्तेभ्यः श्रियं दातुकामः श्रीर्वा यस्य मनसि वसति शतपयाः बहूनि पयांसि यस्य अन्नानि असौ बहुपयाः यं च परिगृह्य गृहीत्वा देवाः ऋत्विग्यजमानाः यज्ञं कर्त्तुमागच्छन्ति तं देवा ऋत्विग्यजमानाः देवेभ्यः यज्ञाङ्गभूतेभ्यो देवेभ्यः अध्वर्यन्तः अध्वरं कामयमानाः अस्थुः परिवार्य स्थिताः ॥ ५६ ॥

वीतं हविः । बृहती । वीतं कामितम् इष्टम् अभिप्रेतं हविः शमितं सुसंस्कृतं मन्त्रैः शमिता शमित्रेति व्यत्ययो वाक्यवशात् यजध्यै यागाय तुरीयश्चात्र यज्ञो भवति यत्र इत्थंभूतं हव्यं हविरेति अध्वर्युः पुरस्तात् यजूंषि जपति । होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष एव तुरीयश्चतुर्थो यज्ञस्तस्माच्च यज्ञादुत्थिता वाकाः वचनानि ऋग्यजुःसामलक्षणानि आशिषश्च नः अस्मान् जुषन्तां सेवन्तां यज्ञफलेनास्मानालिङ्गयन्त्वित्यर्थः ॥ ५७ ॥

सूर्यरश्मिर्हरिकेशः । त्रिष्टुप् । असौ वा आदित्य एषोऽग्निरिति श्रुतिः । यः सूर्यरश्मिः सूर्यसदृशरश्मिः हरिकेशः हरितवर्णकेशः

सः पुरस्तात् सवितृरूपेण ज्योतिः उदयात् उद्गच्छति । अजस्रम् अनुपक्षीणं तस्य चाग्नेः पूषा प्रसवे याति विद्वान् स्वमधिकारं जानानः पशवो वै पूषेति श्रुतिः । लाक्षणिकया स चाग्निर्याति प्रणीयमानः सम्पश्यन् विश्वानि भुवनानि भूतजातानि गोपायिता समस्तस्य जगतः ॥ ५८ ॥

आग्नीध्रे अस्मानं पृश्निमुपादधाति । विमान एष इति द्वाभ्यां त्रिष्टुब्भ्यामादित्यदेवताभ्यां य एषः आदित्यो विमानो निर्माता भूतग्रामस्य दिवो मध्ये आस्ते द्युलोकस्य मध्ये आस्ते आपप्रिवान्। प्रा पूरणे । आपूरयन् रोदसी द्यावापृथिव्यौ अन्तरिक्षं च स्वकीयेन प्रकाशेनापहृत्य शार्वरं तमः । स विश्वाचीरभिचष्टे घृताचीः । विश्वं हविराञ्चितमस्यामिति विश्वाची वेदिः । घृतमस्यामञ्चितमिति घृताची स्रुक् । वेदींश्च स्रुचश्चाभिपश्यति यज्ञकर्तॄननुग्रहीतुं पश्यतीत्यर्थः । अन्तरा पूर्वमपरं च केतुम् । अन्तरा अन्तरेण पूर्वमिमं लोकमपरं च अमुं च लोकं यत् किञ्चित् केतुं चित्तं जनानां तत्र सर्वमभिचष्टेऽभिपश्यति । अथो यच्चेदमेतर्हि चीयते यच्चाद पूर्वमपचीयतेति ॥ ५९ ॥

उक्षा समुद्रः । य उदयकाले उक्षा सेचनः । समुद्रः समुन्दनो भवति तस्मिन् काले अवश्यायः आतितरां पतति तदभिप्रायमेतत् । अरुणः । वर्णतो निर्देशः सुपर्णः सुपतनः यश्च पूर्वस्य द्युलोकस्य योनिं स्थानं पितुः पितृभूतस्य ततो हि जायमान उपलभ्यत इति पिता द्युलोकः । आविवेश आविशति उदितमात्रः । यश्च मध्ये द्युलोकस्य निहितोऽवस्थितः पृश्निः समस्तरश्मिसङ्कुलो विचित्रः अश्मा अशनो व्यपकः स्यात् स विचक्रमे विक्रममाणः रजसः रञ्जनस्य लोकत्रयस्य पाति गोपायति अन्तौ अन्तान् यो ह्यन्तान्पाति स मध्यं पात्येव ॥ ६० ॥

निधायैनमतिक्रामन्ति चतसृभिः । इन्द्रं विश्वा इति व्याख्यातम् ॥ ६१ ॥

देवहूर्यज्ञः । तिस्रोऽनुष्टुभः । आद्ये द्वे उष्णिहौ वा । यो देवहूः देवानाह्वयति यज्ञः स आ च वक्षत् । आवहतु च देवान् यजतु च किञ्च यक्षत् यजतु च अग्निः देवः देवान् आ च वक्षत् । आवहतु च ॥ ६२ ॥

वाजस्य मा। वाजस्यान्नस्य मा मां प्रसवः प्रसूतिरुत्पत्तिः । अभ्यनुज्ञा वा उद्ग्राभेण उद्ग्रहणेन ऊर्ध्वं हि विगृह्य दीयत इति उद्ग्रहणं दानं दानेनेत्यर्थः । उदग्रभीत्। उद्गृह्णीयात् । हृग्रहोर्भश्छन्दसि हस्येति छान्दसो हकारस्य भकारः । अध अथ समनन्तरमेव सपत्नान् इन्द्रः मम निग्राभेण नीचैर्ग्रहणे नीचैर्हि हस्तं कृत्वा भिक्षादिर्गृह्यते याचिष्णुतया अनम्रतया च अधरान् अधोगमनान् अकः करोतु ॥ ६३ ॥

उद्ग्राभं च। उद्ग्राभं च अस्मद्विषयं निग्राभं च शत्रुविषयं ब्रह्म च त्रयीलक्षणं यज्ञविषयं देवा अवीवृधन् वर्द्धयन्तु । अथ सपत्नानिन्द्राग्नी मे मम विषूचीनान् विष्वगञ्चनान् नानागतीन् कृत्वा व्यस्यतां विक्षिपतामपुनरागमनाय ॥ ६४ ॥

चित्यमारोहन्ति पञ्चभिः। क्रमध्वमग्निना। अनुष्टुप् । हे ऋत्विग्यजमानाः क्रमध्वम्। आक्रमध्वम् । अग्निना चित्येन लोककालाग्न्यादिवपुषा नाकं दिवम्। उख्यम। उखायां धृतमग्निम् । उख्यं हस्तेषु बिभ्रतो धारयमाणाः ततो दिवः पृष्ठमारुह्य स्वर्गं लोकं गत्वा मिश्राः समानलोकस्थानायुषः । देवैः सह आध्वम आसनं कुरुत देवीभूताः। आसेरेतद्रूपम्। धि चेति सकारलोपः ॥ ६५ ॥

प्राचीमनु। त्रिष्टुप्। प्राचीदिशमनुप्रेहि प्रगच्छ विद्वान् स्वमधिकारं जानानः अग्नेरिष्टकास्थलरूपस्य । हे अग्ने उख्यरूपप्रणीयमान पुरोऽग्निः पुरोगामी अग्निर्भव इह यज्ञे ततो विश्वाः सर्वाः आशाः दिशः दीद्यानः आभासयन् विभाहि विविधं दीप्यस्व ऊर्जं नः धेहि द्विपदे चतुष्पदे द्विपाद्भ्यश्चतुष्पाद्भ्यश्च ॥ ६६ ॥

पृथिव्या अहम् पिपीलिकमध्या बृहती। यजमान आह पृथिव्याः सकाशात् अहम् । उदन्तरिक्षमारुहम्। ऊर्ध्वक्रमेण अन्तरिक्षमारूढः अन्तरिक्षाच्च दिवमारुहम् द्युलोकमारूढः दिवः नाकस्य पृष्ठम्। आरूढः नाकस्य पृष्ठाच्च स्वरादित्याख्यं ज्योतिः अगाम्। आगतः प्राप्तोऽहं क्षेमीभूतः गार्हपत्याग्नीध्रीयमागच्छन्त्याग्नीध्रीयादाहवनीयमित्यादि श्रुतिः। अग्नीनां लोकसंस्तवं दर्शयति ॥ ६७ ॥

स्वर्यन्तः अनुष्टुप् । अत्र द्वितीयोऽर्द्धर्चः प्रथमो व्याख्यायते यच्छब्दयोगात् । यज्ञं ये यजमाना विश्वतो धारं सर्वतो धारम्। आहुतिदक्षिणान्नानि यज्ञस्य धारास्ताभिर्होष वर्षति । यज्वा वि-

श्वस्य जगतो धारयितारं वैश्वानरमारुतवसोर्धारा वाजप्रसवीयानि वा धारा यज्ञस्य सुविद्वांसो ज्ञानकर्म्मसमुच्चयकारिणो वितेनिरे वितन्वन्ति स्वर्यन्तो स्वर्गं लोकं गच्छन्तो नापेक्षन्ते पुत्रपश्वादिकृतकृत्यत्वात् । आरोहन्ति द्यां रोदसी दिव एतद्विशेषणं नतु द्यावापृथिव्योरभिधानं दिव इति । स्वःशब्दोपादानसामर्थ्यात् । कथंभूतां द्यामारोहन्ति रोध्रीं जरामृत्युशोकादीनाम् ॥ ६८ ॥

अग्ने प्रेहि । त्रिष्टुप् । हे अग्ने प्रेहि प्रयाहि । प्रथमः देवयतां देवान् यष्टुमिच्छतां यस्त्वं चक्षुः देवानामपि च मर्त्त्याणां मनुष्याणां सतस्त्वयि प्रथमं प्राप्ते सति इयक्षमाणा भृगुभिः यागं कुर्वाणाः भृगुग्रहणमार्षेयानूचानब्राह्मणोपलक्षणार्थम् सजोषाः समानजोषणश्च देवैः सन्तः । स्वर्गलोकं यन्तु यजमानाः स्वस्ति अविनाशेन ॥ ६९ ॥

पयसाभिजुहोति । नक्तोषासा व्याख्याता ॥ ७० ॥

अग्ने सहस्राक्ष । आग्नेयी विराट् हे अग्ने सहस्राक्षं हिरण्यशकलैर्वा एष सहस्राक्षः।शतमूर्द्धन् । यदहः शतशीर्षा रुद्रोऽसृज्यत यस्य च तव शतं प्राणाः सहस्रं व्यानाः यश्च त्वं साहस्रस्य रायो धनस्य हविर्लक्षणस्य ईशिषे दातुं समर्थोऽसि तस्मै ते तुभ्यं विधेम । विदधातिर्दानार्थः । दद्मः । वाजाय वाजमिति विभक्तिव्यत्ययः । वाजं हविर्लक्षणं स्वाहा सुहुतमस्तु ॥ ७१ ॥

स्वयमातृण्णायामग्निं निदधाति सुपर्णोऽसीति द्वाभ्यामाग्नेयीभ्यां पङ्क्तित्रिष्टुब्भ्याम् । यस्त्वं सुपर्णवदसि गरुत्मान् गरणवान् अशनायाशरीरः स पृष्ठे पृथिव्याः सीद अवस्थानं कुरु भासा च दीप्त्या अन्तरिक्षमापृण आपूरय ज्योतिषा च दिवमुत्तभान उत्तम्भय तेजसा दिश उद् दृꣳह तेजसा च दिशो दृढीकुरु । आदीपनार्थो वा दृंहतिः ॥ ७२ ॥

आजुह्वानः । अभिहूयमानः सुप्रतीकः सुमुखः सन् पुरस्तात् पूर्वस्यां दिशि हे अग्ने स्वं योनिस्थानम् आसीद अधितिष्ठ साधुया साधुक्रियाविशेषणत्वेन श्रुत्या व्याख्यातम् । यूमपि च हे विश्वेदेवा यजमानश्च सीदत आवस्थानं कुरुत अस्मिन् सधस्थे सहस्थाने अधियज्ञं स्वर्गाख्ये । स्वर्गो वै लोकः सधस्थ इति श्रुतिः । अध्युत्तरस्मिन् सर्वोत्कृष्टे । अत्र तृतीयः पादः पश्चाद्व्याख्यायते अर्थसंबन्धात्॥७३॥

तिस्रः समिध आदधाति तिसृभिर्ऋग्भिः । कण्वः तत्रैकया स-वितारं त्रिष्टुभा पुरस्ताज्ज्योतिषा धेनुं कामदोहनीं ययाचे । ता-ॅं सवितुः । तां सवितुः सम्बन्धिनीं वरेण्यस्य वरणीयस्य चित्रं चाप-नीयाम् । आवृणे आवृणोमि स्वीकरोमि अहं सुमतिं कल्याणीं मतिं विश्वजन्यां सर्वहितां यां सुमतिं प्राप्य अस्य सवितुः सम्बन्धिनीं कण्वः अदुहत् दुग्धवान् प्रपीनां प्रपूरितां पयसा सहस्रधारां बहु-धारां बहुनो वा कुटुम्बस्य धारयित्रीं महीं महतीं गाम् ॥ ७४ ॥

विधेम ते । त्रिस्थानोऽग्निर्देवता त्रिष्टुप् । विधेम । विदधाति-र्दानकर्मा दद्मः ते तुभ्यं परमे जन्मनि जाताय आदित्यात्मना स्थि-ताय द्यौर्वा अस्य परमं जन्म । विधेम च स्तोमैः स्तुतिभिः अवरे सधस्थेऽवस्थिताय विद्युदात्मना । अन्तरिक्षं वा अवरं सधस्थं य-स्माद्योनेः उत् आरिथाः । ऋ गतौ । अस्यैतद्रूपम् । यस्माच्च स्थानादुद्गतोऽसि यजे तं स्थानमहम् । एष अस्य स्वो योनिः एष इति चित्योऽग्निरुच्यते । किञ्च प्र त्वे हवींषि जुहुरे समिद्धे । प्रजु-होमि त्वयि हवींषि समिद्धे सम्यग्दीप्ते ॥ ७५ ॥

प्रेद्धो अग्ने । आग्नेयी विराट् । प्रकर्षेण इद्धः दीप्तः सन् हे अग्ने भूयोऽपि दीदिहि दीप्यस्व पुरो नः अग्रतोऽस्माकं व्यवस्थितः एत-या अजस्रयानुपक्षीणया सूर्म्या समित्काष्ठिकया सूर्म्मीशब्दः का-ष्ठवचनः । यद्वा सूर्म्मी लोहस्थूणा । सूर्म्मीं ज्वलन्तीं वा श्लिष्ये-दिति च स्मृतिः । हे यविष्ठ युवतम यतश्च त्वामेव शश्वन्तः शा-श्वतिकाः उपयन्ति उपगच्छन्ति वाजाः अन्नानि अतो दीदिही-ति संबन्धः ॥ ७६ ॥

तिस्र आहुतीर्जुहोति । अग्ने तमद्येति व्याख्यातम् ॥ ७७ ॥

चित्तिं जुहोमि । वैश्वकर्म्मणी जगत्यतिजगती वा । चित्तिं चित्त-म् । एषाम् ऋत्विग्यजमानानां जुहोमि अग्निसंबद्धं करोमि अग्नित-त्त्वपरिज्ञानार्थं चिन्तनसंतानं करोमीत्यर्थः । मनसा च घृतेन च सह तथा जुहोमि यथा देवा इहागमन् इहागच्छेयुः । कथंभूता वीति-होत्राः कामितयज्ञाः । होत्रा इति यज्ञनामसु पठितम् ऋतावृधः सत्य-वृधः । किञ्च पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्म्मणे अधिप-तिभूताय विश्वस्य भूतग्रामस्य भूमनः भूम्नः जुहोमि विश्वकर्म्मणे विश्वाहा सर्वदा अदाभ्यं अनुपक्षीणं हविः ॥ ७८ ॥

सप्त ते । त्रिष्टुप् आग्नेयी । सप्त ते तव हे अग्ने समिधः समिन्धनाः प्राणा यतः सन्ति यतश्च सप्तजिह्वाः तव सन्ति सप्त पुरुषान्संहृत्यैकीकृतो योऽग्निस्तदभिप्रायमेतत् । यतश्च सप्त ऋषयः तव द्रष्टारः सन्ति यतश्च सप्त धामानि प्रियाणि सप्त छन्दांसि प्रियाणि तव सन्ति यतश्च सप्त होत्राः आग्नीध्रपर्यन्ता सप्तधा कृत्वा त्वां यजन्ति अतो ब्रवीमि सप्त योनीः सप्तचितीः आपृणस्व आपूरयस्व घृतेन स्वाहा सुहुतं चैतद्धविर्भवतु ॥ ७९ ॥

मारुतान् जुहोति । शुक्रज्योतिरिति षड्भिर्मन्त्रैर्ऋग्भिः मारुतीभिस्तत्र चैकैकस्यामृचि सप्त सप्त मरुतः प्रथमा उष्णिक् चतुर्थी च द्वितीयातृतीये गायत्र्यौ पञ्चमी जगती षष्ठी गायत्र्युष्णिग्वा । शुक्रज्योतिः पुरोगशस्य स्वमंशं भक्षयतु । चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च शुक्रश्च ऋतपाश्च अत्यंहाश्च अथैकपदनिरुक्तं शुक्रं ज्योतिर्यस्य शुक्रस्येव वा ज्योतिर्यस्य स शुक्रज्योतिः चित्रं ज्योतिः सत्यं ज्योतिः ज्योतिष्मान् ज्योतिषा तद्वान् शुक्रः शुक्लः ऋतपाः सत्यं यज्ञं वा पाति अत्यंहाः अतीत्य अंहः पापं वर्त्तते इति अत्यंहाः ॥ ८० ॥

ईदृङ् च । अनेनानेन च समानदर्शनः ईदृङ् पुरोडाशस्य स्वमंशं प्रतिगृह्णातु अन्यादृङ् च । अन्येनान्येन च समानदर्शनः अन्यादृङ् सदृङ् च तेन तेन समानदर्शनः सदृङ् प्रतिसदृङ् च तं तं प्रति सदृशः प्रतिसदृङ् । मितश्च उत्तमाधममध्यमैस्तुल्यः मितश्च एकीभावेन मितः सम्मितः सभराश्च सह बिभर्त्ति सभराः॥८१॥

ऋतश्च । स्वमंशं पुरोडाशस्य प्राश्नातु सत्यश्च ध्रुवश्च धर्त्ता च विधर्त्ता च । विधारयः च विविधं धारयन्तीति विधारयः ऋजुः ॥ ८२ ॥

ऋतजिच्च । ऋतं जयति ऋताजित् सत्यजिच्च सेनजिच्च । सुषेणश्च शोभनसेनः अन्तिमित्रश्च अन्तिर्म्मित्रः आसन्नमित्रः दूरे अमित्रश्च गणः ऋजुः ॥ ८३ ॥

ईदृक्षासः व्यवहितपदप्रायो मन्त्रः । अयं सादृश्येनात्र मरुतः स्तूयन्ते । ये यूयम् ईदृक्षासः ईदृग्दर्शनाः सर्व एव । ये च । एतादृक्षासः एतद्दर्शनाः सर्व एव । ऊषुणः त्रीणि पदानि छन्दःपरिपूर्त्तिं कुर्वन्ति । ये च यूयं सदृक्षासः समानदर्शनाः सर्व एव । ये यूयं

प्रतिसदृक्षासः प्रतिसमानदर्शना ये च यूयं मितासः मिताः प्रमाणतः सर्व एव ये च यूयं संमितासः सङ्ख्यामिताः सर्व एव च। ये यूयं सभरसः समानमलङ्कारादि बिभ्रतः तान् ब्रवीमि एतत् नो अद्य मरुतो यज्ञेऽस्मिन् एत न आगच्छत नः अस्माकम्। अद्यास्मिन् द्यवि हे मरुतः यज्ञेऽस्मिन् एवं व्यवहितानि पदानि पश्चात्सर्वैरेव सम्बन्धनीयानि ॥ ८४ ॥

स्वतवांश्च स्वाकीयं तवो बलं यस्य स स्वतवान्। स्वमंशं पुरोडाशस्य भक्षयतु प्रघासी च। घस्लृ अदने। प्रकर्षेण अदन शीलः सान्तपनशीलश्च गृहमेधी च क्रीडि च पश्च। चातुर्मास्यदेवताः शाकी च शक्तः उज्जेषी च उज्जयनशीलः ॥ ८५ ॥

इन्द्रं दैवीरिति मारुतं पशुर्ज्जपति। इन्द्रं राजानं दैवीः विशः मरुतो मरुल्लक्षणाः अनुवर्त्मानः अनु पश्चात् वर्त्म वर्त्तनं यासां ताः अनुवर्त्मानः अनुगामिन्य इत्यर्थः। अभवन् स्वरूपस्थापनेन। यथा इन्द्रदैवीः विशः मरुतः अनुवर्त्मानः अभवन् उपमानम्। एवमिमं यजमानं दैवीश्च विशो मरुतः मानुषीश्च मनुष्या अनुगामिन्यः भवन्त्विति प्रार्थना ॥ ८६ ॥

इमꣳस्तनम्। त्रयोदशाग्नेयीत्रिष्टुभो यजमानं वाचयति। घृतस्तुतिः यज्ञस्तुतिश्च दृश्यते वसोर्धारानन्तरं भविष्यतीति तदभिवादिन्यो वा। वसोर्द्धारा स्रुचा हूयते सा स्रुग्रूपकल्पनया स्तन उक्तः। इमं स्रुग्लक्षणं स्तनम् ऊर्ज्जस्वन्तं सचन्तं धय। धेट् पाने। पिब अपां प्रपीनम्। अप् शब्देनात्र घृतमुक्तं सादृश्यात्। यद्वा अथाप्येषां तद्धितेन कृत्स्नवन्निगमा भवन्तीति कृत्स्नवन्निगमः घृतप्रपूरितं हे अग्ने सरिरस्य मध्ये वर्तमाना इमे वै लोकाः सरिरमिति श्रुतिः। एषु लोकेषु मध्ये वर्तमान। किञ्च उत्संजुषस्व उत्स्यन्दनं स्रुग्लक्षणं कूपं जुषस्व सेवस्व मधुमन्तं मधुस्वादेन घृतेन युक्तं हे अर्वन्। ऋ गतौ। अस्यैतद्रूपम्। सर्वतोगत। किञ्च समुद्रियं समुद्रसम्बन्धिनं सदनं गृहमाविशस्व सेवस्व त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतꣳसाम्नां महदुक्थमृचामित्येतदभिप्रायमन्तरिक्षं वा समुद्रः ॥ ८७ ॥

घृतं मिमिक्षे घृतमस्य। योऽयमग्निर्घृतं मिमिक्षे घृतमुदकमाहुतिपरिणामभूतं मिमिक्षे सिञ्चति। अथवा यस्याग्नेर्मुखे अहं घृ-

तं मिमिक्षे सिञ्चामि यस्य चास्य घृतं योनिः उत्पत्तिस्थानम् । अ-ग्निर्यस्यै योनिरसृज्यत तस्यै घृतमुल्वमासीदित्येतदभिप्रायम् । घृते श्रितः अवस्थितः यस्य चास्य घृतमेव धाम तेजः दीप्तिर्नाम वा तमग्निमनुष्वधमावह हे अध्वर्यो अनुष्वधम् । अन्वन्नं पूर्वमन्न-मुपकल्प्य पश्चादाहूय आहूय च मादयस्व तर्पय तर्पयित्वा चैवं ब्रूहि स्वहाकृतं स्वाहाकारेणाभिहुतं हे वृषभ वर्षितः । वक्षि वह हव्यं हविः देवानामाह्वानं हविषां वहनं देवानामित्यग्नेः कर्मणी ॥ ८८ ॥

समुद्रादूर्म्मिः अन्नाध्यासेन घृतमेव स्तूयते प्राणाध्यासेन चा-ग्निः यस्मात्समुद्रात् घृतमयात् अक्षीणत्वात् घृतस्य समुद्रेणोपमा-नम् । अन्नदेवताभिप्रायं वा सा ह्यनुपक्षीणैव ऊर्म्मिः महाराशिः घृतकल्लोलः मधुमान् उदारत् उदगच्छत् । उद्गत्य च उपांशु-ना सममृतत्वमानट् । उपसंव्याप्नोतु अंशुना प्राणेन च जगत्प्रा-णभूतेनाग्निना एकीभूय अमृतत्वम् । अमरणधर्मित्वं प्राणश्चान्नं चैकीभूयामृतत्वं प्राप्नुत इत्यर्थः । तस्य घृतस्य नाम गुह्यम् । अ-विज्ञातमविद्वद्भिः श्रुतिमन्त्रपठितं यदस्ति तदहं वेद्मि जिह्वा देवा नाम् । अत्यन्ताभिलाषाजिह्वोत्थाननिमित्तं देवानाम् । अग्नेर्जिह्वा-सीति यदा वा एतदग्नौ जुह्वत्यथाग्नेर्जिह्वा इवोत्तिष्ठन्तीति । यच्च सर्वप्रकाशं तदप्यहं वेद्मि अमृतस्य नाभि अमरणधर्मित्वस्य नहनं बन्धनं यो हि घृतमश्नाति स दीर्घायुर्भवति । यद्वा अर्धेन मन्त्रः स्तूयते अर्धेन घृतमस्य मन्त्रस्य समुद्रात् आग्निकात् यज्ञः । समु-द्रादयत् । ऊर्म्मिः शब्दसंघातः उपसर्गनिपातलक्षण उपमोत्प्रेक्षा-रूपकाद्यलङ्कारोपेतः मधुमान् रसवान् वाक्यार्थगुणैर्युक्तः उदारत् उदगान्मुखतः स एव उपांशुना सवनेन क्रियमाणः तदेद्यजुरुपां श्वनिरुक्तामिति वचनात् संव्याप्नोत् अमृतत्वमतोऽग्निविद्भिः प्र-काशनीयः घृतस्य च नाम गुह्यं यदस्ति तदपि जिह्वोत्थाननिमित्तं देवानां किमुत साक्षाद्धोमः । अथास्य घृतकीर्तावेवाग्निर्वैश्वान-रो मुखादुज्जज्वालेतदभिप्रायं वचनम् । अमृतत्वस्य च नाभिः न-हनं यजमानानामतोऽग्निविद्भिर्हूयते स्तूयते च ॥ ८९ ॥

वयं नाम । यतो नामोच्चारणमपि घृतस्य प्रियं देवानामतो व-यं नाम प्रब्रवाम घृतस्य अस्मिन् यज्ञे धारयाम च घृतनमोभिः । हविर्भिः । किञ्च उपशृणोतु चैतत् स्तोत्रं ब्रह्मा ऋत्विक् शस्यमा-

नम् । यथा चतुःशृङ्गः यज्ञः ऋत्विजोऽस्य शृङ्गाणि अवमीत् उद्गिरति यज्ञपरिणामाभिप्रायं गौरः गौरवर्णः एतद् घृतम् ॥ ९० ॥

चत्वारि शृङ्गा । चतुःशृङ्गोऽवमीदित्युक्त्वा अधुना चतुःशृङ्गं यज्ञं वृषभशब्दवाच्यं वृषशब्दं वा प्रतिपादयितुमाह यस्यास्य चत्वारि शृङ्गाणि ब्रह्मोद्गातृहोत्रध्वर्याख्यानि यस्य वास्य त्रयः पादाः ऋग्यजुःसामलक्षणाः यस्य चास्य द्वे शीर्षे हविर्द्धानप्रवर्ग्याख्ये यस्य चास्य सप्त हस्ताः सप्त होतारो हस्ता इव व्याप्रियन्ते । यद्वा सप्त छन्दांसि हस्ता इव । यश्चायं त्रिधा त्रिः प्रकारं बद्धः प्रातःसवनमाध्यन्दिनतृतीयसवनैः वृषभो वर्षिता रोरवीति । रु शब्दे । अत्यर्थं शब्दं करोति सोऽयं महो देवः महान्देवो हिरण्यगर्भस्तम्बपर्यन्तानां प्राणिनामुपजीव्यः ज्ञानकर्मसमुच्चयकारिणां शरीरभूतः मर्त्यान्मनुष्यानाविशति । शब्दग्रामो वाभिधेयः । चत्वारि शृङ्गाणि नामाख्यातोपसर्गानिपाताः । त्रयोऽस्य पादाः प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः द्वे शीर्षे नामाख्याते । सप्त हस्ताः सप्त विभक्तयः त्रिधा बद्धः एकवचनद्विवचनबहुवचनैः वृषभ इवामर्षादन्यानि शास्त्राण्यधस्पदीकृत्य रोरवीति यः उक्तगुणः सोऽयं महो देवो मर्त्यानाविशति प्रतिपादयति ॥ ९१ ॥

त्रिधा हितम् । यज्ञपरिणामभूतं यथा घृतं तथाह त्रिधा निहितं स्थापितमेषु लोकेषु पणिभिरसुरैः गुह्यमानं गुप्यमानं गवि देवाः घृतमन्वविन्दन् आनुपूर्व्या लब्धवन्तः यत्तस्य घृतस्य इन्द्र एकं भागं जजान जनयति ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशन्त इत्यादिश्रुतिरिन्द्रस्य जनकत्वं दर्शयति । सूर्य एकं भागं जनयति । ते तत उत्क्रामतः ते दिवमाविशन्त इत्यादिश्रुतिः सूर्यस्य जनकत्वं दर्शयति । वेनादग्नेर्यज्ञसाधनभूतात् एकं भागं स्वधयान्नेनाहुतिलक्षणेन निष्टतक्षुः निष्कर्षितवन्तः द्विजातयः । यस्ततः पुत्रो जायते स लोकः प्रत्युत्थायीत्येतदुक्तं भवति ॥ ९२ ॥

एता अर्षन्ति । या एता ऊर्मयो वाचः अर्षन्ति उद्गच्छन्ति हृद्यात्समुद्रात् श्रद्धोदकप्लुतदेवताया याथात्म्यचिन्तनसन्तानगर्भान्निगमनिरुक्तनिघण्टुव्याकरणशिक्षाच्छन्दोभिः परिपाचनस्थानीयैः परिपूतान् शतव्रजाः बहुगतयो बह्वर्था याश्चैता अर्षन्त्यो रिपुणा कुतार्किकवृन्दशत्रुसङ्घेन नावचक्षे नापवदितुं शक्याः ताः घृतस्यैव

धाराः देवानां तृप्तिकराः अभिचाकशीमि अहमभिपश्यामि हिरण्मयश्च वेतसोऽग्निर्मध्ये आसां वाग्व्यक्तीनां विद्यमानस्तं चाभिचाकशीमि । अग्निर्हि वाचामधिष्ठात्री देवता । यद्वा घृतस्य धारा एवोच्यन्ते । या एता अर्षन्ति गच्छन्ति हृद्यात्समुद्रात् हृदयेन हि सङ्कल्प्य पश्चाद्यजन्ते ता एवमुच्यन्ते शतव्रजाः बहुगतयो याश्चैता रिपुणा शत्रुणा यज्ञपरिपन्थिना नावचक्षे नावद्रष्टुं शक्यन्ते ता घृतस्य धारा अभिचाकशीमि पश्यामि यश्चायं हिरण्मयो वेतसोऽग्निराहवनीयाख्यो मध्ये आसां व्यवतिष्ठते तमप्यहं पश्यामि याथात्म्यतोऽहं द्रव्यं देवतां पश्यामीत्येतदुक्तं भवति ॥ ९३ ॥

सम्यक् । या एताः साधु स्रवन्ति सरितो न धेनाः नद्य इवानावच्छिन्नोदकसन्तानप्रबद्धाः धेना वाचः । धेना इति वाङ्नामसु पठितम् । अन्तर्हृदा मनसा पूयमानाः अन्तर्व्यवस्थितेन हृदयेन परिपावनस्थानीयेन मनसा च पूयमाना विविच्यमानाः शब्ददोषेभ्यस्ता अग्निमेव स्तुवन्तीति शेषः । ये चैते अर्षन्ति गच्छन्ति ऊर्म्मयः संघाताः घृतस्य मृगा इव क्षिपणो रोषमाणाः । मृगा इव क्षिपणोः व्याधात् प्रपलायमानाः तेऽपि अग्निं तर्प्पयन्तीति शेषः । एतदुक्तं भवति श्रुतिश्च द्रव्यं चाग्न्यर्थमेव ॥ ९४ ॥

सिन्धोरिव । या एताः सिन्धोरिव नद्याः प्राध्वने प्रगतोऽध्वा प्राध्वा महोदकप्रपातः तस्मिन् महोदकप्रपाते शूघनासः शू इति क्षिप्रनाम । हन्तेर्गत्यर्थस्य घनः । क्षिप्रगमनाः वातप्रमियः । मिङ् हिंसायाम् । वातेन याः प्रमीयन्ते विनश्यन्ति ताः वातप्रमियस्तरङ्गवीच्यः पतयन्ति । स्वार्थे णिच् । प्रपतन्ति यद्वाः महत्यः स्रुङ्मुखात्परिभ्रष्टाः घृतस्य धाराः ताः पतन्तीरश्नात्यग्निः । क इवेत्यत आह अरुषो न वाजी । नकार उपमार्थीयः । यथा आरोचनो जात्यादिभिरुत्कृष्टो वाजी वेजनवानश्वः । पुनरप्यश्वं विशिनष्टि । काष्ठा भिन्दन् आज्यन्तान् विधारयन् ऊर्म्मिभिः पिन्वमानः आज्यन्तविभेदश्रमयोगात् च स्वेदोदकोर्म्मिभिः पिन्वमानः प्रसिञ्चनभूमिम् । यथैतद्गुणविशिष्टोऽश्वोऽन्नान्यश्नात्येवमग्निः अश्नातीति वाक्यार्थः । ननु हीनोपमानमग्नेरश्वेन ज्यायांस्तत्र गुणोऽभिप्रेत इति परिहृतं यास्केन ॥ ९५ ॥

अभिप्रवन्त । अभिनमन्त्यो यन्ति प्रह्वीभवन्ति काः पुनस्त

घृतस्य धाराः कमभिमह्नीभवन्ति अग्निं कथमिव । समनेव योषाः समानमनस्का इव योषाः एकं भर्त्तारं प्रति सङ्गतमनसः कल्याण्यः रूपयौवनसंपन्नाः स्मयमानाः । ष्मिङ् ईषद्धसने । ईषद्धसमानाः समिधः समिन्धनाः । इत्थंभूता धाराः अग्निमभिमह्नीभूय ततस्तमेवाग्निं नसन्त नसतिराप्नोतिकर्म्मा वा । नमतिकर्मा वा व्याप्नुवन्ति ताश्च धारा जुषाणः सेवमानः हर्यति जातवेदाः हर्यतिः प्रेप्साकर्मा प्रेप्सति कामयते नास्य ग्रहणशक्तिपरिहाणमस्तीत्यभिप्रायः जातप्रज्ञानोऽग्निः ॥ ९६ ॥

कन्या इव । या एताः कन्या इव नवपरिणीता इव वहतुं वोढारं भर्तारं प्रति एतवै एतुमागमनाय अञ्जि प्रजननम् । अञ्जानाः व्यक्तं कुर्वाणाः योग्यं कुर्वाणाः अभिगच्छन्ति यज्ञसहचारिता घृतस्य धारा इत्यभिप्रायः ॥ ९७ ॥

अभ्यर्षत । हे देवाः अभ्यर्षत अभ्यागच्छत एतां सुष्टुतिं शोभनां स्तुतिं घृतस्तोमीयां प्रति एनं च गव्यम् । आजिं गोविकारैर्घृतैर्जनितं गव्यम् । आजिमागमनमाजयनमभ्यागच्छत अभ्यागत्य च अस्मासु भद्रा भद्राणि द्रविणानि धनानि धत्त स्थापयत दत्त वा दत्वा च इमं यज्ञं नयत यत्र देवता देवत्वं नः अस्माकम् । अस्माभिर्यो देवलोको जित इत्यर्थः । याश्चैता घृतस्य धाराः मधुमत् मधुसंयुक्तं पवन्ते ताश्चास्मज्जितं लोकं नयतेत्यनुवर्तते ॥९८॥

धामन्ते । आहुतिपरिणामभूतमिदं जगद् ब्रह्मादिस्तम्बपर्यन्तं मन्यमान आह धामन् धामानि विभूत्यां ते तव विश्वं भुवनं भूतजातम् । अधिश्रितम् अध्याश्रितं स्थितं यच्च अन्तः समुद्रे समुद्रमध्ये किञ्चित् यच्च हृदि अन्तः किञ्चित् यच्च आयुषि अन्तः किञ्चित् तदपि धामानि तव अधिश्रितमित्यनुवर्त्तते यत एवमतस्त्वां ब्रवीमि । अपामनीके मुखे वर्तमानो य ऊर्म्मिराहृतः समिथे संग्रामे च पणिभिः सहवर्त्तमानो य ऊर्म्मिराहृतः । तदुक्तम् । त्रिधा हितं पणिभिर्गुह्यमानमिति । तमश्याम भक्षयाम व्याप्नुयाम वा मधुमन्तं रसवन्तं ते तव सम्बन्धिनमूर्म्मिं घृतं हविः परिणामिनो रसस्य वयं भोक्तारो भवेम देवत्वं प्राप्नुयामेति चक्रोक्त्या प्रार्थ्यते ॥ ९९ ॥

श्रीमदुव्वटकृतौ मन्त्रभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

## अथाष्टादशोध्यायः ॥ १८ ॥



इत उत्तरं वयोधारिकाणि यजूंषि सप्तविंशतिकण्डिकाः । वाजश्च मे प्रसवश्च मे । वाजोऽन्नं च मे प्रसवः अन्नदानविषयाभ्यनुज्ञा दीयतां भुज्यतामिति । प्रयतिश्च मे । प्रयतनं प्रयतिः । आज्ञाप्रसहनं प्रसितिः तन्तुर्वा जालं वा तेन चात्र बन्धनं स्नेह उपलक्ष्यते । धीतिश्च मे क्रतुश्च मे । ध्यै चिन्तायाम् । तस्य धीतिः । सम्प्रसारणं छान्दसम् । क्रतुः संकल्पः संस्कारो वा । स्वरश्च मे श्लोकश्च मे । साधुशब्दः स्वरः श्लोकः गद्यपद्यबन्धः । श्रवश्च मे श्रुतिश्च मे । श्रवो वेदमन्त्राः श्रुतिर्ब्राह्मणम् । ज्योतिश्च मे स्वश्च मे । ज्योतिरादित्यादि स्वर्द्युलोकादि । द्वौ द्वौ कामौ संयुनक्ति अव्यवच्छेदाय यथा व्योकसौ संयुञ्ज्यादेवमिति श्रुतिः । द्वौ द्वौ कामावभिरूपौ संयुनक्ति चकारेण समुच्चिनोति अव्यवच्छेदाय अनुपक्षयाय यथा कश्चित् द्विजातिः व्योकसौ संयुञ्ज्यात् । ओक इति निवासनाम । विगत ओकः गृहं ययोः कुमारीकुमारयोः तौ व्योकसौ नानागृहनिवासिनौ संयुज्य तयोर्विवाहं कुर्यादेवं चकारेण समुच्चिनोति यज्ञेन कल्पन्ताम् ॥

वाजप्रभृतीनि चकारसमुच्चितानि मम यज्ञेन कल्पन्तां समर्था भवन्तु यज्ञेऽग्निं तर्प्पयन्तु अभिषिञ्चन्तु वा अनेन च त्वा प्रीणाम्यनेन चानेन च त्वा अभिषिञ्चाम्यनेन चेत्यस्याः श्रुतेरभिप्रायेण व्याख्यातम्। अथो इदं च मे देहीदं च म इत्यस्याः श्रुतेरभिप्रायेण व्याख्यास्यामः । वाजप्रभृतीनि चशब्दसमुच्चितानि मम यज्ञेनानेन क्लृप्तानि भवन्तु यज्ञोऽस्मभ्यम् एतेषां दाता भवत्वित्यर्थः । एवमस्माभिर्दिङ्मात्रप्रदर्शनं कृतं मन्त्रव्याख्यायाः ॥ १—१५ ॥

अथार्धेन्द्राणि जुहोति । अर्द्धे इन्द्रः अर्द्धे अन्ये देवाः । अग्निश्च म इन्द्रश्च म इति ॥ १६ ॥ १७ ॥

अवग्रहान् जुहोति अंशुश्च म इति ॥ १८ ॥ १९ ॥

अथैतान् यज्ञक्रतून् जुहोति । अग्निश्च मे घर्मश्च मे इति॥२०—२३॥

अथायुजस्तोमान् जुहोति । एका च मे तिस्रश्च मे इति ॥ २४ ॥

अथ युग्मतो जुहोति । चतस्रश्च मेऽष्टौ च इति । पूर्वं पूर्वमुत्त-

रेण संबध्नाति । यथा वृक्षं रोहन्नुत्तरामुत्तरां शाखां समालम्ब्यं रोहेत्तादृग् द्विरुक्त्याः प्रयोजनमाख्याति श्रुतिः ॥ २५ ॥

अथ वयांसि जुहोति । पशवो वयांसि ऽयविश्च म इति॥२६॥२७॥

अथ नामग्राहं जुहोति । वाजाय स्वाहा ॥ २८ ॥

अथ कल्पान् जुहोति । आयुर्यज्ञेन कल्पन्तामिति । आयुरादीनि यज्ञेन मम क्लृप्तानि भवन्तु यज्ञश्च मम यज्ञेनैव क्लृप्तो भवतु नाहं यज्ञक्लृप्तौ समर्थ इत्यर्थः । स्तोमश्च यजुश्च ऋक् च साम च बृहच्च रथन्तरं च यज्ञेन क्लृप्तानि भवन्त्वित्यनुषङ्गः । स्वर्देवा अगन्म । हे देवाः स्वर्गलोकं वयमगन्म अमृताश्च भूताः प्रजापतेश्च प्रजा अभूमेति फलवचनम् । वेट् स्वाहेति होममन्त्रः ॥ २९ ॥

वाजप्रसवीयं जुहोति सप्तभिः ऋग्भिः । वाजस्य नु । व्याख्यातम् ॥ ३० ॥

विश्वे अद्य । वैश्वदेवी त्रिष्टुप् । व्यवहितपदप्रायेण इहाध्याह्रियते । विश्वे देवगणा वसवो रुद्रा आदित्या विश्वे मरुतः अद्यास्मिन् द्यवि आगमन्त्वित्यनुषङ्गः । विश्व ऊती । विश्वे इति सर्वनाम सामान्यदेवतागणप्रतिपत्तिजनकमतस्तान्निराकाङ्क्षीकरणाय विशिष्टो देवतागण इहाध्याह्रियते । विश्वे देवगणा वसवो रुद्रा आदित्या ऊती ऊत्या अवनेन तर्प्पणेन निमित्तभूतेन आगमन्तु तदागमनेन च विश्वे भवन्तु अग्नयो गार्हपत्यप्रभृतयः समिद्धाः सम्यग्दीप्ताः विश्वे देवाः नः अस्माकम् । अवसा अन्नेन हविर्लक्षणेन निमित्तभूतेन आगमन्तु आगच्छन्तु तेषां च तुष्ट्या विश्वं सर्वम् । अस्तु द्रविणं भूमिहिरण्यादि धनं वाजश्चान्नम् । अस्मे अस्माकमस्तु यद्वान्यथा सम्बन्धः । विश्वे मरुतः अद्य आगच्छन्तु विश्वे च देवगणाः ऊत्या निमित्तभूतया आगच्छन्तु विश्वे च नो देवा अवसा निमित्तभूतेन आगमन्तु तदागमनेन च विश्वे भवन्तु अग्नयः समिद्धाः होमार्थं हि अग्नयः प्रज्वाल्यन्ते ततो यागोत्तरकालं विश्वमस्तु द्रविणं वाजो अस्मे ॥ ३१ ॥

वाजो नः । अनुष्टुप् । वाजो देवता वाजोऽन्नं नोऽस्माकं सप्त प्रदिशः चतस्रो दिशः प्रकृष्टाः त्रयो लोकाश्च प्रदिश उक्ताः चतस्रो वा परावतः । वाशब्दः समुच्चयार्थीयः चतस्रो वा परावतः परावच्छब्दो दूरवचनः । महः जनः तपः सत्यमित्येते लोकाः उच्यन्ते ।

ते हि त्रींल्लोकानतीत्य वर्त्तन्ते । आपूरयत्त्विति शेषः । किञ्च वाजो नः अस्मान् विश्वैर्देवैः सह धनसातौ धनसम्भजनकाले प्राप्ते इह वा लोके अवतु पालयतु ॥ ३२ ॥

द्वे त्रिष्टुभौ वाजदेवत्ये । वाजो नः । वाजोऽन्नं नः अस्माकम् अद्य प्रसुवाति अभ्यनुजानातु दानं वाजश्च देवान् ऋतुभिः कालैः सह कल्पयतु यथास्थानं वाजो हि मा सर्ववीरं जजान । हिशब्दः समुच्चयार्थीयः । वाजश्च मां सर्ववीरं जनयतु ततो विश्वाः आशाः दिशः वाजपतिः सन् जायेयमित्याशीः ॥ ३३ ॥

वाजः पुरस्तात् । वाजोऽन्नं पुरस्तात् अस्त्विति वाक्यशेषः । उत मध्यतो नः अस्माकमस्तु वाजः । वाजश्च देवान् हविषा वर्द्धयतु अस्माकम् वाजश्च मां सर्ववीरं चकार करोतु ततः सर्वाः आशाः दिशः वाजपतिःसन् भवेयं दिग्रूपता प्रार्थ्यते ॥ ३४ ॥

सं मा । विराजौ आग्नेय्यौ । सोऽहं वाजमिति तच्छब्दयोगात् यदोऽध्याहारः । सम्मा सृजामि योऽहं संसृजामि मा माम् आत्मानं पयसा रसेन पृथिव्याः सम्बन्धिना संसृजामि च मा माम् आत्मानम् अद्भिः ओषधीभिश्च सोऽहं संसृष्टपयःप्रभृतिशरीरः वाजं सनेयं संभजेयं हे अग्ने त्वत्प्रसादात् । यद्वा अग्निरेवोच्यते । अस्मदादेशस्य माशब्दस्य त्वाशब्दं कृत्वा युक्ततरमेतद्व्याख्यानम् । यः अहं हे अग्ने संसृजामि च त्वामद्भिः । ओषधीभिश्च । होमाभिप्रायः संसर्गः । सोऽहं वाजं सनेयमिति ॥ ३५ ॥

पयः पृथिव्याम् । विराट् अग्निरुच्यते । हविर्वा पयः पृथिव्यां धाः निधेहि पयश्च ओषधीषु धाः पयो दिवि धाः अन्तरिक्षे पयोधाः आहुतिपरिणामाभिप्रायमेतत् । किञ्च । पयस्वतीः पयःसंयुक्ताः प्रदिशः दिशो विदिशश्च सन्तु मह्यम् ॥ ३६ ॥

अभिषिञ्चति यजमानम् । देवस्य त्वेति व्याख्यातम । सरस्वत्यै वाचो यन्तुर्यन्त्रेण यमनेन अग्नेश्च साम्राज्येन अभिषिञ्चामि॥३७॥

राष्ट्रभृतो जुहोति । द्वादश यजूंषि स नो भुवनस्य पते इत्येतस्याः प्राक् ऋताषाट् इत्यादीनि । अग्निरुच्यते यः ऋताषाट् ऋतं सत्यं सहत इति ऋताषाट् । ऋतधामा । ऋतं सत्यं धाम स्थानं यस्य सः तथोक्तः अग्निः गन्धर्वः तस्य चाग्नेर्गन्धर्वस्य ओषधयोऽप्सरसः तासां च मुदः नाम ओषधीभिर्हीदं सर्वं मोदत इति

मुदः सोऽग्निर्गन्धर्वः नः अस्माकमिदं ब्रह्मेदं क्षत्रं पातु तस्मै स्वाहा वाट् । ताभ्यश्च ओषधीभ्यः स्वाहा ॥ ३८ ॥

संहितो विश्वसामा । यः सूर्यः संहितः एष ह्यहोरात्रे सन्दधातीति संहितः सूर्यः । विश्वसामा एष एव सर्वं साम तस्य मरीचयस्त्रसरेणवः आयुवो नाम आयुवाना इव हि मरीचयः प्लवन्त इत्यायुवः आमिश्रयन्त इत्यर्थः । तुल्यव्याख्यानमन्यत् ॥ ३९ ॥

सुषुम्णः सूर्यरश्मिः । सुषुम्णः सुयज्ञियः सूर्यरश्मिः सूर्यस्येव हि चन्द्रमसो रश्मयः । चन्द्रमा गन्धर्वः तस्य नक्षत्राणि अप्सरसः भेकुरयो नाम भाः हि नक्षत्राणि कुर्वन्ति इति भेकुरयो नक्षत्राणि । तुल्यमन्यत् ॥ ४० ॥

इषिरो विश्वव्यचाः । य इषिरः क्षिप्रः । इष गतौ । अस्य इषिरः विश्वव्यचः सर्वतोगमनः । वातो गन्धर्वस्तस्यापोऽप्सरसः ऊर्जोऽद्भ्यो ह्यूर्क् जायते तुल्यमन्यत् ॥ ४१ ॥

भुज्युः सुपर्णः । यज्ञो वै भुज्युः । यज्ञो हि सर्वाणि भूतानि भुनक्ति पालयति सुपर्णः शोभनपतनः । यज्ञो गन्धर्वः तस्य दक्षिणाः अप्सरसः स्तावा नाम । दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञः स्तूयते । यथा यो वै कश्चन दक्षिणां ददाति स्तूयत एव सः । तुल्यमन्यत् ॥ ४२ ॥

प्रजापतिर्विश्वकर्मा । प्रजापतिर्हि विश्वकर्मा स हीदं सर्वमकरोन्मनो गन्धर्वः तस्य ऋक्सामान्यप्सरसः एष्टयो नाम ऋक्सामानि वा एष्टयः ऋक्सामैर्ह्याशासत इति नः अस्तु इत्थं नः अस्त्विति तुल्यमन्यत् ॥ ४३ ॥

रथशिरसि जुहोति । स नो भुवनस्य प्राजापत्या प्रस्तारपङ्क्तिः । हे भुवनस्य पते प्रजापते यस्य ते तव उपरि आमुष्मिँल्लोके गृहा यस्य वा इह अस्मिन् लोके । स त्वं नः अस्माकं व्यवहितोऽयं सम्बन्धः । अस्मै ब्रह्मणेऽस्मै क्षत्राय महि महत् शर्म्म शरणं यच्छ देहि स्वाहा ॥ ४४ ॥

वातहोमान् जुहोति । समुद्रोऽसीति । त्रीणि यजूंषि त्रिलोकस्थानं वायुं लोकद्वारेण स्तुवन्ति यस्त्वं हे वायो समुद्रोऽसि समुन्दनोऽसि । नभस्वांश्च नभस् इति नक्षत्राण्युच्यन्ते तानि हि नितरां भान्ति तैः संयुक्तो नभस्वान् । आर्द्रदानुश्च एष ह्यार्द्रं ददाति वृष्ट्य-

वश्यायादिति । तं त्वां प्रार्थये शम्भूर्म्मयोभूश्च भूत्वा । शं भावयतीति शम्भूः मयं सुखं भावयतीति मयोभूः । अभि मा वाहि । माम् अभिवाहि स्वाहा । मारुतोऽसि । यस्त्वं मारुतोऽसि मरुतां पुरोवातप्रभृतीनां वातानां प्रकृतिभूतोऽसि । मरुतां शुक्रज्योतिःप्रभृतीनां गणोऽसि ततो ब्रवीमि शम्भूर्म्मयोभूश्च भूत्वा अभि मां वाहि स्वाहा । अवस्यूरसि । यस्त्वम् । अवस्यूरसि अवनं तर्पणं रक्षणं वा तं सीव्यतीति अवस्यूः । षिवु तन्तुसन्ताने इत्यस्य च्छ्वोः शूडनुनासिके चेति क्विपि ऊठि कृते संप्रसारणे च अवस्यूः । दुवस्वांश्च दुवश्च हविर्लक्षणमन्नमुच्यते हविर्लक्षणेनान्नेन युक्तश्च आर्द्रदानुश्च तं त्वां याचे शम्भूरित्यादि ॥ ४५ ॥

रुक्मतीर्जुहोति । यास्ते । द्वे व्याख्याते ॥ ४६ ॥ ४७ ॥

रुचं नः ॥ अनुष्टुबाग्नेयी । रुचं दीप्तिं नः अस्माकं ये ब्राह्मणाः तेषु धेहि रुचं राजसु नः सम्बन्धिषु कृधि कुरु रुचं विश्येषु वैश्येषु शूद्रेषु च नः सम्बन्धिषु कृधि मयि च धेहि रुचा दीप्त्या सह दीप्तिम् । अनुच्छिन्नधर्माणो यथा वयं दीप्त्या भवेम तथा कुर्वित्याशयः । यद्वा ब्राह्मणप्रभृतिषु या रुक् तामस्माकं धेहि सर्वथा । किं बहुनोक्तेन मय्येव धेहि रुचा सन्नतां रुचम् ॥ ४८ ॥

वारुण्या त्रिष्टुभा जुहोति तत्त्वा । तदाशास्त इति तदः श्रवणादिह यदः प्रयोगः यत्प्रयोजनं त्वा यामि याचामि ब्रह्मणा त्रयीलक्षणेन वन्दमानः स्तुवंस्तदेवायं यजमान आशास्ते हविर्भिरभ्युद्यतैः अतः अहेडमानः अक्रुध्यन् हे वरुण इह कर्मणि वर्तमानः अस्माकं प्रयोजनं यज्ञसमाप्तिलक्षणं बोधि बुध्यस्व बुध्वा च हे उरुशंस बहुशंस्तव्य मा न आयुः प्रमोषीः । मास्माकमायुरवखण्डय ॥ ४९ ॥

अथार्काश्वमेधयोः सन्ततीर्जुहोति । पञ्चभिर्यजुर्भिः । स्वर्णयज्ञसूर्याहर्देवचनः स्वः शब्दः । स्वरिव यो घर्म्म आदित्यस्तमग्नौ जुहोमि स्थापयामि स्वाहाकारेण स्वर्ण स्वरिव योऽर्कोऽग्निस्तमादित्ये स्थापयामि स्वर्ण स्वरिव यः शुक्र आदित्यस्तमादित्ये एव जुहोमि स्वर्ण स्वरिव ज्योतिरग्निस्तमग्नावेव जुहोमि । स्वर्ण स्वरिव यः सूर्यस्तमुत्तमं करोमि ॥ ५० ॥

अग्निं युनज्मि । तिसृभिराग्नेयीभिः द्वाभ्यां त्रिष्टुब्भ्यां तृतीयया पङ्क्त्या । यमाग्निं युनज्मि शवसा बलेन घृतेन दिव्यं दिवि भवं सुपर्णं सुपतनं वयसा बृहन्तं वयसा धूमेन बृहन्तं महान्तं धूमेन हि महानग्निर्भवति । अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद् वृष्टिरिति तेनाग्निना युक्ता वयं गमेम गच्छेम ब्रध्नस्यादित्यस्य विष्टपं विगत-सन्तापं सर्वद्वन्द्वोपलक्षणस्तापस्ततोऽप्यधिस्वर्गलोकं रुहाणा आ-रोहन्तः नाकमुत्तमं गमेमेत्यनुवर्तते । यत्र गता न अकम् । असुखं प्राप्नुवन्ति स नाको लोकः ॥ ५१ ॥

इमौ ते । यौ इमौ ते तव पक्षौ अजरौ जरारहितौ पतत्रिणौ उत्पतनशीलौ याभ्यां रक्षांसि अपहंसि हे अग्ने ताभ्यां पक्षाभ्यां पतेम उत्पतेम सुकृताम् उ लोकं सुकृतिनामेव स्थानं यत्रान्येऽपि ऋषयः जग्मुः गताः प्रथमजाः पुराणाः ॥ ५२ ॥

इन्दुर्दक्षः । यस्त्वम् । इन्दुः । इदि परमैश्वर्ये परमेश्वरः ह्लादनो वा दक्षः उत्साहवान् श्येनः शंशनीयगतिः ऋतावा यज्ञवान् उद-कवान् वा हिरण्यपक्षः शकुनः आकृत्या भुरण्युः भर्त्ता महान् प्र-भावतः । सधस्थे ब्रह्मणा सह अविभक्तस्थाने ध्रुवे आनिषत्तः स्थिरः आनिषण्णस्तस्मै नमः ते तुभ्यम् । अस्तु मा मां हिंसीः॥५३॥

युञ्जानं विमुञ्चति । द्वाभ्यामाग्नेयीभ्यां पुरोष्णिग्जगतीभ्याम् । दिवो मूर्द्धा । यस्त्वं दिवो मूर्द्धासि द्युलोकस्योत्तमाङ्गमसि । पृथि-व्या नाभिः नहनम् । ऊर्क् रसः सारः अपाम् । ओषधीनां च वि-श्वायुः सर्वायुः सर्वप्राणिनामायुर्जीवनं शर्म्म च शरणं सप्रथा-श्च सर्वतः पृथुः तिर्यगूर्ध्वमधश्चानवच्छिन्नविभवः तस्मै ते नमः पथे अग्निप्रमुखो हि देवयानः ॥ ५४ ॥

विश्वस्य मूर्धन् । यस्त्वं विश्वस्य सर्वस्य प्राणिजातस्य मूर्द्ध-न् मूर्द्धनि अधि उपरि तिष्ठसि अतः आश्रितः बुद्धीन्द्रियाणि सु-षुम्णां वा नाडीं यस्य च समुद्रे समुन्दने अन्तरिक्षे च हृदयम् । अप्सु चायुर्जीवनं तं त्वां याचे अपो दत्त अपो देहीति वचनव्य-त्ययः । एकोऽग्निरिह देवता । कथमिति चेत् । उदधिं भिन्त उद-कं धत्त धीयते वा इत्युदधिः । उदकस्य उदादेशः । मेघ उच्यते । अत्र भिन्धीति प्राप्ते भिन्दतेर्विदारणार्थस्य बहुवचनं छान्दसम् । एवं दिवः पर्जन्यात् अन्तरिक्षात् पृथिव्याः अन्यत्रापि यतो यतो

वृष्टिरुपलभ्यते ततस्तत उपादाय नः अस्मान् वृष्ट्या अवपालय हे अग्ने ॥ ५५ ॥

इष्टो यज्ञः । द्वे समिष्टयजुषी यज्ञाग्निदेवत्ये उष्णिग्गायत्र्यौ । अध्वर्युर्यजमानविषयामाशिषं करोति । यस्यास्य यजमानस्य इष्टः संपादितः यज्ञः भृगुभिः भृगुसगोत्रैर्ब्राह्मणैः आशिषां च दाता वसुप्रभृतिभिर्दैवताविशेषैः कृतः तस्यास्य यजमानस्य इष्टस्य अस्माकमभिप्रेतस्य अस्मान् प्रति प्रीतः स्निग्ध उच्यते । याज्ययाजकयोः स्नेहख्यापनपरं वाक्यमिदमुक्त्वाथेदानीं द्रविणमाह त्वमपि हे द्रविण इह यजमाने आगमेः आगमं कृथाः स्थानमिदं धनानामित्यभिप्रायः । यद्वा य इष्टो यज्ञो भृगुभिरार्षेयैर्ब्राह्मणैः । आशीर्दा वसुभिश्च विभक्तिव्यत्ययश्च । परोऽर्द्धर्चः । सोऽस्माकमिष्टः प्रीतश्च द्रविणमिह आगमयत्विति ॥ ५६ ॥

इष्टोऽग्निः इष्टः कृतयागः अग्निः आहुतः अभिहुतः पिपर्तु पूरयतु नः अस्मान् इष्टं हविः कृतयागं च हविः अस्मान्पूरयतु । स्वगेदं देवेभ्यो नमः स्वयङ्गामि च इदं समिष्टयजुर्लक्षणं देवेभ्यो नमः हाविर्भवतु ॥ ५७ ॥

यदाकूतात् । अष्टौ वैश्वकर्म्माणि जुहोति । विश्वकर्म्माग्निर्देवता तृतीया दैवी आद्या जगती तिस्रस्त्रिष्टुभः चतस्रोऽनुष्टुभः । यदाकूतात् यत्कर्म्म आकूतात् आकूतो नाम प्राङ्मनःप्रवृत्तेरात्मनो धर्म्मो मनःप्रवृत्तिहेतुः । समसुस्रोत् समस्रवत् । हृदो वा बुद्धेश्च मनसो वा मनसश्च समसुस्रोदिति वर्त्तते संभृतं चक्षुषो वा सम्भारैः सम्भृतं सत् यच्चक्षुरादिभ्य इन्द्रियेभ्यः समसुस्रोत् । प्रजापतेः तदनुप्रेत तत्प्रजापतिना कृतं कर्म्मानुगच्छत । सुकृतामुलोकं सुकृतां स्थानं गच्छत यत्र ऋषयो जग्मुः यत्रान्येऽपि ऋषयो गताः प्रथमजाः पुराणाः ॥ ५८ ॥

एतꣳसधस्थ । एतं यजमानं हे सधस्थ समानस्थान देवतानां स्वर्गे परि ते ददामि । तव परिदानं च रक्षणार्थम् । यं च आवहात् आनयेत् शेवधिं सुखनिधिमाहुतिपरिणामभूतं शेव इति सुखनाम । जातवेदा अग्निः तं च परिददामि । एवं स्वर्गाख्यं स्थानमुक्त्वाथेदानीं स्थानिनो देवानाह अन्वागन्ता कर्म्मपरिसमाप्त्यनन्तरमेव आगन्ता यज्ञपतिः वः युष्माकमत्र स्थितानां तं जानीत

परमे व्योम्नि स्थानेऽवस्थितं सन्तम् ॥ ५९ ॥

एतं जानाथ। देवश्वेत्या। एतं यजमानं जानीत परमे व्योम्नि परमे स्थानेऽवस्थितं सन्तं हे देवाः सधस्थाः समानस्थानाः किञ्च। विद रूपमस्य जानीत रूपम् अस्य यजमानस्य प्रत्यभिज्ञानाय ततो विदितरूपः यदागच्छत् आगच्छेत्पथिभिर्देवयानैः पूजार्थं वा बहुवचनम्। उपभोगस्थानभेदाद्वा। अथ इष्टापूर्त्ते कृणवाथ कुरुथ आविः प्रकाशफले अस्मै ॥ ६० ॥

उद्बुध्यस्वाग्ने। येन वहसीति व्याख्याते ॥ ६१ ॥ ६२ ॥

प्रस्तरेण। प्रस्तरेण च परिधिना च स्रुचा च वेद्या च बर्हिषा च ऋत्वा ऋगादिभिर्म्मन्त्रैश्च इमं यज्ञं नः अस्मत्सम्बन्धिनं नय हे अग्ने स्वर्गलोके देवेषु गन्तवे देवान्प्रति गमनाय। यज्ञे हि गते यजमानो गत एव स हि तस्य शरीरमित्यभिप्रायः ॥ ६३ ॥

यद्दत्तम्। दत्तं भार्याजामातृपुत्रप्रभृतिभ्यः। यच्च परादानं दीनान्धकृपणेभ्यो दयया। यत्पूर्त्तं स्मृतिविहितं ब्राह्मणभोजनादि याश्च दक्षिणाः यज्ञान्तर्गताः तत्सर्वमग्निर्वैश्वकर्म्मणः विश्वकर्म्मैव वैश्वकर्म्मणः। स्वार्थे तद्धितः। स्वर्गे लोके देवेषु मध्ये नः अस्मदर्थम्। अस्माकं वा दधत दधातु फलोपभोगार्थम् ॥ ६४ ॥

यत्र धाराः। यत्र यस्मिन्देशे धाराः अनपेताः अनुपक्षीणाः उपभुज्यमानाः अपि क्षयं न यान्ति। मधोर्म्मधुनः घृतस्य च। याश्चान्याः सोमादीनां तत्र तत्राग्निर्वैश्वकर्म्मणः स्वः स्वर्गलोके देवेषु मध्ये नः अस्मान्दधातु ॥ ६५ ॥

अविनियुक्तत्वात् अग्निप्रकरणाच्च यजमानदर्शनमेतत्। अग्निरस्मि। त्रिष्टुप् आग्नेयी। अग्निरहमस्मि जन्मना उत्पत्त्यैव जातवेदाः। अथ ह वै रेतः सिक्तं प्राणोऽन्वरोहति। तद्विन्दते तद्यज्जातं जातं विन्दते तस्माज्जातवेदाः। इत्येतदभिप्रायम्। यतश्चाहमग्निरस्मि अतो घृतं मम चक्षुः घृतहोमिनमहं पश्यामीत्येतदभिप्रायम्। अमृतं च मम आसन्नि आस्ये मुखे यो हि मम मुखे हविर्जुहोति तमहममृतं करोमि इति। किञ्च अर्कः अर्च्चनीयः यज्ञः अस्मि नाम्ना त्रिधातुः ऋग्यजुःसामभिः रजसो विमानः उदकस्य निर्म्माता। किञ्च अजस्रः अनुपक्षीणः घर्म्मः दीप्तः उदकलक्षणो वा आदित्यः अहमस्मि नाम्ना। किञ्च। हविरप्यहमस्मि नामशब्दस्य

कृतविभक्तिव्यत्ययस्य अस्मिशब्दस्य च सर्वत्र सम्बन्धः । एवमन्यत्रैतं मन्त्रार्थः ॥ ६६ ॥

ऋचो नामास्मि । यजुर्दर्शनार्थीयं ऋग्वेदनामास्मि । चित्यमग्निमुपतिष्ठते ये अग्नयः आग्नेयी अनुष्टुप् । ये अग्नयः पाञ्चजन्याः पञ्चचितिका इति श्रुतिः । अस्यां पृथिव्याम् । अधि उपर्यवस्थिताः तेषामग्नीनां त्वमुत्कृष्टतमोऽसि यतः अतः प्रार्थ्यसेऽस्माभिः । प्र नो जीवातवे सुव । प्रसुव अस्मान् जीवातवे चिरजीवनाय ॥ ६७ ॥

चित्यमग्निमुपतिष्ठते वार्त्रहत्याय । इन्द्र एतत्सप्तर्चमपश्यदिति श्रुतिः । प्रथमे गायत्रीत्रिष्टुभौ इन्द्रो वृत्रहा देवता । वार्त्रहत्याय । वृत्रः येन शवसा बलेन हन्यते तद्वार्त्रहत्यं शवः तस्मै वार्त्रहत्याय शवसे पृतनाषाह्याय पृतनाः संग्रामाः येन शवसा अभिभूयन्ते तत्पृतनासाहं बलं तस्मै पृतनासाहाय बलाय । सहतिरभिभवार्थः । हे इन्द्र त्वा आवर्त्तयामसि आवर्त्तयामः ॥ ६८ ॥

सहदानुम् । सह इति बलनाम । बलस्य दातारम् । युध्यस्वानेन सह त्वं संपूर्णबलोऽयं दुर्बल इत्येवं यः शत्रूणां बलं ददाति स सहदानुः तं सहदानुम् । यद्वा । सह एकीभूय यो दुर्मन्त्रान् ददाति स सहदानुः तं सहदानुम् । हे पुरुहूत बहुभिराहूत क्षियन्तं निवसन्तम् । इहैव अहस्तं कृत्वा युद्धेन निर्जित्य सम्पिणक् सम्पिण्ढि कुणारुं क्वणन्तं दुर्वचोऽभिधायिनम् । एवं तावदेनं कुरु । अथ पुनर्योऽयमपरो वृत्रः तमभिभूय वृत्रं वर्धमानं पियारुं पियतिर्हिंसाकर्म्मा देवानां हिंसितारम् । अपादं कृत्वा गमनासमर्थं कृत्वा तवसा बलेन जघन्थ जहि ॥ ६९ ॥

वि न इन्द्र । मृगो न भीम । इति वै मृद्धयौ । द्वे अनुष्टुभौ । पूर्वा व्याख्याता ॥ ७० ॥

मृगो न मृग इव व्याघ्रो वा सिंहो वा भीमो भीषणः कुचरः कुत्सितचारी हिंस्रः प्राणिवधजीवनः गिरिष्ठाः पर्वताश्रयः । स यथा कांश्चिदेत्य प्राणिविशेषान् हन्ति तैरनाभिभूयमानः एवं त्वं परावतः दूराद् दूरतरात्प्रदेशादाहूयमानः आजगन्थ आगच्छ आगत्य च शृणु यत्प्रार्थ्यसे अस्माभिः । सृकं शरणं पविं वज्रं संशाय । शो तनूकरणे । तीक्ष्णीकृत्य पविं शत्रुकार्येषु गन्तारं हे इन्द्र तिग्मं तेजनम् । उत्साहवन्तं ततो विशत्रून् ताढि विताढि ताडय

ताडयतेर्हिंसाकर्मण एतद्रूपम् । विमृधो नुदस्व विनुदस्व मृधः सङ्ग्रामानपुनरागमनाय ॥ ७१ ॥

वैश्वानरो नः । वैश्वानरदेवत्यौ गायत्रीत्रिष्टुभौ । वैश्वानरोऽग्निः नः अस्माकम् । ऊतये अवनाय तर्पणाय व्याप्रयातु आगच्छतु परावतः दूरात् किञ्च । नः सुष्टुतीरुप । अस्माकं च शोभनाः स्तुतीः उपश्रोतुम् । आप्रयात्विति ॥ ७२ ॥

पृष्टो दिवि । योऽग्निर्वैश्वानरः पृष्टः कोऽयमिति दिवि आदित्यात्मना व्यवस्थितो मुमुक्षुभिः । तत्र ह्येवं श्रूयते । यमेतदादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिः तद्ब्रह्मेति । यश्च वैश्वानरोऽग्निर्विद्युदात्मना प्रावृषि स्थितः पृथिव्याम् अन्तरिक्षलोके । पृथिवीत्यन्तरिक्षनामसु पठितम् । पृष्ट उदकार्थिभिः कोऽयं नाम द्विपदचतुष्पदां जीवनहेतुः । पृष्टो यश्चाग्निर्वैश्वानरोऽस्मिँल्लोके व्यवस्थितः पृष्टोऽग्निहोत्रिभिः । म्लेच्छपर्यन्तैः कोऽयं तापपाकप्रकाशैरुपकृत्य विश्वा ओषधीः आविवेशाविष्टः । यश्च वैश्वानरोऽग्निः सहसा बलेन मथ्यमानोऽध्वर्युणा को न्वयं निर्मथ्यत इति पृष्टो दिदृक्षुभिः । स नः सोऽस्मान् दिवा अहनि पातु रक्षतु स च नक्तं रात्रौ पातु रिषः विनाशात् रिषतिर्हिंसाकर्म्मा । दिवा नक्तमिति सन्ततार्थं वचनम् ॥ ७३ ॥

अश्याम तम् । द्वे आग्नेय्यौ त्रिष्टुभौ कामवत्यौ । अश्याम प्राप्नुयाम तं कामं यत्कामा एतत् कुर्म्मः । हे अग्ने तव ऊती ऊत्या अवनेन अश्याम च रयिं धनम् । हे रयिवः धनवन् सुवीरं कल्याणपुत्रम् अश्याम च वाजमन्नम् अभिवाजयन्तः । वाजयतिरर्च्चतिकर्म्मा । अभिपूजयन्तोऽग्निम् अन्यानपि पूजितव्यान् । अश्याम च द्युम्नं यशः हे अजर जराहिताग्ने अजरं द्युम्नविशेषणमेतत् । अनुच्छित्तिधर्मन् ते तव प्रसादात् ॥ ७४ ॥

वयन्ते । हिशब्दो यस्मादर्थे । यस्माद्वयं ते तुभ्यम् अद्य ररिम । रा दाने । दद्म कामं पुरस्कृत्य हविः कामप्राप्त्यर्थं वा हविः कामशब्देनोच्यते । उत्तानहस्ताः त्यक्तकृपणभावाः अबद्धमुष्टिकाः असंवृताङ्गुलय इति यावत् । नमसा नमस्कारेण प्रणिपातेन उपनिषद्य उपसंगम्य निषदनं कृत्वा अतः यजिष्ठेन मनसा यष्टृतमेन मनसा यक्षि देवान् यज । अस्रेधता अस्रवता अनन्यगतेन देवता-

याथात्म्यचिन्तनसंतानैकरसेन मन्मना मननेन विप्रः सन् मेधावी सन् हे अग्ने ॥ ७५ ॥

धामच्छत् । वैश्वदेव्यनुष्टुप् । धामच्छत् धामशब्दः स्थानवचनः स्थानानि न्यूनानि पूरयति अतिरिक्तानि समीकरोति यः स धामच्छत् । देवशब्दः सर्वत्र संबध्यते योऽग्निर्देवो धामच्छत् यश्चेन्द्रः यश्च ब्रह्मा यश्च बृहस्पतिरेते सचेतसः समानचेतसः चेतःशब्दः प्रज्ञावचनः । विश्वे च देवाः यज्ञं प्रावन्तु अन्यूनातिरिक्तं कुर्वन्तु नः अस्माकं शुभे स्विष्टे च स्थापयन्तु ॥ ७६ ॥

त्वं यविष्ठेत्युक्तम् । न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वेत्युपक्रम्य भूयोविद्यः प्रशस्यो भवतीति चाभिधायाह तस्माद्यदेव किञ्चानूचानो भवत्यार्षं तद् भवतीति श्रुतोऽयमार्षेयो ग्रन्थ इति विद्वद्भिरादरणीयः ॥ ७७ ॥

श्री -उव्वटकृतौ मन्त्रभाष्येऽष्टादशोऽध्यायः ॥ १८ ॥

## अथैकोनविंशोऽध्यायः ॥ १९ ॥

अथ सौत्रामणी त्रिभिरध्यायैः प्रक्रियते । अग्न्यङ्गत्वात्सौत्रामण्या अनन्तरमुप्रक्रमः । तत्र प्रजापतिर्यज्ञमसृजतेत्युपक्रम्य स एतं यज्ञक्रतुमपश्यत् सौत्रामणीमिति सौत्रामण्याः प्रजापतिर्ऋषिः । अथापरमिन्द्रभैषज्यार्थमश्विनौ सरस्वती च सौत्रामणीं ददृशुः तत्र सुरा संधीयते । स्वाद्वीं त्वा । सुरादेवत्यानुष्टुप् । स्वाद्वीं स्वादुशब्दो मिष्टवचनः । स्वादुरसां त्वा त्वां स्वादुना मिष्टेन तीव्राम् । तीव्रशब्दः पटुवचनः पट्वीं शीघ्रमदजनिकां तीव्रेण पटुरसेन अमृताम् अमृतेन मधुमतीं मधुरस्वादोपेतां मधुमता मधुरस्वादोपेतेन चतुर्णां वाक्यानां शेष उच्यते । सृजामि सꣳसोमेन । ते प्राग्धातोश्छन्दसि परेऽपीति उपसर्गसञ्ज्ञः संसृजामि स्वाद्वीं त्वां सुरां स्वादुना सोमेनेत्येवमुत्तरत्रापि योज्यम् । यजूंष्युत्तराणि सोमोऽसि यतस्त्वं मन्त्रेणोक्तः सोमः सोमसंसर्गादतस्त्वां ब्रवीमि सोमोऽसि अश्विभ्यामर्थाय पच्यस्व । पाको विपरिणामः । सरस्वत्यै पच्यस्व इन्द्राय सुत्राम्णे पच्यस्व ॥ १ ॥

सुरापयसोर्नानाभूते अतो ब्रवीमि मा संसृक्षाथां मा संसर्गं कुरुतं परमे व्योमन् परमे स्थाने आहवनीयाख्ये । दक्षिणे ह्यग्नौ सुरा हूयते । किञ्च । यतश्च सुरा त्वमसि शुष्मिणी बलवती अशान्ता तस्मात्सुरां पीत्वा रौद्रमना इति सोमश्चैष प्रख्यातगुणः शान्तः अतो ब्रवीमि सर्वथा मा हिंसीः सोमं स्वां योनिं स्थानम् । आविशन्ती सती माशब्दो ऽनुदात्तोऽनर्थकः ॥ ७ ॥

उपयामगृहीतोऽसि । आश्विनं तेजः साक्षात् त्वमिति शेषः । एवं सर्वत्र । सारस्वतं वीर्यम् ऐन्द्रं बलम् । सादयति । एष ते योनिः मोदाय त्वा त्वां सादयामि आनन्दाय त्वां महसे त्वां महत्त्वाय । मह पूजायां च ॥ ८ ॥

पयोग्रहान् श्रीणाति । तेजोऽसि । पयोदेवत्यानि । तेजोऽसि यतः अतस्त्वां ब्रवीमि तेजो मयि धेहि । यो हि यदात्मकः स तत्र नियोगमर्हति । वीर्यमसि वीर्यं मयि धेहि बलमसि बलं मयि धेहि । तुल्यव्याख्यानानि । सुराग्रहान् श्रीणाति । ओजोऽस्योजो मयि धेहि मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि । ओजः प्रज्वलनं मानसं मन्युः कोपः सहो बलम् ॥ ९ ॥

श्येनपत्राभ्यां पावयतो यजमानम् । या व्याघ्रम् । अनुष्टुप् । विषूचिका स्तुतिः विषु निपातो नानावचनः । अञ्चतिर्गत्यर्थः । अन्तर्व्यापत्तिर्नानाञ्चना विषूचिकेत्युच्यते व्याधिविशेषः । या विषूचिका व्याघ्रं वृकं च उभावपि रक्षति न हि तयोरन्नपरिणामजनितान्तर्व्यापत्तिः । किमेतावेव यौ रक्षति नेत्याह श्येनं च पत्रिणं पतनशीलम् । स हि बध्रजीवनः । प्राणिनो ग्रहीतुमवश्यं पतति । सिंहं च । सा इमं यजमानं पात्वंहसः पापात् पापसमूहव्यापत्तेः । व्याधीनामधिष्ठात्र्यो देवताः सन्ति ताः प्रार्थ्यन्ते ॥ १० ॥

अग्निं प्रेक्षयति । यदापिपेषेति । आग्नेयी बृहती । पिपेषेति लिट उत्तमपुरुषैकवचनम् । यदहमापिपेष आपिष्टवान् पद्भ्याम् । मातरं पुत्रः प्रहृष्टः सन् धयन् पिबन् स्तनं तदेतत्तव समक्षं हे अग्ने अनृणः ऋणत्रयरहितः कृतकृत्यो भवामि यत एवमतो ब्रवीमि उत्क्षिप्य भुजम् अहतौ अहिंसितौ पितरौ । पितामात्रेत्येकशेषः । मया यो हि प्रत्युपकर्त्तुमसमर्थः तेनैव मातापितरौ हिंसितौ भवत इत्यभिप्रायः ।

पयोग्रहसम्मर्शनम् । संपृच स्थ । पृची संपर्के । संपृञ्चन्तीति संपृचः स्थ स्वया क्रियया व्यपदिश्यन्ते ये यूयं सम्पृचः स्थ तानहं ब्रवीमि सम्मा भद्रेण पृङ्क्त संसृजत मां भद्रेण भन्दनीयेन कल्याणेन । सुराग्रहान्सम्मृशन्ति । विपृचस्थ । ये यूयं विपृचः वियोगकारिणः स्थ तानहं ब्रवीमि विमा पाप्मना पृङ्क्त । पाप्मना विपृङ्क्त विगतसंसर्गं पाप्मना मां कुरुत ॥ ११ ॥

देवा यज्ञम् । विंशतिरनुष्टुभः । सोमसंपत्सौत्रामण्यां दर्शनार्था । निदानवतां मन्त्राणां पूर्वं निदानं वक्तव्यमर्थस्य सुखबोधाय । इन्द्रस्य किलानूपहूतसोमपानाद्विश्वस्तस्य नमुचिरसुरोऽपिबत् समस्तं वीर्यं तत्र देवैरिन्द्रस्य भैषज्यं कृतम् । तत्राश्विनौ भिषजौ सरस्वती च । ओषधं सौत्रामणी । यदा देवा यज्ञमतन्वत विस्तारितवन्तः भेषजं भेषजस्य कर्त्तारं सौत्रामण्याख्यम् । अथ तदा भिषजा भिषजौ वैद्यौ अश्विना अश्विनौ । इह चतुर्थः पादः सम्बध्यते । द्विवचनान्तत्वात् । इन्द्राय इन्द्रियाणि वीर्याणि दधतः धर्त्तां वाचा त्रयीलक्षणया सरस्वती तदा भिषक् अभूत् ॥ १२ ॥

दीक्षायै रूपम् । दीक्षाया रूपं शष्पाणि नवप्ररूढा व्रीहयः प्रापणीयस्य तोक्मानि नवप्ररूढा यवाः तोक्मानि क्रयस्य रूपं सोमस्य सोमक्रयस्येति समासे प्राप्ते पदयोर्व्यत्ययो रूपशब्देन च व्यवधानं छान्दसम् । सोमक्रयरूपं लाजाः सोमांशवश्च लाजा एव मधु मधुरस्वादाः ॥ १३ ॥

आतिथ्यरूपं मासरम् । व्रीहिश्यामाकौदनाचामचूर्णसंसर्गो मासरं महावीरस्य नग्नहुः । किण्वं नग्नहु । सौरिकाणां प्रसिद्धः रूपमुपसदामेतत्क्रियते यत्तिस्रो रात्रीः सुरा अभिषुता तिष्ठति ॥१४॥

सोमस्य रूपम् । सोमस्य क्रीतस्यैतद्रूपं यत्परिस्रुत् परिषिच्यते पयसा केन पयसा यदश्विभ्यां दुग्धं भेषजं चेन्द्राय यच्च ऐन्द्रं पयः दुग्धम इन्द्रायैव भेषजं यच्च सरस्वत्या दुग्धं पयः इन्द्रायैव भेषजम् ॥ १५ ॥

आसन्दीरूपम् । यजमानाभिषेकासन्दीरूपम् । राजासन्द्यै सोमासन्द्याः वेद्यै कुम्भी सुराधानी सौमिकया वेद्याः रूपं वेद्योः अन्तरः मध्यम् । उत्तरवेद्या रूपं कारोतरः सुरापवनं भिषगिन्द्रस्य यजमानस्य वा ॥ १६ ॥

वेद्या वेदिः। अनया वेद्या वेदिः सौमिकी समाप्यते बर्हिषा च बर्हिः समाप्यते। इन्द्रियं च वीर्यं यूपेन च यूप आप्यते। प्रणीतश्चाग्निः अग्निना आप्यते ॥ १७ ॥

हविर्द्धानं यदश्विना। यदाश्विनौ देवता तेन हविर्द्धानमाप्यते। यत् सरस्वती देवता तेनाग्नीध्रमाप्यते। यदिन्द्राय हविः तेन ऐन्द्रसदः कृतम् आप्यते पत्नीशालं च गार्हपत्यस्य आप्यते ॥ १८ ॥

प्रैषेभिः। प्रैषान्। प्रैषैः प्रैषानाप्नोति आप्रीभिः आप्रीः। सोमयज्ञस्य आप्रियः प्रयाजयाज्याः। प्रयाजेभिरनुयाजान् प्रयाजैः प्रयाजानाप्नोति। आनुयाजैरनुयाजान्। वषट्कारेभिराहुतीः। वषट्कारैर्वषट्कारानाप्नोति। प्रयाजेभिरित्यादिचतुर्णां वाक्यानामर्धलोपः ॥ १९ ॥

पशुभिः पशून्। पशुभिः पशूनाप्नोति। पुरोडाशैः हवींषि आप्नोति। छन्दोभिः छन्दांसि। सामिधेनीभिः सामिधेनीः याज्याभिर्याज्याः वषट्कारैर्वषट्कारानाप्नोति ॥ २० ॥

धानाः करम्भः। उदकमन्थः करम्भः शक्तवः परीवापः हविषां श्रोत्रं रूपम्। आमिक्षा पयस्या वाजिनं मधु। मधुशब्दो वाजिनस्य विशेषणमानन्तर्यात्सोमसंस्तवश्च ॥ २१ ॥

धानानां रूपम्। अधस्तनमन्त्रोक्तानां सोमहविषां सोमस्य च संपत्तिं सौत्रामणीद्रव्येष्वाह। धानानां रूपं कुवलं कोमलबदरम्। परीवापस्य गोधूमाः। सक्तूनां रूपं बदरम् उपवाकाः करम्भस्य रूपम् उपवाकाः यवकाः ॥ २२ ॥

पयसो रूपम्। पयसो रूपं यत् यवाः। दध्नः रूपं कर्कन्धूनि। कर्कन्धुर्बदरविशेषः। सोमस्य रूपं वाजिनम् सौम्यस्य च रूपमामिक्षा पयस्या ॥ २३ ॥

आश्रावय। इदानीं शस्त्रसम्पत्तिः क्रियते। ओ श्रा३वय इति शब्दप्रदर्शनार्थः। स्तोत्रियाः। प्रत्याश्रावः। अस्तु श्रौ३षट्। अनुरूपः। यजः इति। धाय्यारूपम् निष्केवल्ये स्तोत्रियानुरूपयोरनन्तरम् धाय्या शस्यते। प्रगाथा ये यजामहाः। ये३यजामहे इति प्रगाथाः ॥२४॥

अर्द्ध ऋचः उक्थानां रूपमाप्नोति पदैः आप्नोति निविदः। न्यूङ्खा उच्यन्ते। प्रणवैः ओङ्कारैः शस्त्राणां रूपं पयसा सोम आप्यते ॥२५॥

अश्विभ्यां प्रातः सवनमाप्तम् इन्द्रेण ऐन्द्रं माध्यन्दिनं सवनमा-

नम्। वैश्वदेवं तृतीयं सवनं सरस्वत्या आप्तम् ॥ २६ ॥

वायव्यैः। सर्वेषां सोमपात्राणां वायव्यानीति संज्ञा । वायव्यैः पात्रैः वायव्यानि पात्राण्याप्नोति। सतेन द्रोणकलशम्। वैतसपात्रं सत इत्युच्यते । कुम्भीभ्यां सुराधानीभ्यां शतच्छिद्राभ्याम् अम्भृणौ। अम्भृणौ पूतभृदाधवनीयावुच्येते । सुते अभिषुते सोमे यौ भवतः तौ आप्नोति। स्थालीभिः स्थाली आप्नोति । उभयत्र हि स्थाल्यो भवन्ति ॥ २७ ॥

यजुर्भिराप्यन्ते। यजुर्भिः यजूंषि आप्यन्ते ग्रहा ग्रहैराप्यन्ते। स्तोमाश्च विष्टुतीश्च छन्दोभिः उक्थशस्त्राणि साम्नावभृथ आप्यते। साम्ना साम आप्यते अवभृथेनावभृथः ॥ २८ ॥

इडाभिर्भक्षान्। इडाभिः इडामाप्नोति भक्षैः भक्षानाप्नोति सूक्तवाकेन सूक्तवाकम्। आशीर्भिराशिषः शंयुना शंयुमाप्नोति पत्नीसंयाजैः पत्नीसंयाजानाप्नोति समिष्टयजुषा समिष्टयजुराप्नोति संस्थया संस्थामाप्नोति ॥ २९ ॥

व्रतेन। हुतोच्छिष्टभक्षश्चतूरात्रमाग्निहोत्रं जुहोति । अनेन व्रतेन दीक्षामाप्नोति। दीक्षया दक्षिणामाप्नोति। दक्षिणा दक्षिणयेति विभक्तिव्यत्ययः। श्रद्धामाप्नोति । श्रदिति सत्यनामसु पठितम्। तदस्यां धीयत आस्तिक्येन एवमेतद्धि श्रद्धा सा पुण्यकृतां मनोविशेषः। श्रद्धया सत्यमाप्यते सत्यं ज्ञानमनन्तं ब्रह्म त्रयीलक्षणं वा ॥ ३० ॥

एतावत्। एतत्परिणामरूपसोमयज्ञस्य। यद् देवैर्ब्रह्मणा च प्रजापतिना कृतं दृष्टम्। दर्शनकरणयोः को विशेषः। इति चेत्। स्वप्नप्रतिबुद्धन्यायेन दर्शनं करणं तु बुद्धिपूर्वकम्। तदेतत्सर्वमाप्नोति। यज्ञे सौत्रामणी। पूर्वसवर्णदीर्घ आदेशश्छान्दसः। सौत्रामण्याख्ये सुते सुरासोमाभिषुते ॥ ३१ ॥

पयोग्रहान् जुहोति। सुरावन्तम्। त्रिष्टुप्। अश्विसरस्वतीन्द्र देवत्या। यत्र सुरावन्तं बर्हिषदं सुरावान् वा एष बर्हिषत् यज्ञो यत्सौत्रामणी सुवीरं कल्याणवीरं यज्ञं हिन्वन्ति वर्द्धयन्ति प्रापयन्ति वा महिषा ऋत्विजः नमोभिर्नमस्कारैः अन्नैर्वा दधानाः धारयन्तः सोमं दिवि देवतासु तत्र मदेम वयम्। इन्द्रं यजमानाः स्वर्काः शोभनार्चनाः कल्याणमन्त्रा वा ॥ ३२ ॥

सुराग्रहान् जुहोति। यस्ते रसः। उक्तदेवत्योक्तछन्दस्काध-

स्तनया । हे । सुरे यस्तव रसः संभृतः एकीकृतः ओषधीषु वर्त्तमानः सोमस्य च यः शुष्मः यद् बलं सुरया सह अभिषुतस्य तेनोभयेन रसेन बलेन जिन्व प्रीणीहि । यजमानं मदेन सुरोत्थेन सरस्वतीं च अश्विनौ च इन्द्रं च अग्निं च ॥ ३३ ॥

पयोग्रहान् भक्षयन्ति द्वाभ्यां त्रिष्टुब्भ्याम् । ऋत्विग्यजमानाः । यमश्विना नमुचिरसुर इन्द्रस्येन्द्रियं वीर्यमपिबत् तस्य शिरसि छिन्ने लोहितमिश्रः सोम उत्तिष्ठत् तं पीतवन्तः तदभिवादिनी एषा ऋक् । यम् । अश्विना अश्विनौ नमुचेरासुरात् असुरपुत्रादधिसकाशात् आहृत्य सरस्वती असुनोत् अभ्यषुणोत् इन्द्रियाय वीर्याय इन्द्रभैषज्याय वा इत्थं तं शुक्रम् । असंसृष्टलोहितं मधुमन्तं रसवन्तम् । इन्दुम् । इदि परमैश्वर्ये परमेश्वरं सोमं राजानम् । इह भक्षयामि ॥ ३४ ॥

यजमानो भक्षयति । यदत्र अस्यां सुरायां रिप्तं लिप्तं लग्नं रसिनः रसवतः सुतस्याभिषुतस्य सोमस्य यच्च इन्द्रः आपिबत् इन्द्रदेवत्यो हि सोमः । शचीभिः कर्म्मभिः अहं तत् । यत्तदिति अविज्ञाते नपुंसकलिङ्गता । अस्य मनसा शिवेन सोमराजानमिति षष्ठ्या विपरिणामो वाक्यसम्बन्धात् । सोमस्य राज्ञः इह भक्षं भक्षयामि॥३५॥

अङ्गारेषु बर्हिष्परिधिषु सुरां जुहोति । पितृभ्यः । सप्त पित्र्याणि यजूंष्यस्यां कण्डिकायां पितृभ्यः स्वधायिभ्यः स्वधां प्रति गमनशीलाः स्वधायिनः । सुप्यजातौ णिनिस्ताच्छील्ये । स्वधा अन्नमस्तु बहुवचनं पितृव्याद्यपेक्षं पूजार्थं वा । पितामहेभ्यः प्रपितामहेभ्यः उक्तोदर्कं प्रक्षालनेनोपासिञ्चति । अक्षन् अत्तवन्तः घस्तवन्तः भक्षितवन्तः पितरः अमीमदन्त मादिताः पितरः अतीतृपन्त तर्पिताः पितरः जपति पितरः । हे पितरः शुन्धध्वं पाणिप्रक्षालनं कुरुध्वम् ॥ ३६ ॥

नवर्चं वाचयति । पावमानं पुनन्तु मा । द्वि पित्र्ये अनुष्टुभौ । पुनन्तु मां पितरः सोम्यासः सोमसम्पादिनः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः पावनं च पापापनोदः शुद्धिः फलग्रहणयोग्यता । केन पुनन्तु पवित्रेण कथम्भूतेन शतायुषा येन पूतः शतायुर्भवति तत्पवित्रं तत्साधनत्वाच्छतायुरेव पुनन्तु मां पितामहाः पुनन्तु प्रपितामहाः पवित्रेण शतायुषा आदरार्थोऽभ्यासः विशेषार्थो वा ।

तथा मां पितृपितामहप्रपितामहाः पुनन्तु यथा विश्वं सर्वमायुः अहं व्यश्नवै व्यश्नुयां प्राप्नुयाम् ॥ ३७ ॥

अग्न आयूंषि । आग्नेयी गायत्री हे अग्ने यतस्त्वम् । आयूंषि पवसे आयुः प्रापकाणि कर्म्माणि चेष्टयसे स्वभावत एवातस्त्वां प्रार्थये आसुव अभ्यनुजानीहि ऊर्जं दध्याद्युपसेचनम् । इषं च व्रीह्यादि नः अस्मकम् । एतद्धि जीवनहेत्वित्यभिप्रायः । किञ्च आरे दूरे एवावस्थितं सन्तं बाधस्व तैस्तैरुपायैः । दुच्छुनां दुष्टं श्वानं शुना चात्र दुर्जनप्रभृतयो लक्ष्यन्ते तैः रहितो हि पुरुषः परमायुः प्राप्नोति ॥ ३८ ॥

पुनन्तु मा । लिङ्गोक्तदेवतानुष्टुप् । पुनन्तु मा देवजनाः देवानां जनाः देवजनाः देवानुगामिनः पुनन्तु मनसा संयुक्ता धियः बुद्धयः कर्म्माणि वा पुनन्तु विश्वानि भूतानि । त्वमपि हे जातवेदः पुनीहि माम् ॥ ३९ ॥

पवित्रेण । आग्नेयी गायत्री । पवित्रेण पुनीहि मां शुक्रेण शोचिष्मता शुल्केन अशवलेन हे देव दीद्यन् दीप्यमान हे अग्ने क्रत्वा कर्मणा च यथा च क्रतून् अनु तांस्तान् अस्माकं यज्ञक्रतून् ॥ ४० ॥

यत्ते । आग्नेयी ब्राह्मस्तृतीयः पादः । गायत्री । यत्ते तव पवित्रम् अर्चिषि हे अग्ने विततं प्रसारितम् । अन्तरा मध्ये ब्रह्म त्रयीलक्षणं परं वातेन पवित्रेण अभ्यनुज्ञातेन पुनातु मा माम् ॥ ४१ ॥

पवमानः । सोमदेवत्या गायत्री तृतीयः पादो वायव्यः । स पवमानः सोमः अद्य अस्मिन् द्यवि नः अस्मान् पवित्रेण विचर्षणिः द्रष्टा कृताकृतावेक्षकः पुनातु । यश्च स्वभावतः पोता स पुनातु मां वायुः ॥ ४२ ॥

उभाभ्याम् । गायत्री सावित्री । हे देव सवितः उभाभ्यां पवित्रेण सवेन चाभ्यनुज्ञया च मां पुनीहि विश्वतः सर्वतः ४३ ॥

वैश्वदेवी त्रिष्टुप् । अज्ञाताभिधेया प्रवाह्लिकेव । तत्र काञ्चिद् देवतामङ्गीकृत्य प्रचक्ष्महे शता तृण्णा कुम्भी दक्षिणस्याग्नेः उपरिष्टात् क्षरति सा वाभिधेया । सौत्रामणी वा वाग्वा उखा वेत्यादि विश्वेभ्यो देवेभ्यः आगता हिता वा वैश्वदेवी सुराकुम्भीं पुनती पावनं कुर्वाणा देवी दानादिगुणयुक्ता आ अगात् । आगता यस्याम् । इमा बह्वयः धाराः तन्वः पुरः वीतपृष्ठाः कामितशरीराः । काम्यन्ते

हि सुराधाराः तया मदन्तः तया सह मोदमानाः सधमादेषु । सधमादस्थयोः छन्दसीति सहस्य सधमादेशः । सहमदनेषु वयं स्याम पतयो रयीणां धनानाम् ॥ ४४ ॥

दक्षिणेऽग्नौ यजमानो जुहोति । ये समानाः । अनुष्टुप् । पैत्री । ये समाना जात्यादिभिः समनसः समानमनस्काः पितरः यमराज्ये यमलोके यमस्य हि लोके राज्ये तेषां पितॄणां लोकः आयतनं स्वधा नमः । स्वधाशब्दोपलक्षितमन्नमस्तु । यद्वा । तेषां पितॄणां लोकः आयतनं स्वधाकारोपलक्षितमन्नमस्तु । नमस्कारोपलक्षिता च स्तुतिर्भवतु । यज्ञस्तु देवेषु कल्पतां समर्थो भवतु ॥ ४५ ॥

उत्तरेऽग्नावाज्याहुतिं जुहोति । ये समानाः अनुष्टुप् । यजमानाशीः । ये समानाः समनसः जीवनवन्तः जीवेषु जीवनवत्सु मध्ये मामकाः मदीयाः तेषां सम्बन्धिनी श्रीः मयि क्लृप्ता भवतु तान्परित्यज्य मामाश्रयत्वित्यर्थः । पापात्मानो हि गोत्रिणो भवन्ति कुत्र कियन्तं च कालमित्यत आह अस्मिंल्लोके शतं समाः । समाशब्दः संवत्सरवचनः ॥ ४६ ॥

पयः समन्वारब्धेषु जुहोति । द्वे सृती त्रिष्टुप् । पन्थानौ ब्रवीति । ये एते शुक्लकृष्णे द्वे सृती । यावेतौ देवयानपितृयानौ अहमशृणवं पितॄणां श्रुतिवाक्येभ्यः । स एव देवयानो वा पितृयानो वा पन्था इति देवानां देवयानगामिनाम् । उत अपि च मर्त्यानां मरणधर्मिणां पितृयानगामिनाम् ताभ्यामिदं विश्वमेजत्समेति । तदः स्थाने यदो वृत्तिः । याभ्यां पथिभ्यामिदं सर्वमेजत् क्रियावत् समेति सङ्गच्छति यत् अन्तरा पितरं मातरं च । द्यौः पिता पृथिवी माता सुहुत ताभ्यां सृतीभ्यामस्तु ॥ ४७ ॥

शेषं यजमानो भक्षयति इदं हविः । त्र्यवसाना अष्टिर्यजमानाशीः इदं पयोलक्षणं हविः प्रजननम् । उत्पादकं मे मम अस्तु दशवीराः सर्वगणम् । अङ्गानि वै सर्वे गणा स्वस्तये अविनाशाय । पुनरपि हविर्विशेष्यते । आत्मसनि आत्मानं यद्धविः सनोति सम्भजते तदात्मसनि । एवं प्रजासनि पशुसनि लोकसनि अभयसनि । अभयमपुनरावृत्तिः अग्निः प्रजां बहुलाम् अतिप्रवृद्धां मम करोतु यूयं च हे ऋत्विजः अन्नं च पयश्च रेतश्च अस्मासु धत्त ॥ ४८ ॥

उदीरताम् । त्रयोदश पित्र्यः त्रिष्टुभो जगत्येकादशी यजमानवा-

चनम् । उदीरताम् । ईर गतौ । उद उपसर्गात्परः ऊर्ध्वे । क्रमन्ताम् । ऊर्ध्वं गच्छन्तु अवरेऽस्मिंल्लोके अवस्थिताः पितरः उत्परासः परा एव परासः ये पितरः तस्मिंल्लोकेऽवस्थिताः ते पितरः उदीरतां तस्मादपि स्थानाद्विशिष्टतरं स्थानं गच्छन्तु । उन्मध्यमाः । मध्ये भवाः मध्यमाः येऽपि मध्यमाः तेऽपि विशिष्टतरं स्थानं गच्छन्तु पितरः सोम्यासः सोमसम्पादिनः । असुं य ईयुः । येऽपि असुं प्राणान् अन्वीयुः वातात्मानः अवृकाः अनमित्राः माध्यस्थ्यमास्थिताः ऋतज्ञाः सत्यज्ञा वा यज्ञज्ञा वा स्वाध्यायनिष्ठा वा यज्ञनिष्ठा वा तेऽपि ततो विशिष्टतरं स्थानमुद्गच्छन्तु । एवं च स्वकीयेन कर्म्मणा अस्मदीयेन च य उन्नतिं प्राप्ताः ते नः अस्मान् अवन्तु पालयन्तु पितरः हवेषु आह्वानेषु ॥ ४९ ॥

अङ्गिरसो नः । अङ्गिराः ऋषिः तस्य अपत्यानि बहूनि आङ्गिरसः तेन अस्माकं पितरः नवग्वाः नवगतयः पुनः पुनः अपुनरुक्त्या गत्या गच्छन्ति नवनीया स्तोतव्या गतिर्येषां ते तथोक्ताः । ये च अथर्वाणः अथर्वणो बहून्यपत्यानि अथर्वा पुनरथर्वतिश्चरतिकर्म्मा तत्प्रतिषेधः । ये च भृगवः भृगोर्बहून्यपत्यानि सोम्यासः सोमसंपादिनः तेषां पितॄणां वयं सुमतौ कल्याण्यां मतौ स्याम यज्ञियानां यज्ञसम्पादिनाम् । अपि च भद्रे भन्दनीये सौमनसे कल्याणे मनसि स्याम भवेम ॥ ५० ॥

ये नः । पूर्वे पितरः सोम्यासः सोमसम्पादिनः अनु ऊहिरे । वह प्रापणे । देवाननु प्रापितवन्तः सोमपीथं सोमपानम् । वसिष्ठाः वसिष्ठस्य बहून्यपत्यानि वासिष्ठाः वसिष्ठः पुनर्वस्तृतमः कृतास्पदो वसति तेभिः तैर्वसिष्ठैः यमः संरराणः सम्प्रीयमाणः हवींषि । कथम्भूतो यमः उशन् । वश कान्तौ । अस्य कृतसम्प्रसारणस्यैतद्रूपम् । कामयमानः कथम्भूतैर्वासिष्ठैः उशद्भिः कथमत्तु प्रतिकामं यथाकामं भक्षयतु ॥ ५१ ॥

त्वꣳसोम । हे सोम प्रचिकितः किकित्वांश्चेतनावान् प्रकर्षेण चेतनावान् विशिष्टचैतन्ययुक्तः त्वं मनीषा मनसः इच्छा विशिष्टतरा भवति यज्वनाम् । यद्वा । त्वं हे सोम प्रचिकितः । कित ज्ञाने प्रकर्षेण ज्ञातासि यावद् ज्ञातव्यं मनीषा मनीषया प्रज्ञया त्वं च रजिष्ठम् ऋजुतमं देवयानाख्यम् अनुनेषि अनुगमयसि पन्थां पन्थानं

किञ्च । तव प्रणीती प्रणयनेन तवाभ्यनुज्ञानेन पितरः नः अस्माकं हे इन्दो कर्म्म कृत्वा देवेषु मध्ये रत्नं रमणीयं यज्ञफलम् अभजन्त भक्तवन्तः धीरा धीमन्तः ॥ ५२ ॥

त्वया हि नः । यस्मात् त्वया आश्रयभूतेन नः अस्माकं पितरः हे सोम पूर्वे पूर्वजाः कर्म्माणि चक्रुः कृतवन्तः । हे पवमान धीराः धीमन्तः । अव अतः प्रार्थये त्वां वन्वन् सम्भजमानः तानि कर्म्माणि अस्मदीयानि अवातः वाताद्युपद्रवरहितः एकचित्तः परिधीन् सर्वतो निहितान् यज्ञोपद्रवकारिणः अपोर्णु ऊर्णुञ् आच्छादने । अपगमय वीरेभिः वीरैश्चाश्वैश्च सहितः मघवा मघवान् धनवान् भव नः अस्माकम् । यो यस्य ददाति स तस्य धनवानिति मतिः ॥ ५३ ॥

त्वं सोम । यस्त्वं सोम पितृभिः संविदानः संवादं कुर्वाणः अनुद्यावापृथिवी आततन्थ । तनु विस्तारे अन्वातनोऽपि द्यावापृथिव्यौ दृढीकरोषि तस्मै तव हे इन्दो हविषा विधेम हविर्दद्मः इति वाक्यार्थः । वयं च हविः प्रदानानन्तरं भवेम पतयो धनानां सोमवतां पितृणां षड्चम् ॥ ५४ ॥

बर्हिषदः । तिस्रः ऋचो बर्हिषदां बर्हिर्यज्ञयाजिनो बर्हिषि सीदन्तीति बर्हिषदः । ऊती ऊत्या अर्वाक् अर्वाञ्च आगच्छत । को हेतुरागमने इति चेत् इमा इमानि वः युष्माकं हव्या हवींषि चक्रमतानि जुषध्वं सेवध्वं यैश्च युष्माभिः अधस्तनानि हवींषि आसेवितानि ते यूयं पुनरपि आहूयमानाः आगत आगच्छत अवसा अन्नेन हविर्लक्षणेन शन्तमेन । शमिति सुखनाम । सुखयितृतमेन हेतुभूतेन अथ परितुष्टाः यज्ञसमाप्त्युत्तरकालञ्च अस्माकं शंयोः । पदद्वयमेतत् शमनं च रोगाणां दधात यावनं च भयानां दधात अन्यदपि यत्किञ्चिदरपः अपापं तदस्माकं दधात ॥ ५५ ॥

आहम् । आ अवित्सि आभिमुख्येन वेद्मि विदितवान् अहम् पितॄन् सुविदत्रान् सुविदत्राः कल्याणदानाः कल्याणदानान् नपातं च विक्रमणं च विष्णोर्व्याप्तुर्यज्ञस्य । न विद्यते पातो यत्र गतानां स नपातो देवयानः पन्थाः । विविधं क्रमणं यत्र गतानां स विक्रमणः पितृयानः पन्थाः । तत्र हि अरघट्टघटीवदुत्तराधरं प्राणिनो गच्छन्ति । देवयानपितृयानौ पन्थानौ यज्ञसम्बन्धिनावहं वेद्मि

तदनुगामिनश्च पितॄन् । यत एवमतो ब्रवीमि बर्हिषदो ये पितरः स्वधयान्नेन सह सवनीयलक्षणेन सुतस्याभिषुतस्य भजन्त भजन्ते पित्वः पानं सोमपानं ते इह कर्म्मणि आगमिष्ठाः आगच्छन्त्विव्याख्यातसन्नतिः ॥ ५६ ॥

उपहूताः आहूताः पितरः सोम्यासः सोमसम्पादिनः । बर्हिष्येषु निधिषु प्रियेषु । हविर्विशेषणान्येतानि बर्हिषि भवेषु बर्हिष्येषु-बर्हिषि सादितेषु हविःष्वित्यर्थः । निधिभूतेषु पितृणां प्रियेषु अभिरुचितेषु ते पितर एतज्ज्ञात्वा आगमन्तु आगछन्तु आगत्य च ते इह श्रुवन्तु शृण्वन्तु अस्मदीयानि वचांसि श्रुत्वा च अधिब्रुवन्तु यद्वक्तव्यं पितृभिः पुत्राणां ते च अवन्तु रक्षन्तु सर्वतः अस्मान् ॥ ५७ ॥

आयन्तु नः । चतस्रोऽग्निष्वात्तानाम् । आयन्तु आगछन्तु अस्माकं पितरः सोम्यासः सोमसम्पादिनः अग्निष्वात्ताश्च । अग्निष्वात्ताः पुनः पुनः यानग्निरेव दहन् स्वादयति । ते हि श्रौतस्मार्तकर्म्मकारिणः पथिभिर्देवयानैर्मार्गैर्देवसहगमनैर्देवसहयायिनस्ते पितरो येषामेतत्कर्म क्रियते पुत्रपौत्रप्रपौत्रैः ।

उक्तं च ॥

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ॥

अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपमिति ।

आगत्य चास्मिन्यज्ञे स्वधयान्नेन मदन्तः तृप्यन्तः परितुष्टा अधिब्रुवन्तु । तेऽवन्त्वस्मानिति व्याख्यातम् ॥ ५८ ॥

अग्निष्वात्ताः । हे अग्निष्वात्ताः पितरः आ इहागच्छत । आगच्छत । इह एत्य च सदः सदः गृहं गृहं प्रति सदत उपविशत हे सुप्रणीतयः साधु प्रणयनाः ततः सुखोपविष्टाः अत्त भक्षयत हवींषि प्रयतानि व्यपगतरागद्वेषमोहैः अभिसंस्कृतानि शुचीनि । बर्हिषि अन्नानि अथ तृप्ताः सन्तः रयिं धनं सर्ववीरं दधातन । नकार उपजनः ॥ ५९ ॥

ये अग्निष्वात्ताः येऽपि अग्निष्वात्ताः अग्निना आस्वादिताः येन अग्निष्वात्ताः श्मशानकर्म्माप्राप्ताः मध्ये दिवः द्युलोकस्य स्वधया स्वकर्म्मफलयोगेन मादयन्ते सुखं सेवन्ते तेभ्यस्तेषामिति विभक्तिव्यत्ययः । स्वराट् स्वयमेव राजत इति स्वराट् । अकृतकै-

श्वर्यो यमः स्वराडुच्यते । असुनीतिमेतामात्मनो द्वितीयं सहायं कृत्वा असून्प्राणान्नयतीति असुनीतिः अन्यो यमः । एतामिति लिङ्गव्यत्यः । यथावशम् । यथाकामं यथारुचि तन्वं शरीरं कल्पयाति कल्पयतु ॥ ६० ॥

अग्निष्वात्तान् पितॄन् ऋतुमतः ऋतुसंयुक्तान् हवामहे आह्वयामः नाराशंसे चमसे सोमपीथं सोमपानं ये आशुः प्राप्नुयुः नाराशंसे चमसे पितॄणां भक्षः श्रूयते । अथ यदि नाराशंसेषु सन्न इत्युपक्रम्य पितृभ्यो नाराशंसेभ्यः इति । ते च नः आहूयमानाः विप्रासः मेधाविनः सुहवाः स्वाह्वाना भवन्तु । एवं कृते वयं स्याम पतयो रयीणाम् ॥ ६१ ॥

आच्या जानु । दशर्चोऽनुवाको नव पित्र्या दशम्यैन्द्री गायत्री तृतीया चतुर्थी नवमी चानुष्टुभस्त्रिष्टुभ इतराः पितर उच्यन्ते आच्या जानु सव्यं जानुं पातयित्वा दक्षिणतो निषद्य दक्षिणतोऽवस्थानं कृत्वा स्वरूपतोऽयं निर्देशः । एवंस्वभावा ह्येते । अथैनं पितरः प्राचीनावितिनः सव्यं जान्वाच्योपासीदन्निति श्रुतेः । इममस्मदीयं यज्ञमभिगृणीत अभिष्टुत दक्षिणामन्त्रकालकर्त्तृहविर्यजमानोत्कर्षैः साध्वयं यज्ञ इति । विश्वे सर्वे सोमवन्तः बर्हिषदः अग्निष्वात्ताश्च मा च हिंसिष्ट मा च हिंसां कुरुत । हे पितरः केनचिदपि नः अस्मान् यत्र यद्यपि वः युष्माकम् आगः आग अपराधम् । आगःशब्दः सान्तो नपुंसकलिङ्गोऽपराधवचनः । पुरुषता । विभक्तिलोपः । पुरुषत्वेन चलचित्ततया कराम कुर्म्मः ॥ ६२ ॥

आसीनासः । ये यूयम् आसीनाः अरुणीनाम् अरुणवर्णानाम् अरुणा हि ता ऊर्णा भवन्ति याभिः कुतपाः क्रियन्ते । कुतपप्रियाश्च पितरः कुतपं चासने दद्यात् इति स्मृतेः । यद्वा अरुणवर्णानां रश्मीनाम् उपस्थे उत्सङ्गे आसीनाः आदित्यलोकजितः पितर उच्यन्ते । रयिं धनं धत्त दत्त दाशुषे हवींषि दत्तवते यजमानाय मर्त्याय मनुष्याय पुत्रेभ्यश्च हे पितरः । यजमानार्थे पुत्रवचनम् । सर्वे हि पितॄणां पुत्राः यजमानाः अयजमानाश्च तस्य वसुनः प्रयच्छत दत्त यदभिप्रेतं वसु ते च इह अस्मदीये यज्ञे ऊर्जं दधात स्थापयत ॥ ६३ ॥

यमग्ने कव्यवाहन । स्विष्टकृदग्निरुच्यते चतसृभिर्ऋग्भिः । हे अग्ने कव्यवाहन कव्यं वोढव्यमित्ययमधिकारो यस्य स एवं संबो-

च्यते यं रयिं हविर्लक्षणं धनं त्वं चित् त्वमपि मन्यसे अवगच्छसि साधु शक्यतेऽनेन श्रेयः प्राप्तुमिति तं हविर्लक्षणं रयिं नः अस्माकं स्वभूतं गीर्भिः वाग्भिः पुरोऽनुवाक्यायाज्यावषट्कारलक्षणाभिः श्रवाय्यं हविर्विशेषणमेतत् । श्रवणीयं देवत्रा देवेभ्यः पनय देहि । पनतिर्दानकर्म्मा । युजं यथायुजं यथायोगम् ॥ ६४ ॥

यो अग्निः । यः अग्निः कव्यवाहनः कव्यं पितृणां हविरुच्यते । तद्वहति पितॄन् यक्षत् इष्टवान् ऋतावृधः सत्यवृधो यज्ञवृधो वा । द्वितीयाबहुवचनमेतत् । प्रेदु हव्यानि वोचति प्रवोचति प्रब्रवीतु हव्यानि हवींषि देवेभ्यश्च पितृभ्यः आ । समुच्चयार्थीय आकारः । देवेभ्यश्च पितृभ्यश्च इमानि देवेभ्यश्च पितृभ्यः । इत् उ निपातौ पादपूरणौ ॥ ६५ ॥

त्वमग्ने । यस्त्वं हे अग्ने ईडितः अध्येषितः सन् कव्यवाहन अवाट् । वह प्रापणे अस्यैतद्रूपम् । ऊढवानसि हव्यानि हवींषि सुरभीनि सुगन्धीनि कृत्वा ऊढ्वा च हवींषि प्रादाः प्रदत्तवानसि पितृभ्यः स्वधया पितृमन्त्रेण ते च पितरः अक्षन् अत्तवन्तो भक्षितवन्तः सः अद्धि भक्षय त्वं हे देव प्रयतानि शुचीनि हवींषि ॥ ६६ ॥

ये चेह । ये च पितरः इह सन्ति समीपे इह वा लोके आसते ये च इह लोके न सन्ति यान् च पितॄन् विद्मः अवगच्छामः । यान् उ इति पादपूरणः । नच प्रविद्म न जानीमः त्वं वेत्थ यति ते जातवेदः तेशब्दः आदौ क्रियते द्वितीयान्तो वाक्यबलीयस्त्वात् । तान् त्वं वेत्थ वेत्सि जानासि यति अविभक्तिको निर्देशः । यतीन् शुचीन् नित्यनैमित्तिककर्म्मकरणान्निर्दग्धकल्मषान् हे जातवेदः । अत एवमुच्यसे स्वधाभिः पितृसंबन्धैर्हविर्भिः यज्ञं पितृयज्ञं सुकृतं साधु कृतं जुषस्व सेवस्व ॥ ६७ ॥

इदं पितृभ्यः । इदमिति प्रत्यक्षतो निर्देशः । पितृभ्यः नमः अन्नं हविर्लक्षणम् अस्तु । अद्य अद्यतनं ये पितरः पूर्वासः पूर्वं ईयुः स्वर्गं ये च उपरासः उपरतव्यापाराः कृतकृत्याः परं ब्रह्म ईयुः याताः ये च पार्थिवे रजांसि पृथिव्यां भवं पार्थिवं रजःज्योतिः अग्निः तत्रानिषत्ताः आभिमुख्येन निषत्ता अग्निलोकं प्राप्ता इत्यर्थः । ये वा ये च नूनं निश्चयेन सुवृजनासु साधुबलासु विक्षु यजमानेषु निषत्ताः तेभ्यः पितृभ्यो नमोऽस्त्वद्येति सम्बन्धः ॥ ६८ ॥

अग्ना । अथैवं सति यथा येन प्रकारेणास्माकं पितरः परासः उत्कृष्टाः प्रत्नासः पुराणाः हे अग्ने ऋतं यज्ञम् आशुषाणाः अश्नुवानाः व्याप्नुवन्तः । शुचि । अविभाक्तिको निर्देशः । शुचिं दीप्तं भास्वरम् । इत् शब्द एवार्थे । अयन् आगताः प्राप्ताः दीधितिम् । आदित्यरश्मिं तत आदित्यमण्डलम् । एष हि देवयानः पन्थाः । उक्थशासः । उक्थानि ये शंसन्ति सर्वेषु यज्ञेषु ते उक्थशासः । पितॄणां विशेषणमेतत् । एवं वयमपि हे अग्ने त्वत्प्रसादात् एवं क्षामा भिन्दन्तः । क्षामा अविभक्तिको निर्देशः । क्षामां पृथ्वीं भिन्दन्तः वेदिचात्वालयूपावटादिखननैः । यद्वा । पृथिव्याश्रयाणि यज्ञे व्रीहिपशुयूपादीनि भिन्दन्तः यज्ञे सर्वोपकरणम् । अनुतिष्ठन्त इत्यर्थः । अरुणीः अरोचनाः दीधितीः रश्मीः । अपव्रन् अपवृणुमः । अपवृत्य च रश्मीन् दैवं पन्थानमनुतिष्ठामः । एष समस्तार्थः ॥६९॥

उशन्तस्त्वा । वश कान्तौ । कृतसंप्रसारणस्यैतद्रूपम् । हे अग्ने यतो वयम् उशन्तः कामयमानाः त्वां निधीमहि स्थापयामः । यतश्च वयम् उशन्तः कामयमाना एव समिधीमहि सन्दीपयामः । अतस्त्वमपि उशन् कामयमान एव उशन्तः कामयमानानेव आवह पितॄन् । किमर्थमिति चेत् हविषे अत्तवे हविषः अदनाय॥७०॥

अथैन्द्रो मन्त्रः सोमो राजेत्यस्य निदानभूतः पठ्यते । अपां फेनेन तृतीयपादप्रभृतिव्याख्यानं यच्छब्दयोगात् । विश्वाः सर्वाः यत् यदा अजयः जितवानसि स्पृधः संग्रामान् । अथ तदा अपां फेनेन पुञ्जेन नमुचेरसुरस्य शिरः हे इन्द्र त्वम् उदवर्त्तयः उद्वर्त्तिवानासि । उत्पूर्वो वृत्तिः छेदने वर्त्तते ॥ ७१ ॥

इदानीमेतं मन्त्रं वक्ष्यमाणं चानुवाकं श्रुतिः सम्बध्नाति । तस्य शीर्षे छिन्ने लोहितमिश्रः सोमोऽतिष्ठत् स तस्माद्बीभत्सन्त त एतदन्धसो विपानमपश्यन् सोमो राजामृतं सुत इति तेनैनं स्वदयित्वात्मन्नदधतेति । सोमो राजाष्टौ ग्रहोपस्थानम् अश्विसरस्वतीन्द्रा अपश्यन् । आद्यास्तिस्रो महाबृहत्य उपान्त्या च चतुर्थ्यन्ते अतिजगत्यौ शेषे अतिशक्वर्यौ । यथा एककारणानि वस्तूनि विविच्यमानानि दृश्यन्ते यथा च पृथग्भूतानि संसृष्टानि पुनर्विविच्यमानानि दृश्यन्ते एवमयमपि लोहितमिश्रः सोमः सोम एवेत्यनुवाकार्थः । सोमो राजा । सोमः राजा सुतः अ-

भिषुतः अमृतं सम्पद्यते रसीभावात् । स्थूलस्य हि सूक्ष्मताऽमृतीभावः । ऋजीषरूपेण वा अजहात् जहाति त्यजति मृत्युं मूर्त्तत्वाद् ऋजीषभावस्य सत्यमेतत् अनेन च ऋतेन सत्येन सत्यमेतत् संजातम् । इन्द्रियं वीर्यं विपानं विविक्तं लोहितात्सोमपानं पानयोग्यं वा विपानं शुक्रं रजोरहितम् अन्धसः अन्नात्सम्भूतम् । अथ इन्द्रस्य इन्द्रियम् । इदं पयः अमृतं मधु भवतु ॥ ७२ ॥

अद्भ्यः क्षीरम् । क्षीरोदकयोः संसृष्टयोः अद्भ्यः सकाशात् क्षीरं वियुज्य अपिबत् पीतवान् कुङ् हंसजातिमास्थाय आङ्गिरसः प्राणः । स हि अङ्गानां रसः । धिया प्रज्ञया इत्थम्भूता हि तस्य प्रज्ञा तस्यां जात्यामेव स्थितस्य भवति सत्यमेतत् । अनेन ऋतेन सत्यम् । इन्द्रियं विपानं शुक्रम् । अन्धसः संभृतं भूयात् । अथ इदम् । इन्द्रस्य इन्द्रियं पयः अमृतं मधु भूयात् ॥ ७३ ॥

सोममद्भ्यः सोमोदकयोः संसृष्टयोः सोमं वियुज्यापिबत् । अद्भ्यः सकाशात् । छन्दसा छन्दोनिबद्धेन वेदेन । हंसः आदित्यः शुचिषदेतत्सत्यम् । ऋतेनेत्यादि समानम् ॥ ७४ ॥

अन्नात्परिस्रुतः । अन्नाद्धविर्लक्षणाद्रसं परिस्रुतश्च रसं ब्रह्मणा-त्रयीलक्षणेन व्यपिबत् क्षत्रं च व्यपिबत् क्षत्रस्य च पानं वशीकरणं पयः सोमं प्रजापतिः प्रथमशरीरी सत्यमेतत् । ऋतेन सत्यमिति समानम् ॥ ७५ ॥

रेतो मूत्रम् । व्यवहितपदप्रायः रेतः । विजहाति त्यजति योनिं स्त्रीप्रजननं प्रविशादिन्द्रियं शिश्नं योनिप्रवेशादन्यत्र मूत्रं विजहाति । तुल्यद्वारयोरपि रेतोमूत्रयोः मूत्रस्थानं हित्वान्यत्रावतिष्ठते रेतः । सत्यमेतत् ततः गर्भो जरायुणा आवृतः वेष्ठितः जरायुं च उल्वं च जहाति त्यजति जन्मना प्रसवेन सत्यमेतत् । नानास्थानानामेकद्वाराणां प्रथममुदाहरणम् । एकस्थानानामेकद्वाराणां द्वितीयम् । ऋतेनेति व्याख्यातम् ॥ ७६ ॥

दृष्ट्वा रूपे । दृष्ट्वा उपलभ्य रूपे सत्यानृतयोः इदं सत्यमेवं रूपं इदमनृतमेवंरूपमिति व्याकरोत् । व्याकरणं पृथक्कृत्वावस्थापनम् । कथं व्याकरोत् अश्रद्धामनृते अदधात् अनृतनिमित्तत्वादश्रद्धायाः । श्रद्धां सत्ये अदधात् सत्यनिमित्तत्वात् श्रद्धायाः । श्रद्धामास्तिक्यम् अदधात् प्रजापतिः सत्यमेतत् ॥ ७७ ॥

वेदेन रूपे । वेदेन परिज्ञानेन त्रय्या विद्यया वा रूपे सुतासुतयोर्व्यपिबत् सुतः सोम उच्यते पयश्चासुतश्च परिस्रुत् प्रजापतिः सत्यमेतत्। अनेनेति ऋतेन व्याख्यातम् ॥ ७८ ॥

दृष्ट्वा परिस्रुतः । रसं शुक्रेण अमलेन मन्त्रेण शुक्रम् । अमलं वियुज्य अपिबत् पयश्च सोमं च प्रजापतिः । सत्यमेतत् । ऋतेनेति व्याख्यातम् ॥ ७९ ॥

खुरैर्वसाग्रहान् द्वात्रिंशतं जुहोति । सीसेनेति प्रत्यृचम् । अश्विसरस्वतीन्द्रदेवत्याः षोडश जगत्यः । यथा इन्द्रस्य भैषज्यं क्रियते तथा आभिरुच्यते । यज्ञः पटेन रूच्यते । प्रथमायामृचि । सीसेन ऊर्णासूत्रेण च तन्त्रमिव पूर्वापरैः सूत्रैः दक्षिणोत्तरैश्च वयन्ति यज्ञं के वयन्ति मनीषिणः मेधाविनः कवयः क्रान्तदर्शनाः मनसा पर्यालोच्य । गुणत उक्त्वाथेदानीं नामत आह अश्विनौ सविता सरस्वती वरुणश्च किमर्थं पुरस्कृत्य यज्ञं वयन्ति इन्द्रस्य रूपं भिषज्यन् ॥ ८० ॥

तदस्येन्द्रस्य रूपम् । अमृतम् । अमरणधर्म्मि शचीभिः कर्मभिः तिस्रो देवताः सन्दधुः संरराणाः संरममाणाः । अश्विनौ सरस्वती च सन्दधुः लोमानि तावत् शष्पैः सन्दधुः बहुधा न तोक्मभिः त्वगस्य । नकारः समुच्चये आ अध्यायपरिसमाप्तेः । त्वचामिति विभक्तिव्यत्ययः । बहुधा च तोक्मभिः त्वचमस्येन्द्रस्य सन्दधुः मासम् । अभवश्च लाजाः ॥ ८१ ॥

तदश्विना तत् पेशः रूपम् । इन्द्रस्य अश्विनौ भिषजौ रुद्रवर्त्तनी रुद्रस्येव वर्त्तनिः मार्गौ ययोः तौ रुद्रवर्त्तनी रुग्णवर्त्तनी वा । रोरूयमाणौ वर्त्तेते इति वा । सरस्वती च वयति वयन्ति बहुवचनमेकवचनस्य स्थाने सम्बध्नाति अन्तरमभ्यन्तरम् । किं केन वयन्ति अस्थि च मज्जानं च तावन्मासरैश्च कारोत्तरेण च यथाक्रमं वयन्ति । किं कुर्वाणाः दधतः स्थापयन्तः गवां त्वचि चर्मणि सुराम् ॥ ८२ ॥

सरस्वती मनसा । सरस्वती मनसा पर्यालोच्य पेशलम् । पेश इति हिरण्यनाम रूपनाम च । हिरण्यवद्वा रूपवद्वा । वसु धनं नासत्याभ्यां सहिता वयति पटमिव सृजाति दर्शनं वपुः दर्शनीयं च वपुः शरीरमिन्द्रस्य । रसं परिस्रुता न रोहितम् । रसं च सर-

स्वतीनासत्याभ्यामश्विभ्यां सहिता वयति वपुषो रञ्जनार्थम् । अतो हि रोहित इन्द्रो देवेषु पठ्यते । अथ तदा नग्नहुः किण्वः धीरः धीमांस्तसरं न वेम । तसरं च वेम च सम्पद्यते । नग्नहोः कर्तृत्वमत्र विवक्षितं विवक्षातः कारकाणि भवन्ति । तसरं वेम च कुविन्दानां प्रसिद्धम् ॥ ८३ ॥

पयसा शुक्रम् । दुग्धेन करणभूतेन शुक्रं च अमृतं च जनित्रं जननशीलं जनयन्त अश्विनौ सरस्वती च प्रकृतत्वादिन्द्रस्तु भैषज्यः सुरया च मूत्रान्मूत्रमिति साधु । मूत्रं च रेतश्च जनयन्त । किञ्च अपामतिं बाधमानाः । अपबाधमानाः अमतिम् । अमननं मौढ्यं दुर्मतिं च ऊबध्यम् । आमाशयगतमन्नं वातं तत्सहचरितं सर्व्वं पाकाशयगतमशुचिं तदा एतत् तदेतत्सुरया जनयन्त आरात् सुरात् सुरासंनिकर्षात् । संनिकर्षो हि गन्धादिभिः ॥ ८४ ॥

इन्द्रः सुत्रामा । पशुपुरोडाशदेवता इन्द्रं भिषज्यन्ति इन्द्रः सुत्रामा हृदयेन हृदयामिति विभक्तिव्यत्ययः । इन्द्रस्य जजान जनयति सत्यम् । इन्द्रस्य पुरोडाशेन सविता जनयति यकृच्च क्लोमानं च जनयति वरुणः इन्द्रं भिषज्यन् मतस्ने च पित्तं वायव्यैरूर्ध्वपात्रैः ऊर्ध्वपात्राणां सौमिकानां वायव्यानीति चोक्तं न मिनाति निर्मिमीते सृजति ॥ ८५ ॥

आन्त्राणि स्थालीः स्थाल्यः आन्त्राणि अभवन् । किं कुर्वाणाः मधु पिन्वमानाः पिन्वतिः सेचनार्थः । गुदाः पात्राणि अभवन् । सुदुघा न धेनुः दक्षिणा आदित्येष्टेर्गुदा एव अभवन् श्येनस्य च पत्रं प्लीहा अभवत् शचीभिः कर्मभिः आसन्दी नाभिः इन्द्रस्य उदरं च आसन्दीस्थाभिषिच्यते अतस्ततो जायते ॥ ८६ ॥

कुम्भो वनिष्ठुः । सुरासन्धानकुम्भो वनिष्ठुः जनिता जनकश्च शचीभिः स्वकीयैरेव कर्मभिः । यस्मिन्कुम्भे अग्रे प्रथमं योन्यां गर्भः अन्तर्मध्ये सुरालक्षणः उषितः । किञ्च प्लाशिः शिश्नमूलः व्यक्तः स्पष्टः शतधारः उत्सः कूपः बहुस्रोतत्वात्कूप उक्तः । दुहे च कुम्भी स्वधां पितृभ्यः ॥ ८७ ॥

मुखं सत् । अस्येन्द्रस्य मुखं सत् । एकदेशलोपः सतमिति प्राप्ते । तथा च श्रुतिः । मुखं सतं जिह्वा पवित्रं चप्यं पायुर्वस्तिर्वाल इति । शिरः इत् सतेन जिह्वा पवित्रम् । अश्विनौ आसन् आस्ये

सरस्वती च चप्यं च पायुः भिषगस्य वालो वस्तिश्च शेपो हरसा तरस्वी वालस्य त्रिधा परिणामः वैद्यश्च वस्तिश्च शेपश्च । यदि नाम शेपः । हरसा वीर्येण तरस्वी वेगवान् ॥ ८८ ॥

अश्विभ्यां चक्षुः । अश्विभ्याम् इन्द्रस्य चक्षुः संस्क्रियते तदेव अमृतं ग्रहाभ्यां क्रियते अश्विदेवत्याभ्यां छागेन तेजः चक्षुषः क्रियते । कथम्भूतेन छागेन हविषा शृतेन हविर्भूतेन पक्केन । अपरं पक्ष्माणि चक्षुषो लोमानि गोधूमैः संस्क्रियन्ते । कुवलैर्बदरविशेषैरुतानि निविष्टानि पक्ष्मसु रोमाणि संस्क्रियन्ते पेशो न शुक्रमसितं वसाते पेशो न रूपं च चक्षुषः शुक्रं शुक्लम् असितं च कृष्णं च वसाते आच्छादयते ते प्रकृतत्वादश्विनौ ॥ ८९ ॥

अविर्न । अविश्च मेषः सारस्वतः नसि नासिकायां वीर्यायावस्थितः प्राणस्य च पन्था मार्गः अमृतः ग्रहाभ्यां सारस्वताभ्यां च उपवाकैः व्यानं जजान जनयति नस्यानि नासिकाप्रभवानि च बर्हिर्बदरैर्जनयति ॥ ९० ॥

इन्द्रस्य रूपम् । इन्द्रस्य रूपं संस्करोति ऋषभः बलाय चावतिष्ठते । कर्णाभ्यां च श्रोत्रम । अमृतम् । अतीतानागतवर्त्तमानशब्दग्राहि । ग्रहाभ्यामैन्द्राभ्यां स्थापितं यवाश्च बर्हिश्च भ्रुवि केसराणि लोमानि अभवन् । कर्कन्धु च जज्ञे मधुसारघं मुखात् । कर्कन्धु बदरं स्वयमेव जज्ञे इन्द्रस्य मुखात् मधुलालाश्लेष्मादि मधुशब्देनोच्यते सादृश्यात् । सारघं सरघा भ्रमराः यथा सारघं मधु इतश्चेतश्च आहृतं भवति एवं लालादि सर्वस्मादङ्गात्सम्भवति ॥ ९१ ॥

आत्मन्नुपस्थे । आत्मनि उपस्थे च यानि लोमानि तानि वृकस्य लोमानि । लोमेति जातावेकवचनम् । मुखे श्मश्रूणि च यानि तानि व्याघ्रलोम । केशा न शीर्षन् । ये च केशाः शिरसि यशसे निहिताः या च श्रियै शिखा निहिता या च त्विषिः दीप्तिः यानि च इन्द्रियाणि च तदेतत् सिंहस्य लोम ॥ ९२ ॥

अङ्गान्यात्मन् । अङ्गानि यस्मिन्नात्मनि भिषजौ वैद्यौ अश्विनौ समधातां तदात्मानम् । अङ्गैः समधात् सरस्वती । एवमिन्द्रस्य रूपं शतमानं बहुप्रतिमानम् । अश्विनौ सरस्वती च चक्षुः । चन्द्रेण हिरण्ययेन आयुः ज्योतिः अमृतं च दधानाः ॥ ९३ ॥

सरस्वती । व्यवहितपदप्रायः । सरस्वती यं योन्यामिन्द्रलक्ष्

णं गर्भम् । अन्तर्मध्ये अश्विभ्यां पत्नी भूत्वा सुकृतं शोभनीकृतं बिभर्ति धारयति । तमेवेन्द्रं जनयन् श्रियै विभूत्यै वरुणश्च अप्सु राजा अपां रसेन साम्ना च बिभर्ति ॥ ९४ ॥

तेजः पशूनाम् । तेजः पशूनाम् उपादाय हविश्च इन्द्रियावत् वीर्यवत् उपादाय परिस्रुता हविर्भूतया पयसा च हविर्भूतेन सारघमिव मधु । अश्विभ्यां दुग्धं सरघा भ्रमराः ते यथा अद्भ्यः ओषधीभ्यश्च रसमादाय दुहन्ति एवमेतेभ्यो द्रव्येभ्यः अश्विभ्यां दुग्धं सौत्रामणीलक्षणम् । कथंभूताभ्यां भिषजा भिषग्भ्यां सरस्वत्या च । किञ्च सुतासुताभ्यां परिस्रुत्पयोभ्यां सकाशात् अमृतः सोम इन्दुः दुग्धम् । एवं यैः सौत्रामणी दृष्टा तेभ्यः ऋषिभ्यो नमोऽश्विभ्यां सरस्वत्यै च एवमियमृषिश्रुतिः ॥ ९५ ॥

उव्वटकृतौ मन्त्रभाष्ये एकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः ॥ २० ॥

---

क्षत्रस्य योनिरसि । गायत्री आसन्दीदेवताका । आसन्दीं वेद्यांरूपानिदधाति । अर्द्धर्चेन क्षत्रस्य त्वं योनिः उत्पत्तिस्थानमसि आसन्द्यामभिषिक्तो हि गुणधर्म्मानर्हति राजेति एतदभिप्रायम् । योनिः त्वं क्षत्रस्य नाभिश्च नहनं बन्धनं त्वमसि । कृष्णाजिनमस्यामास्तृणाति । मा त्वा हिꣳसीत् । कृष्णाजिनमुच्यते । मा त्वाम् इयमासन्दी हिंसीत् मा च त्वं मां हिꣳसीः । यज्ञाध्यासोऽत्र कृष्णाजिनस्य । यज्ञस्य चैवात्मनश्चाहिंसायै इति श्रुतिः ॥ १ ॥

आसन्द्यामुपविशति । निषसाद । व्याख्यातम् । पादयोरुक्मौ उपास्यति । मृत्योः पाहि गोपाय । मृत्युशब्देनात्र अशनिरुच्यते । विद्योत्पाहि विद्युतः पाहि ॥ २ ॥

अभिषिञ्चति देवस्य त्वेति व्याख्यातम् । अश्विनोर्भैषज्येन । भिषजः कर्म्म भैषज्यम् । भिषग्वैद्यः । तेन भैषज्येन अभिषिञ्चामीति सम्बन्धः । किमर्थमित्यत आह तेजसे ब्रह्मवर्चसाय सरस्वत्यै भैषज्येन वीर्यायान्नाद्याय अभिषिञ्चामि सरस्वत्यै इति षष्ठ्यर्थे चतु-

र्थौ । इन्द्रस्येन्द्रियेण वीर्येण बलाय श्रियै यशसे चार्थायाभिषिञ्चामि ॥ ३ ॥

यजनमालभते । कोऽसि । गायत्री । कः प्रजापतिरसि कतमः प्रजापतितमः असि अतिशयार्थे तमप उपादानम् । बहवो हि प्रजापतयः । कस्मै प्रजापतिपदप्राप्तये त्वाम् । अभिषिक्तवानहं यतः काय त्वां प्रजापतिभावाय त्वाम् । अहमभिषिक्तवानस्मि यतः । सुश्लोकेत्यालब्धो ह्वयति हे कल्याणशब्द हे कल्याणमङ्गल हे सत्यराजन् सत्यः अनश्वरः राजास्य ॥ ४ ॥

अङ्गानि चालभते । यथालिङ्गं शिरो मे पञ्चभिस्तृतीया गायत्र्यन्त्या महापङ्क्तिस्त्र्यवसानानुष्टुभोऽन्याः इन्द्रोऽभिषिक्त आत्मानं राष्ट्रीभूतं पश्यन्नाह शिरो मे श्रीर्वर्तते यशो मुखं वर्तते त्विषिर्दीप्तिः केशाश्च श्मश्रूणि च वर्तते राजा प्राणः मे अमृतं वर्तते सम्राट् चक्षुर्वर्तते संगतं राष्ट्रं यत्र स सम्राट् विराट् श्रोत्रं वर्तते विराट् प्रथमः शरीरी ॥ ५ ॥

जिह्वा मे भद्रं वर्त्तते । वाक् महः पूजाकारिणी वर्त्तते मनः मनः मन्युर्वर्त्तते मनः क्रोधफलदायि वर्त्तते स्वराट् भामोऽतिक्रोधः स्वाराज्यं भामो वर्त्तते ।

उक्तं च ।

शक्तिरहितोऽपि कुप्यति मानं चोद्वहति सेवकजनोऽपि ।
अर्थरहितोऽपि कामी जानाति विधिं विडम्बयितुम् ।

मोदाः प्रमोदाः अङ्गुलयः अङ्गानि च मे मम वर्त्तन्ते मित्रं मे सहः मित्रं बलं मम शत्रूणामभिभवितृ वर्तते ॥ ६ ॥

बाहू मे । बाहू मे बलमिन्द्रियं वर्त्तते हस्तौ मे कर्म वीर्यं वर्त्तते । आत्मा अन्तरात्मा क्षत्रं वर्त्तते उरश्च मम ॥ ७ ॥

पृष्ठीर्मे । पृष्ठप्रदेशो मे राष्ट्रं वर्त्तते उदरं च अंसौ च ग्रीवाश्च श्रोणी च ऊरू च अरत्नी च जानुनी च विशो मे वर्त्तन्ते । अन्यान्यङ्गानि यानि सर्वतः ॥ ८ ॥

नाभिर्मे । नाभिर्मे चित्तं विज्ञानं वर्त्तते । चित्तविज्ञानयोः को विशेष इति चेत् विज्ञानं विज्ञप्तिः तज्जः संस्कारः चित्तम् । पायुर्मे अपचितिः भसत् वर्त्तते । पायुर्हदनप्रदेशः । अपचितिः पूजा भसच्छब्देन स्त्रीप्रजननम् । गौडा आहुः । नच यजमानस्य तद्

भवति पत्नीं विषयमेतत् । आनन्दनन्दौ आण्डे मे वर्त्तेते । भगः सौभाग्यं पसो वर्त्तते भगः महदैश्वर्यं सौभाग्यं सम्पत् । पसतेः स्पृशातिकर्मणः शिश्नमुच्यते । जङ्घाभ्यां पद्भ्यां च धर्मः अस्मि धर्मप्रतिष्ठोहि राजा भवति विशि राजा प्रतिष्ठितोऽस्मि ॥ ९ ॥

कृष्णाजिनेऽवरोहति । प्रतिक्षत्र इति । यजुषा प्रतितिष्ठामि क्षत्रे प्रतितिष्ठामि च राष्ट्रे प्रतितिष्ठामि च अश्वेषु प्रतितिष्ठामि च गोषु प्रतितिष्ठामि च अङ्गेषु प्रतितिष्ठामि च आत्मनि प्रतितिष्ठामि प्राणेषु प्रतितिष्ठामि पुष्टे प्रतितिष्ठामि च द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे ॥ १० ॥

त्रया देवा इति शस्त्रान्ते जुहोति । पङ्क्त्या त्र्यवसानया दैव्या परेण च यजुषा स्वाहाकारान्तेन च व्यवहितपदप्रायः । ये एकदेशे देवाः त्रयाः त्रिः प्रकाराः ये च एकीकृतास्त्रयस्त्रिंशास्त्रयस्त्रिंशत्सम्पद्यन्ते सुराधसः शोभनधनाः । राध इति धननाम । राध्नुवन्त्यनेन । ये च बृहस्पतिपुरोहिताः ते देवस्य सवितुः प्रसवे वर्तमानाः देवाः देवैः वक्ष्यमाणैः सह अवन्तु पालयन्तु माम् ॥ ११ ॥

कथमवन्तु प्रथमा देवा द्वितीयैः सहिताः अवन्तु द्वितीयाः तृतीयैः तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिः यजूंषि सामभिः सामानि ऋग्भिः ऋचः पुरोऽनुवाक्याभिः पुरोनुवाक्या याज्यावषट्कारैः वषट्कारा आहुतिभिः एवमेकादशसंख्यैः त्रिः प्रकारैः उत्तरोत्तरं पालिता आहुतयो मे कामान् समर्द्धयन्तु भूः स्वाहा सुहुतमस्तु ॥ १२ ॥

यजमानो ग्रहान् भक्षयति । लोमानि प्रयतिः अनुष्टुप् । मम यानि लोमानि तानि प्रयतिः वर्त्तन्ते । प्रयतिः प्रयत्नः त्वङ्मे आनतिर्वर्तते आनमनमानतिः त्वचि सर्वाणि मम भूतानि आनतानीत्यभिप्रायः। आगतिश्च द्रव्यादेः माꣳसं मे उपनतिर्वर्त्तते। उपनमन्ति हि मम भूतानि । वसु धनम् । अस्थि मम वर्त्तते मज्जा मे आनतिः॥१३॥

इत उत्तरमवभृथः मासरकुम्भं प्लावयति । यद्देवाः । तिस्रोऽनुष्टुभोऽग्निवायुसूर्यदैवत्याः । देवाः देवासः द्वे आमन्त्रिते त्रिस्थानानाधिदेवान् सम्बोधयति । यत्किञ्चित् हे देवाः देवासः देवहेडनं देवापराधनं च कृतवन्तो वयम् । अग्निः मां तस्मात् एनसः पापाद्विश्वात्सर्वस्मान्मुञ्चतु अंहसश्च बधात् ॥ १४ ॥

यदि दिवा। यदि अहनि यदि रात्रौ एनांसि पापानि चकृम कृतवन्तो वयम्। वायुर्म्मा तस्मादेनसः विश्वात् मुञ्चतु अंहसः पापात् ॥ १५ ॥

यदि जाग्रत् । यदि जाग्रदवस्थायां यदि स्वप्नावस्थायाम् एनांसि इति समानव्याख्यानं सूर्य इति विशेषः । श्रुतिस्तु लक्षणया व्याचष्टे । मनुष्या वै जागरितं पितरः सुप्तं मनुष्यकिल्विषाच्चैवैनं पितृकिल्विषाच्च मुञ्चत्विति ॥ १६ ॥

यद् ग्रामे । यत् ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये इन्द्रियविषये देवविषये इति श्रुतिः । यत् शूद्रे यदर्यें । अर्यः स्वामिवैश्वयोः । यच्च एतद्व्यतिरिक्तम्। एनः चकृम वयं यच्च एकस्यावयोः पत्नीयजमानयोरधि धर्म्मणि अधिकर्मण्येनः । तस्यैनसः अवयजनमसि । अवपूर्वो यजिर्न्नाशने वर्त्तते नाशनमसि ॥ १७ ॥

यदापः । व्याख्यतः । अवभृथ निचुम्पुण । व्याख्यातम् । इयांस्तु विशेषः । अयक्षीति । यजतेरिह रूपं पूर्वत्र तु यातेः अयासिषमिति ॥ १८ ॥

समुद्रे ते । द्विपदा विराट् । सुमित्रिया न इत्येतेनापोऽञ्जलिना आदाय दुर्म्मित्रिया द्वेष्यं प्रतिषिञ्चति व्याख्याते ॥ १९ ॥

द्रुपदादिव । अनुष्टुप् अब्देवत्या वासोऽपासनीया । द्रुपदः पादुका उच्यन्ते । तथा च यास्कः । कनीनके च विद्रुधेनवे द्रूपद इति । मुमुचानः मुच्यमानः । यथा द्रुमयात्पादान्मुच्यमानः पुरुषः तज्जैर्दोषैः असम्बध्यमानः पृथग्भवेत् यथा च स्विन्नः पुरुषः मलात्पृथग्भवेत् प्रस्विन्नस्य हि कृत्स्नो मलः अपैति । यथा च पूतं पवित्रेण कम्बलमयेन आज्यं घृतं पृथग्भवेत् कीटिकातः एवम् आपः शुन्धन्तु पृथक्कुर्वन्तु एनसः पापात् सकाशात् ॥ २० ॥

उत्तरति उद्वयम्। अनुष्टुप् सौरी । उद इति आख्यातेन सह सम्बन्धः। उदगन्म उद्गताः स्म वयं तमसस्य तमसोऽधिसकाशात् तमोबहुलादस्मात् लोकात् स्वः स्वर्गलोकं पश्यन्त उत्तरम्। उद्गततरमस्माल्लोकात् ततोऽपि देवं सूर्यं देवत्रा देवेषु उदगन्म ज्योतिः उत्तमं सर्वज्योतिर्भ्यः ॥ २१ ॥

आहवनीयमुपातिष्ठते। अपो अद्य पङ्क्तिः आग्नेयी । योऽहम्। अपः अद्य अस्मिन्नहनि अनु अचारिषम् । अनुचरितवानस्मि अने-

नावभृथकर्म्मणा यश्चाहम् । अब्जेन रसेन समसृक्ष्महि संसृष्टवानस्मि यश्चाहम् । अपः अद्य अस्मिन्नहनि अनु अचारिषम् अनुचरितवानस्मि अनेनावभृथकर्म्मणा । यश्चाहमब्जेन रसेन समसृक्ष्महि संसृष्टवानस्मि । यश्चाहं पयस्वानुदकवान् सन् हे अग्ने आगमम् आगतवानस्मि तं मामागतवन्तं संसृज वर्च्चसा प्रजया च धनेन च॥२२॥

समिधमाधत्ते । एधोऽसि । एधः समिन्धनमस्यग्नेः । एवं चेत् अतः त्वां साधनमुपादाय एधिषीमहि आदधाति समिदसि यतश्च समिन्धनमस्यग्नेः तेजोऽसि अग्नेः काष्ठसंयोगेनाग्निर्ज्वलतीत्येतदभिप्रायम् । अतस्त्वां ब्रवीमि तेजो मयि धेहि । जुहोति । समाववर्त्ति गायत्री यस्मात् समावर्त्तते नश्वरत्वात् पृथिवी यस्माच्च समावर्त्तेते उषाः । एवं सूर्यः यस्मात्समावर्त्तते । एवं विश्वमिदं जगत् जङ्गमादि अतः वैश्वानरं ज्योतिः भूयासम् । वैश्वानरः परं ब्रह्मेत्याहुरौपनिषदिकाः । विभून् विभूतान् कामान् व्यश्नवै व्यश्नुयां भूः भवनमात्राभिः सम्बन्धिने स्वाहा सुहुतमस्तु ॥ २३ ॥

सौत्रामण्यारम्भे यजमान आहवनीये तिस्रः समिधोऽभ्यादधाति अभ्यादधामि तिसृभिरनुष्टुब्भिः अग्नेयीभिः । प्रथमा व्रतग्रहणीया यामेताम् । अभ्यादधामि समिधं हे अग्ने व्रतपते त्वयि अनया व्रतं च श्रद्धां च उपगच्छामि ततः इन्धे दीपयामि त्वाम् । अहं दीक्षितः सन् ॥ २४ ॥

यत्र ब्रह्म । यत्र च ब्रह्म मूर्त्तिमत् क्षत्रं च सम्यञ्चौ समीची इति प्राप्ते लिङ्गव्यत्ययः । चरतः सह अवियोगेन तं लोकं पुण्यं प्रज्ञानीयां प्रज्ञानं चाप्राप्तानां न भवतीत्यतः स्वर्लोके गमनं प्रार्थ्यते । यत्र देवाः सहाग्निना चरन्ति ॥ २५ ॥

यत्रेन्द्रः । यत्र इन्द्रश्च वायुश्च सम्यञ्चौ सङ्गतौ चरतः सह अवियुक्तौ तं लोकं पुण्यं प्राप्नुयाम् । यत्र सेदिः न विद्यते अन्नालाभनिमित्तं सदनं कातर्य्यं च सेदिः ॥ २६ ॥

अंशुना ते । द्वितीया सुरासन्धाने अनुष्टुप् । सोमस्यांशुना ते तव हे सुरे अंशुः पृच्यतां संपृच्यतां परुषा च परुः । पर्वणा च पर्व संपृच्यताम् । एवं कृत्वा गन्धस्तव सोममवतु संपृणक्तु समालिङ्गतां मदाय च रसः अच्युतः अनश्वरः आलिङ्गताम् ॥ २७ ॥

पूतां सुरामादत्ते । सिञ्चन्ति । अनुष्टुप् । सौत्रैन्द्री वा । याम् आ-

चाम आङ्कुशगतम् । आचामो भक्तमण्डः । परिषिञ्चन्ति च पयःप्र-भृतिभिः उत्सिञ्चन्ति च ग्रहैः पुनन्ति च यां गोवालपवित्रहिरण्या-दिभिः तस्यै सुरायै बभ्रै बभ्रुवर्णायै षष्ठ्यर्थे चतुर्थी मदे अवस्थि-तः इन्द्रः किन्त्वो इति वदति किं त्वं कस्य त्वं ब्रूहि इति वदति ॥ २८ ॥

धानावन्तं करम्भिणम् । ऐन्द्री गायत्री प्रातःसवने पुरोडाशानां पुरोऽनुवाक्या धानावन्तं धानाभिः संयुक्तं करम्भिणं करम्भेण संयु-क्तम् । अपूपवन्तम् । अपूपेन संयुक्तम् । उक्थिनं वचनवन्तं स्तु-तिमन्तं भागं हे इन्द्र प्रातः प्रातः सवने जुषस्व सेवस्व नः अ-स्माकम् ॥ २९ ॥

बृहदिन्द्राय । ऐन्द्र्यां बृहत्यां गायतीति साम्न इयं योनिः बृहत्सा-म इन्द्राय गायत उपशब्दायत हे महतः ऋत्विजो वा मरुतः वृत्र-हन्तमं वृत्रं पापं प्रति अतिशयेन हन्ति गच्छतीति वृत्रहन्तमम् । एवमेव व्याख्येयं येनैवं पदकारः पदं चक्रे । वृत्रहन्तममिति मका-रान्तावग्रहणम् । अथ कोऽर्थः । पाप्मानम् । अति अतिशयेन गन्तारं साम गायतीति येन साम्ना ज्योतिरजनयन् ऋतावृधः स-त्यवृधो वा यज्ञवृधो वा इन्द्रस्य । यद्वा ऋतावृधः देवाः कथम्भू-तं ज्योतिरजनयन् देवं दातृ देवाय इन्द्राय दातुं जागृवि जागरण-शीलं स्वाधिकारावहितमित्यर्थः ॥ ३० ॥

ब्रह्मानुमन्त्रणम् । अध्वर्यो अद्रिभिः ऐन्द्री गायत्री । हे अध्वर्यो अद्रिभिः ग्रावभिः सुतमभिषुतं सोमं पवित्रे आनय आसिञ्चत ततः पुनाहि पुनीहि इन्द्राय इन्द्रस्य पातवे पानार्थम् ॥ ३१ ॥

त्रयस्त्रिंशं वसाग्रहं गृह्णाति । यो भूतानाम् । पाङ्क्तिः । आत्मप्रवा-दा भूतानां चतुष्प्रकाराणाम् । अधिपतिः यस्मिंश्च लोकाः अधि उपरि श्रिताः स्थिताः यश्च ईशे महतो विकारजातस्य स्वयं च महान् तेन गृह्णामि त्वां हे ग्रह अहमपि च परब्रह्मात्मभावमुपगतो गृह्णामि त्वामहम् ॥ ३२ ॥

उपयामगृहीतोऽसि व्याख्यातम् ॥ ३३ ॥

ऋत्विजः प्राणभक्षं भक्षयन्ति प्राणपा इति द्वाभ्यामनुष्टुब्भ्या-म् । उपरिष्टाद्बृहतीभ्याम् । प्राणादिपरिचयाय । यस्त्वं प्राणपाः मम असि अपानपाश्चक्षुष्पाश्च श्रोत्रपाश्च मे । वाचश्च मे विश्वभे-

षजः सर्वभेषजकारी । मनसश्चासि विलायकः लीङ् श्लेषणे । सर्वकरणेषु संश्लेषकः ॥ ३४ ॥

किञ्च आश्विनकृतस्य ते । नकार उपजनः करोतिर्दर्शनार्थः । अश्विदृष्टस्य ते सरस्वतिदृष्टस्य ते इन्द्रेण सुत्राम्णा दृष्टस्य ते उपहूतश्चाभ्यनुज्ञातः एताभिर्देवताभिरुपहूतस्य च सोमस्य च ऋत्विग्भिः भक्षयामि ॥ ३५ ॥

समिद्ध इन्द्रः । इत उत्तरं हौत्रं मैत्रावरुणं च सौत्रामण्याः आ अश्वमेधात् । तत्रेन्द्रस्य पशोस्त्वेकादश प्रयाजास्तत्रैता आप्रियः ऐन्द्यस्त्रिष्टुभः । यास्तु आप्रीदेवताः इध्मः तनूनपान्नराशंसः इडः बर्हिः द्वार उषासा नक्ता दैव्या होतारा तिस्रो देवीः त्वष्टा वनस्पतिः । स्वाहाकृतयः इति । ता यथायोगं विशेषणत्वेन व्याख्यायन्ते । द्विःस्थ इन्द्रोऽत्र स्तूयते । यः समिद्धः सन्दीप्तः आदित्यात्मना इन्द्रः उषसाम् । अनीके उषसां हि यत्र मुखं तत्र भगवानादित्योऽवतिष्ठते पुरोरुचा अग्रतो गामिन्या दीप्त्या वावृधानः इति सम्बन्धः । पूर्वकृच्च पूर्वां दिशं करोति तदुपलक्षिता हि पूर्वा दिग्भवति स एव मध्यस्थानस्थितस्सन् त्रिभिर्देवैः सहितस्त्रिंशता च सहितः वज्रपाणिः जघान वृत्रं मेघं विदुरो ववार हत्वा च वृत्रं दुरो विववार विवृतानिः करोतु । दुरः द्वाराणि श्रोतांसि तस्यैव मेघस्य द्वारशब्दस्य दुर इति छान्दसं सम्प्रसारणम् ॥ ३६ ॥

नराशंसः । एकस्यामेव ऋचि नराशंसः तनूनपाच्चास्मिन्नाप्रीणामनुवाके । व्यवहितपदप्रायोऽयं मन्त्रः । शूर इन्द्रः सन्नराशंसः यश्च यज्ञो भवति । नरा अस्मिन्नासीनाः शंसन्तीति । प्रतिमिमानो गणयन् यज्ञस्य धाम स्थानं गोप्रभृतिपशुसबन्धिनीभिर्वपाभिर्वपावान् हिरण्यैर्वपापूर्वैः पश्ववदानभूतैश्चन्द्री चन्द्रम इति हिरण्यनाम । यश्च शूर इन्द्रः तनूनपात् घृतं भवति मधुना मधुस्वादेन घृतेन समञ्जन् हवींषि गौरत्र तनूरुच्यते ततोऽस्यां भोगाः तस्याः पयो जायते पयस आज्यमजायत इति तं शूरमिन्द्रं यजमानो यजति प्रचेताः प्रकृष्टज्ञानः ॥ ३७ ॥

ईडितो देवैः ईडितः पूजितो देवैः हरिवान् हरी इन्द्रस्याश्वौ तदभिप्रायो मन्त्रो वर्णाभिप्रायो वा । अभिष्टिः अभिगमनवान् अध्येषणावान् वा आजुह्वानः आहूयमानः हविषा निमित्तभूतेन शर्द्धमा-

नः अभिबलायमानः । शार्द्धं इति बलनाम । पुरन्दरः पुरां दारयिता गोत्रभित् मेघान् भिनत्ति वृष्टयर्थं वज्रबाहुर्यः स आयातु यज्ञमुप नो जुषाणः यज्ञं नः सम्बन्धिनम् उपसेवमानः ॥ ३८ ॥

जुषाणो बर्हिः । जुषाणः सेवमानो बर्हिः हरिवान् । हरी अश्वौ ताभ्यां संयुक्तः नः अस्माकम् । इन्द्रः प्राचीनं देशं सीदत् सीदत्वा-स्तां प्रदिशा उपदिशन् पृथिव्या पृथिवीं देवयजनत्वेन उरुप्रथाः उरु विस्तीर्णं प्रथनमस्येति उरुप्रथाः इन्द्रविशेषणमेतत् । बर्हिर्वि-शेषणान्युत्तराणि । प्रथमानं स्योनं सुखरूपम् आदित्यैरक्तं वसुभि-श्च बर्हिषाञ्जनमन्त्रे आदित्या वसवश्च सन्ति तदभिप्रायमेतत् । सम्बर्हिरक्ता हविषा घृतेन समादित्यैर्वसुभिरित्ययं मन्त्रः सजोषाः सहप्रीयमाणः । इन्द्रविशेषणमेतत् ॥ ३९ ॥

इन्द्रं दुरः । दुरः सम्प्रसारणं छान्दसम् । यज्ञगृहद्वारं कवष्यः । कुष निष्कर्षे कुषिताः ससुषिराः धावमाना आदरवत्यः वृषाणं व-र्षितारं यन्तु जनयः सुपत्नीः लुप्तोपमानमेतत् । जाया इव शोभनप-त्न्यः । अथेन्द्रसङ्गतिं प्राप्य यज्ञगृहद्वारः देवीः देव्यः अभितः इतश्चे-तश्च विश्रयन्तां विव्रियन्तां सुवीरा ऋत्विग्भिः वीरम् इन्द्रं प्रति-प्रथमानाः पृथ्व्यो भवन्त्यः महोभिर्महोत्सवैः ॥ ४० ॥

उषासा नक्ता । उषा आदित्यप्रभा नक्ता रात्रिः उषाश्च रात्रिश्च बृहती महत्यौ बृहन्तं महान्तं पयस्वती उदकवत्यौ अवश्यायवत्यौ सुदुघे साधुदोहने शूरमिन्द्रं तन्तुं ततं लुप्तोपमानमेतत् । तन्तुमि व ततं पटार्थं सूत्रं प्रसारितमिव यशसा विचित्ररूपेण सूत्रेण संव-यन्ती संग्रथयन्त्यौ देवानां देवमिन्द्रं यजतः सङ्गतं कुरुतः पुनर्घट यत इत्यर्थः । सुरुक्मे सुरोचने ॥ ४१ ॥

दैव्या मिमाना । व्यवहितपदप्रायो मन्त्रः । दैव्यौ होतारौ अयं चाग्निः असौ च वायुः मध्यमः । दैव्यौ होतारौ मिमानौ निर्मिममाणौ यज्ञम् । मनुषः तद्धितस्य लोपः । वीप्सायाश्च । मनुष्यस्य यजना य पुरुत्रा बहुप्रकारं प्रथमा प्रथमौ मानुषात् होतुः सुवाचा साधु-वाचा मूर्द्धनि प्रधानाङ्गे यज्ञस्य इन्द्रं मधुना अन्नसहितं दधाना स्थापयन्तौ प्राचीनम् । आहवनीयाख्यं ज्योतिः हविषा वृधातः वर्द्धयतः ॥ ४२ ॥

तिस्रो देवीः । यास्तिस्रोः देव्यः हविषा आज्येन वर्द्धमानाः इन्द्रं

जुषाणाः सेवमानाः । जनयो न पत्नीः । जाया इव पत्न्यः आसते ता अच्छिन्नं तन्तुम् । अविस्रस्तं यज्ञं पयसा हविषा कुर्वन्तु । कतमाः ताः तिस्रो देव्यः इत्यत आह सरस्वती च इडा च देवी दानादिगुणयुक्ता भारती च आदित्यप्रभा विश्वतूर्त्तिः सर्वतः तूर्णयायिनी आख्यातमत्र नास्त्यतोऽध्याहृतम् ॥ ४३ ॥

त्वष्टा दधत । त्वष्टा तक्षतेः करोत्यर्थस्य । यस्त्वष्टा दधत् धारयत् शुष्मम् बलमिन्द्राय इन्द्रार्थं वृष्णे सेक्त्रे । कथंभूतः त्वष्टा अपाकः पाकः इति प्रशस्यनाम । न विद्यते यस्मात्त्वष्टुरन्यः पाकः प्रशस्यः सोऽपाकः । नञोऽस्त्यर्थानां बहुव्रीहिर्वाच्यो वोत्तरपदलोपश्चेति समासः । अचिष्टुः अश्नितस्त्यानशरीरः अश्नशीलो वा यशसे च इन्द्राय पुरूणि बहुनि भैषज्यान्यकरोदिति शेषः । वृषा सेक्ता त्वष्टा यजन् वृषणं सेक्तारमिन्द्रं भूरिरेताः सर्वजनकस्त्वष्टा स मूर्द्धनि यज्ञस्य आहवनीये समनक्तु भक्षयतु हविः सहितेनाज्येन देवान् । अनक्तिर्भोजनार्थः । आहवनीयात्मनाऽवस्थितान् भोजयतु देवानित्यर्थः ॥ ४४ ॥

वनस्पतिरवसृष्टः । वनस्पतिर्यूपः अवसृष्टो न अभ्यनुज्ञात इव पाशैर्बद्धमध्वर्युणा पशुमात्मन्या आत्मना समञ्जन् सङ्गमयतु संबध्नातु । कथमिव । शमिता न देवः यथा शमिता देवः अपापः पशुबद्धमात्मना सङ्गमयेदेवं गमयन् सम्बध्नातु । किञ्च इन्द्रस्य जठरमुदरं हव्यैः पृणाः पूरयन् स्वदाति यज्ञं समनक्तु यागं मधुना च रसेन घृतेन च ॥ ४५ ॥

स्तोकानामिन्दुम् । वपास्तोकानां सम्बन्धिनम् । इन्दुं प्रति सोमं प्रति पशोः सोमस्तवस्तदभिप्रायमेतत् । गमनाय यः शूरः विक्रान्तः इन्द्रो वृषायमानः वृष इव आचरन् । वृषभः सर्वलोकत्रासकृत् तुराषाड् तूर्णं सहतेऽभिभवतीति तुराषाट् स इन्द्रः स्वाहाकृतिभिर्माद्यतां तृप्यत्वित्यनुषङ्गः । घृतप्रुषा च घृतावयवेन च मनसा मोदमानाः हृष्यन्तः स्वाहा अविभक्तिको निर्देशः । स्वाहाकृतिभिर्देवाः अमृताः अमरणधर्म्माणः मादयतां तृप्यन्तु ॥ ४६ ॥

आयातु । षट् त्रिष्टुभः । ऐन्द्रस्य पशोर्वपापुरोडाशपशूनां याज्यानुवाक्याः आयातु आगच्छतु इन्द्रः अवसे अवनाय तर्पणाय रक्षणाय वा उप नः समीपेऽस्माकम् । आगतश्चेहास्माभिः स्तुतः

सद्यमात् सहमदनः सहभोजनः अस्तु शूरो विक्रान्तवान् वावृधानः वर्द्धमानः स्वबलैः । तविषीर्यस्य पूर्वीर्द्यौर्न । तविषीति बलनाम । तवतेर्वृद्धिकर्म्मणः यस्येन्द्रस्य बलानि पूर्वीः पूर्वाणि वृत्रबधादीनि द्यौरिवोच्चैः कथ्यन्ते यश्चास्मदीयं क्षत्रम् । अभिभूति अभिभवितृ अभिभवनशीलमपि पुष्यात् पुष्णाति स आयात्विति सम्बन्धः ॥ ४७ ॥

आ न इन्द्रः । आ उपसर्गो यासदित्यनेन सम्बध्यते । आयातु नः अस्माकम् । इन्द्रः दूरात् द्युलोकादेः आ न आसात् आयासत् आयातु अस्माकम् । आसादित्यन्तिकनाम । आगच्छतु चास्माकं समीपात् । यद्यपि दूरे यद्यप्यन्तिक इत्यर्थः । अभिष्टिकृत् अभिलखितपदार्थकारी अवसे अवनाय अन्नाय वा उग्रः अतिविषमः एत्य च ओजिष्ठेभिः ओजस्वितमैर्बलैः उपेतः नृपतिः वज्रबाहुः सङ्गे संग्रामे समत्सु एतदपि संग्रामनाम । एकस्मिन्संग्रामे बहुषु च युगपदुपस्थितेषु तुर्वणिः तूर्णवनिः तूर्णं सम्भक्ता । पृतन्यून् संग्रामयतः शत्रून् ॥ ४८ ॥

आ न इन्द्रः । आयातु नः अस्मानभि इन्द्रः हरिभिः हरितवर्णैरश्वैः अच्छा अच्छाभेरर्थे । स च अस्मानभ्येत्य अर्वाचीनः अर्वागञ्चनः अवसे अन्नाय राधसे धनाय च दानार्थम् । एत्य च तिष्ठाति तिष्ठतु वज्री वज्रायुधः मघवा धनवान् विरप्शी विरमणशीलः इमं यज्ञम् । अनुप्रति नः अस्माकं वाजसातौ अन्नलम्भजने निमित्तभूते ॥ ४९ ॥

त्रातारमिन्द्रं त्रातारं संरक्षितारम् । इन्द्रं यतः कथयन्ति अवितारं यतः इन्द्रं कथयन्ति हवे हवे सुहवम् । आह्वाने आह्वाने शोभनाह्वानमिन्द्रं यतः कथयन्ति शूरं विक्रान्तं यतः कथयन्ति जनाः अतः ह्वयामि शक्रं शक्रं पुरुहूतं पुरुहूतं बहुभिराहूतम् इन्द्रं स च आहूतः सन् स्वस्ति नः अविनाशमस्माकं मघवा धनवान् धातु दधातु इन्द्रः ॥ ५० ॥

इन्द्रः सुत्रामा । इन्द्रः साधुत्राणः स्ववान् धनवान् अवोभिरन्नैः सुमृडीकः शोभनसुखकारी भवतु विश्ववेदाः सर्वधनः । किञ्च बाधताम् अपगमयतु द्वेषः दौर्भाग्यं च अभयं च करोतु । तत्प्रसादाच्च सुवीर्यस्य शोभनस्य वीरेभ्यो हितस्य धनस्य पतयः स्याम ॥ ५१ ॥

तस्य वयम् । तस्येन्द्रस्य सुत्राम्णः वयं सुमतौ कल्याणमतौ

स्याम यज्ञियस्य यज्ञसम्पादिनः। अपि चास्य भद्रे भन्दनीये सौमनसे कल्याणे मनसि स्याम । वयं ततोऽनुग्राह्य बुद्धौ वर्त्तमानानामस्माकं स सुत्रामा शोभनत्राणः स्ववान् धनवान् इन्द्रः अस्मे अस्मत्तः आराच्चित् दुरादपि द्वेषो दौर्भाग्यं सनुतरिति निर्णीतान्तर्हितनाम । अन्तर्हितं कृत्वा युयोतु । यद्वा दूरेऽपि वर्त्तमानं दौर्भाग्यं प्रकटं कृत्वा युयोतु पृथक्करोतु ॥ ५२ ॥

आ मन्द्रैः । बृहत्यैन्द्री । आ याहि मन्द्रैः मन्दनीयैः हे इन्द्र हरिभिः हरितवर्णैरश्वैर्मयूररोमभिः बभ्रवो ह्यश्वाः । किञ्च मा त्वा केचिन्नियमन्विं न पाशिनः मा च त्वाम् आगच्छन्तं केचिन्निबध्नन्तु कथमिव विमिव । विरिति शकुनिनाम । शकुनिरिवं पाशिनः प्रतिबन्धका आखेटिनः । अथ केचित्परिपन्थिनो भवेयुः अतिधन्वेव तान् इहि अतीत्य तान् इहि आगच्छ । कथमिव धन्व इव यथा धन्व निरुदकेदशं परित्यज्यान्यत आगच्छेयुः एवमागच्छेयुः एवमागच्छेति ॥ ५३ ॥

एवेत् । ऐन्द्री त्रिष्टुप् । यमेवमनेन प्रकारेण इत् पादपूरणः । इन्द्रं वृषणं वर्षितारं वज्रबाहुं वसिष्ठासः वसिष्ठस्यापत्यानि बहूनि । यद्वा वस्तृतमाः ऋषयः । अभ्यर्चन्ति अभिष्टुवन्ति अर्कैर्मन्त्रैः स नः सोऽस्मभ्यं स्तुतः वीरवत् साधुपुत्रसंयुक्तं धातु दधातु धन गोमच्च गोसंयुक्तं च । एवं त्रिभिः पादैः इन्द्रमभिस्तुत्याथेदानीं ये यजन्ति तानाह यूयं पात पालयत स्वस्तिभिरविनाशैः सदाकालं नः अस्मान् ॥ ५४ ॥

इत उत्तरं त्रिपशून् आ अध्यायात् । तत्र द्वादशाद्या आप्रियः अनुष्टुभोऽश्विसरस्वतीन्द्रदेवत्याः समिद्धः सन्दीप्तोऽग्निः हविः क्षपणसमर्थः । हे अश्विनौ किञ्च तप्तो घर्मः प्रवर्ग्यः विराट् सुतः सोमोऽभिषुतः । किञ्च दुहे प्रपूरयति च धेनुः सरस्वती सोमं शुक्रं शुक्रमिह इन्द्रियं वीर्यम् ॥ ५५ ॥

अश्विनावध्वर्यू तयोर्होता कथयति यज्ञसम्पत्तिम् । तनूपा भिषजा । तनूनां पातारौ भिषजौ च सुते अभिषुते सोमे अश्विनौ उभौ सरस्वती च मध्वा रसेन रजांसि पूरयन्तीन्द्रोपभोगाय । लोका रजांस्युच्यन्ते इतीह लोकवचनो रजःशब्दः । इन्द्रियं वीर्यमिन्द्राप्यायनार्थं पथिभिर्मार्गैरुद्रिक्तं वहान् वहन्तु ॥ ५६ ॥

इन्द्रायेन्दुम् । इन्द्रार्थमिन्दुं सोमं सरस्वती अभिषुणोति इति वाक्यपरिपूर्त्तिः । नराशंसेन यज्ञेन सहिता नग्नहुं किण्वम् । किञ्च आदधातां सुरायाम् अश्विनौ मधुरसरूपं भेषजरूपं च भिषजौ वैद्यौ सुते अभिषुते सोमे इन्द्रायेत्यनुषङ्गो विभक्तिव्यत्ययेन ॥ ५७ ॥

आजुह्वाना । आह्वयन्ती सरस्वती इन्द्राय इन्द्रियाणि चक्षुः-प्रभृतीनि वीर्यं च वीरकर्म इडाभिर्यज्ञियाभिर्हेतुभूताभिः अश्विनौ च इषं सहायभूतामुपादाय सन्दधुः ऊर्ज्जं च तदुपसेचनं दध्यादि संदधुः सन्दधुश्च रयिं धनम् ॥ ५८ ॥

अश्विना नमुचेः । यमश्विनौ नमुचेराहृत्य सुतमभिषुतं सोमं शुक्रम् अमलिनं परिस्रुता सहितं स्थापितवन्तौ सरस्वती तमाभ-रत् सरस्वती तमेवाहरत् बर्हिषा स्तरणार्थेन सहिता इन्द्राय पा-तवे इन्द्रपानार्थम् ॥ ५९ ॥

कवष्यो न । यज्ञगृहद्वार उच्यन्ते । कवष्यो न । कुष् निष्कर्षे । समुच्चयार्थीयो नकार अस्यामृचि । कुषिताः ससुषिराश्च व्यञ्चनव-त्यश्च अश्विभ्यां चाध्वर्युभ्यां सहिता दुरः द्वारः दिशः द्वार्भिदिशो लक्ष्यन्ते इत्यत एवमुक्ताः । इन्द्रो न इन्द्रश्च यासु द्वाःसु व्यवस्थितः रोदसी द्यावापृथिव्यौ उभेऽपि दुहे दोग्धि कामांश्च सरस्वती दुहे इन्द्रायायाताय यज्ञगृहद्वार इदं नाम कुर्वन्निति शेषः ॥ ६० ॥

उषासा नक्तम् । उषा आदित्यप्रभा नक्तं रात्रिः हे अश्विनौ उषा च रात्रिश्च दिवा अहनि इन्द्रम् इन्द्रियैः वीर्यैः समञ्जाते संप्र-क्षयंश्च सायं च इन्द्रियैः समञ्जाते सातत्याभिप्रायं सञ्जानाने ए-कमतीभूते उषा च रात्रिश्च सुपेशसा स्वरूपे शुल्केन उषाः कृष्णेन रात्रिः । किमिन्द्रम् उषा च रात्रिश्च केवले एव समञ्जाते नेत्याह सरस्वत्या च सह समञ्जाते ॥ ६१ ॥

पातं नः । पालयतं नः अस्मान् हे अश्विनौ दिवा अहनि पाहि पालय च नक्तं हे सरस्वति युवां च हे दैव्यौ होतारौ भिषजौ पालयतम् इन्द्रं सचा सहेत्यर्थः । सुते अभिषुते सोमे ॥ ६२ ॥

तिस्रस्त्रेधा । तिस्रो देव्यः त्रेधा त्रिप्रकाराः सरस्वती मध्य-स्थाना भारती आदित्यप्रभा द्युस्थाना इडा पृथिवीस्थाना । एता-स्त्रिषु स्थानेषु स्थिताः अश्विनौ च तीव्रं पटुतमं परिस्रुता सहितं सोममिन्द्राय सुषुवुः अभिषुतवन्तः मदं तर्प्पणम् ॥ ६३ ॥

अश्विना भेषजं मधु एतदाख्यातस्यादधुरिति परिणामः । के अ-दधुः इन्द्रे अश्विनौ सरस्वती त्वष्टा च प्रयाजदेवताः । किमदधुः । अश्विनौ तावद् भेषजं मधुरूपम् । भेषजं नः अस्मत्सम्बन्धिनी स-रस्वती । त्वष्टा च यशः श्रियं रूपं च । कस्मिन्नवसरे । सुतेऽभि-षुते सोमे ॥ ६४ ॥

ऋतुथेन्द्रः । ऋतावृतौ काले काले । इन्द्रायेति विभक्तिव्यत्य-यः । वनस्पतिः शशमानः स्तुवन् परिस्रुता साधनभूतया कीलाल-मन्नरसं दुहे इत्यनुषङ्गः । अश्विभ्यां च सहिता मधु दुहे दोग्धि धेनुः भूत्वा सरस्वती ॥ ६५ ॥

गोभिर्न । गोप्रभृतिभिश्च पशुभिः सोमं सहितं मासरेण परि-स्रुता च कथंभूतं सुतं मधु अभिषुतं मधु स्वादं हे अश्विनौ युवां समधातम् । कस्मिन् समधातम् इन्द्रे । किं केवलावश्विनौ सम-धातं नेत्याह सरस्वत्या सह स्वाहाकृतिभिः प्रयाजेन सार्द्धम् ॥६६ ॥

अश्विना हविः । तिस्रो वपानां याज्यानुवाक्या अनुष्टुभः । एकै-काश्विसरस्वतीन्द्रदेवत्याः । आजभ्रिरे इत्यनेनाख्यातपदेन सर्वाणि पदानि संबध्यन्ते । अश्विनौ सरस्वती च आजभ्रिरे आजह्रुः हविः इन्द्रियं शुक्रम् अमलिनं वसु धनं मघं महनीयम् । कुत आजभ्रिरे इन्द्राय ॥ ६७ ॥

यमश्विना । यमिन्द्रमश्विनौ च सरस्वती च हविषा वर्द्धयन् स विभेद । भिदिर्विदारणे । विदारितवान् बलं मेघं वृणोतेर्वलः मघं महनीयं नमुचौ आसुरे सचा सह सचाशब्दः सहवच-नः । तद्योगाच्च विभक्तिव्यत्ययः । नमुचिना आसुरेण सह बलं वि-भेदेति ॥ ६८ ॥

तमिन्द्रं तमुक्तगुणमिन्द्रं पशवः कर्माङ्गभूता गोमेषाजाः स-चा सहभूताः अश्विनौ च उभौ सरस्वती च दधानाः धारयन्तः । अभ्यनूषत । नूषतिर्वृद्ध्यर्थः । अभिवर्द्धयन्ति केन हविषा कस्मिन् यज्ञे इन्द्रियैर्वीर्यैः ॥ ६९ ॥

य इन्द्रे तिस्रोऽनुष्टुभः । पशुपुरोडाशानां याज्यानुवाक्या इन्द्र-सवितृवरुणदेवत्याः सर्वा ये इन्द्रे इन्द्रियं दधुः स्थापितवन्तः सविता वरुणः भगः भगशब्देनात्रेन्द्रो लक्ष्यते ते यजमानेऽपि वीर्यं दध-तीति वाक्यपरिपूर्त्तिः । स सुत्रामा यश्च इन्द्रः हविष्पतिः हविषः

स्वामी । यजमानमिति विभक्तिव्यत्ययः । सश्चत सचतामिति पुरुषवचनव्यत्ययः । एवमेते विषमा मन्त्रा लक्षणया व्याख्येयाः ॥७० ॥

सविता वरुणः । द्वितीयोऽर्द्धर्चः । स प्रथमो व्याख्येयः । यत्र आदत्त नमुचेः सकाशात् वसु धनं बलमिन्द्रियं सुत्रामा इन्द्रः तत्सवितृवरुणप्रभृतयः पशुपुरोडाशमन्त्रदेवता दधत् ददातु यजमानाय दाशुषे हवींषि दत्तवते ॥ ७१ ॥

वरुणः क्षत्रम् । वरुणः सविता च सुत्रामा च दधानाः इन्द्रे यजमाने वा यज्ञं सौत्रामणीम् आशत व्याप्तवन्तः । किं किं दधानाः । वरुणः क्षत्रमिन्द्रियं च सविता भगेन धनेन सहितां श्रियं सुत्रामा यशसा सहितं बलम् ॥ ७२ ॥

अश्विना गोभिः । तिस्रोऽनुष्टुभः । हविषां याज्यानुवाक्या अश्विसरस्वतीन्द्रदेवत्या अश्विनौ सरस्वती च गोभिः गोप्रभृतिभिः पशुभिः इन्द्रियम् । इन्द्रियेणेति विभक्तिव्यत्ययः वाक्यसंबन्धात् । अश्वेभिः अश्वदक्षिणाभिः वीर्यं बलं वीर्येण बलेन हविषा पशुपुरोडाशेन इन्द्रं यजमानं च अवर्द्धयन् ॥ ७३ ॥

ता नासत्या । तौ नासत्यौ न असत्यौ सत्यावेव सुपेशसा सुरूपौ हिरण्यवर्त्तनी हिरण्यदानोपलक्षितपन्थानौ नरा नृगुणयुक्तौ नराकारौ वा । सरस्वती च हविष्मती हविषा संयुक्ता । एते त्रयः पादाः परोक्षकृताः । चतुर्थस्तु पादः प्रत्यक्षकृतः अतो वाक्यभेदः तौ नासत्यावुक्तगुणौ सरस्वती च कर्म्मसु वर्त्तमानान् नः अस्मान् अवत अवत्विति पुरुषव्यत्ययः ततो द्वितीयवाक्यम् । इन्द्र कर्म्मसु नोऽवत । हे इन्द्र त्वमपि कर्म्मसु वर्त्तमानान्नोऽस्मान् अवत अवेति वचनव्यत्ययः ॥ ७४ ॥

ता भिषजा । तौ भिषजौ सुकर्म्मणा कल्याणकर्माणौ सा च सुदुघा साधुदोहना सरस्वती स च वृत्रहा शतक्रतुः बहुकर्मा इन्द्राय दधुः ददुः इन्द्रियं वीर्यम् । ननु स वृत्रहा शतक्रतुः इन्द्राय दधुरिन्द्रियमितीन्द्रम् इन्द्राय ददातीत्येतन्नोपपद्यते । कल्पान्तरीण इन्द्र एतत्कल्पप्रभवाय ददातीत्यदोषः विभवो वा देवाः अचिन्त्यशक्तयः एकधा द्विधा बहुधा भवेयुः एवमप्यत्र विरोधाः परिहर्त्तव्याः ॥७५॥

ग्रहाणां याज्यानुवाक्ये । युवं सुरामम् । पुत्रमिव पितरौ । अनुष्टुप्त्रिष्टुभौ अश्विसरस्वतीन्द्रदेवत्ये । युवं युवामिति विभक्तिव्य-

त्यय: । सरस्वती हि तृतीया । युवं यूयं हे अश्विसरस्वत्यः सुरामं सुरामयं नमुचौ आसुरे वर्त्तमानं सचा सह विपिपानाः विविधं पिबन्त्यः कर्मसु वर्त्तमानाः इन्द्रमवत पालयत ॥ ७६ ॥

पुत्रमिव पितरौ । व्याख्यातम् ॥ ७७ ॥

पशुस्त्विष्टकृतो यस्मिन्नश्वासो ऽहाव्यग्न इति । जगतीत्रिष्टुभावाग्नेय्यौ । यस्मिन्नग्नौ अश्वासः ऋषभासः उक्षाणः वशाः मेषा अवसृष्टासः अवदायावदाय चतुरवत्तेन निक्षिप्ताः आहुताः आदायादाययाहुताः तस्मै अग्नये कीलालपे कीलालमन्नरसं पिबतीति कीलालपाः सोमपृष्ठाय सोमाहुतयो यस्य पृष्ठे हूयन्ते वेधसे मेधाविने हृदा मतिं जनय हृदयं मतिपूर्वकं स्तोमं जनय चारुमग्नये॥७८॥

अहाव्यग्ने । यस्य ते तव आस्ये मुखे हे अग्ने अहावि हुतं मया हविः । कथमिव स्रुचीव घृतं यथा स्रुचि नित्यावस्थितं घृतं चम्बीव सोमः चम्बामिव । यथा च अधिषवणचर्मणि नित्यावस्थितः सोमः एवं तं त्वां ब्रवीमि वाजसनिं वाजमन्नं सम्भजते वाजसनिं रयिं धनम् । अस्मे अस्मासु सुवीरं शोभना वीरा अस्मिन्निति सुवीरं प्रशस्तं धेहि स्थापय यशसं च यशो वै सोमो राजा बृहन्तं महान्तम् ॥ ७९ ॥

अश्विना तेजसा । एकादशर्चं शस्त्रम् आद्यानुष्टुप् अन्या च अश्विसरस्वतीन्द्रदेवत्या च द्वितीयाद्यास्त्रयस्तृचो गायत्र्यश्विसरस्वतीन्द्रदेवत्याः यथासंख्यम् । अश्विना अश्विनौ । तेजसा सह चक्षुः । प्राणेन सह वीर्यम् । सरस्वती वाचा च सह बलेन च सह चेन्द्रः । एवमेताः प्रतिनियतचक्षुरादिदानद्वारेण इन्द्राय दधुः ददुः इन्द्रियम् ॥ ८० ॥

गोमदू षु । हे नासत्यौ गोमद्धनं संगृह्य । उसू पादपूरणौ । अश्ववच्च धनं संगृह्य यातं गच्छतम् । हे अश्विनौ वर्त्तिः वर्त्तन्या प्रसिद्धेन मार्गेण हे रुद्रा रुगणद्रवणमार्गौ नृपाय्यं प्रति सदेवा नराः यस्मिन् यज्ञे पिबन्ति स नृपाय्यः ॥ ८१ ॥

नयत्परः । यत् न परः असम्बद्धः नचान्तरः सम्बद्धः आदधर्षत् आधृष्णुयात् अभिभूय गृह्णीयात् । वृष एव सुवर्षणं वृष्टिर्ययोर्वसु धनं तौ तथोक्तौ । यद्वा वृष्टिद्वारेण त्रासयितारौ दुःशंसः दुष्टमसद्वृत्तं शंसति यः स तथोक्तः मर्त्यः मनुष्यः रिपुः शत्रुः ॥ ८२ ॥

ता नः । यौ युवामुक्तगुणौ तौ नः अस्माकम् । आवोढम् । आवहतं हे अश्विनौ रयिं धनं पिशङ्गसन्दृशम् । अनेकरूपसन्दर्शनं हे धिष्ण्या धिष्ण्याग्निरूपौ धातारौ वा । वरिवोविदम् । धनविशेषणमेतत् । वरिव इति धननाम । यल्लब्धं सदन्यस्य धनलाभस्य हेतुभूतं भवति ॥ ८३ ॥

पावका नः । या पावका पावयित्री सरस्वती वाजेभिरन्नैः वाजिनीवती अन्नवती सा नः अस्माकं यज्ञं वष्टु कायतां यो हि यदिच्छति स तदागच्छति धियावसुः कर्म्मधना ॥ ८४ ॥

चोदयित्री । या चोदयित्री प्रेरयित्री सुनृतानां शोभनानाम् ऋतानां वचसां अर्थीलक्षणस्य वाग्विभवस्य चोदयित्रीत्यर्थः । सचेतन्ती चेतयमाना शोभनानां मतीनां यज्ञं दधे धारयति सरस्वती ॥ ८५ ॥

महो अर्णः । या महत् अर्णः महान्तमुदकसङ्घातं सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्म्मणा प्रज्ञया वा मध्यस्थाना नदी वा । या च धियः बुद्धीः विश्वाः सर्वाः सर्वप्राणिष्ववस्थिताः विराजति । दीप्त्यर्थः अन्तर्भावितण्यर्थश्च द्रष्टव्यः । विविधं दीपयति विकाशयति तां वयं स्तुमः इति शेषः ॥ ८६ ॥

इन्द्रायाहि । इन्द्र आयाहि आगच्छ चित्रभानो चित्रदीप्ते । किं कारणं सुता अभिषुता इमे सोमाः त्वायवः त्वां कामयमानाः । यदि नामेन्द्रोऽस्मान् पिबेदित्येवं कामयमाना इत्यर्थः । नचाभिषुता एव केवलं किं तर्हि अण्वीभिस्तना पूतासः । अण्वी इत्यङ्गुलिनाम । अङ्गुलिभिः तना च धनदानेन च पूताः पवित्रीकृताः । यद्वा तनशब्देन दशापवित्रमभिधीयते । अङ्गुलिभिर्दशापवित्रेण च पूता इत्यर्थः ॥ ८७ ॥

इन्द्रायाहि । इन्द्र अगच्छ धिया स्वकीयया बुध्या ईषितः प्रेरितः अनन्यप्रेरित इत्यभिप्रायः । विप्रजूतः जूतिर्गतिः प्रीतिर्वा मेधाव्यनुगतः सुतावतः अभिषुतवतो यजमानस्य यज्ञम् । किं कारणमिति चेत् उप समीपे ब्रह्माणि हवींषि वाघतो वर्त्तन्ते उपपुरोडाशान् ऋत्विजो वर्त्तन्त इत्यर्थः । वाघत इति ऋत्विग्नामसु पठितम् ॥ ८८ ॥

इन्द्रायाहि । हे इन्द्र आगच्छ तूतुजान । तूतुजान इति क्षिप्रनाम । क्षिप्रं त्वरमाणः । कुत्रागच्छेति । उपब्रह्माणि उपहवींषि प्रति हे

हरिवः हरी अश्वौ तद्वानिन्द्रः । मतुवसो रुः संबुद्धाविति रुत्वम् । एत्य च सुते अभिषुते सोमे दधिष्व उदरेण धारयस्व नः अस्माकं स्वभूतं च नः अन्नं हविः सोमलक्षणम् ॥ ८९ ॥

अश्विना पिबताम् । अश्विनौ पिबतां पिबतो मधु मधुरस्वादोपलक्षितं सोमं सरस्वत्या च सजोषसा समानसोमपानौ इन्द्रश्च सुत्रात्मा वृत्रहा पिबन्तु मधु ततो भूयोभूयः अश्विसरस्वतीन्द्राः जुषन्तां सेवन्तां सौम्यं मधु ॥ ९० ॥

इति श्री-उव्वटकृतौ मन्त्रभाष्ये विंशतितमोऽध्यायः ॥ २० ॥

